# पञ्चपादिका ।

## श्रीपद्मपादाचार्यविरचिता ।



काशीस्थराजकीयसंस्कृतपाठशालायामध्यापकेन
श्रीरामशास्त्रिभागवताचार्येण संशोधिता ।



काश्याम् ।

ई· जे· लाजरसकम्पन्याख्येन स्वमुद्रालये मुद्रिता ।

संवत् १९४८ ।

# PREFACE.

The so called Panchapâdikâ of Padmapâda, the oldest of the commentaries on *S*ankara's *S*ârîrakabhâshya, is a fragment of a fragment. Its title would imply that the work treated of the first five pâdas of the Bhâshya; but, as a matter of fact, all the MSS. hitherto examined of it and its related glosses* end abruptly with the *chatuhsûtrî i. e.* Adhy I. pâda 1, sû. 1-4. The fragmentary condition of the MSS. has not been satisfactorily explained. Beyond all doubt Padmapâda intended a complete treatise. See below, p. 29, ll 3, 4: 'svâvasara eva &c.,' which refers to Adhy. II, 2, 32: and p. 33. ll 12, 13: 'tathaika &c.,' referring to III. 3, 53: and p. 75. ll 16, 17, where further general indications are given. But neither in these contexts, nor in the usual lengthy discussion of *maṅgalâcharaṇa* (where, perhaps, it would have been more appropriate) is any explanation offered by the gloss writers as to the incompleteness of their original. Vidyâraṇya also furnishes no clue in his Vivaraṇaprameyasaṅgraha.† We are thus thrown back on what seems to be the later and doubtful testimony of one Mâdhava,‡ who in his *S*aṅ-

* The Panchapâdikâvivaraṇa, Tattvadîpana and Bhâvaprakâsikâ. An edition of the former work, with extracts from the latter, now appears in this Series.

† Will appear shortly.

‡ As against the identification of this Mâdhava with the renowned Vidyâraṇya, see Burnell's Vaṃsabrâhmaṇa pref. p. xx and note. K. T. Telang discusses the historical value of the two *S*aṅkaravijayas in Ind. Antiq. Vol. V. pp. 287 *et seq.* He writes (*ibid* p. 293):—'A work on *S*aṅkara's victories is ascribed to another of *S*aṅkara's pupils—Chidvilâsa—who, I take it, is identical with Chitsukha. Not having access to the work, I am unable to say whether it was really written by a pupil of *S*aṅkara's, or whether the author was one of the "ancient poets" to whom Mâdhava refers. Nevertheless, the fact that it is attributed to Chitsukha induces me to express the hope that somebody may undertake to edit and publish it.' I regret having failed to procure a MS. of Chidvilâsa's *S*aṅkaravijaya. However, I may remark that this Chidvilâsa or Chitsukha (even if the names be taken as identical), a pupil of *S*aṅkarâchârya, cannot, though Telang's last sentence seems to imply that he may, be identical with the Chitsukha who wrote the well known Chitsukhî. For the Chitsukhî frequently quotes from the Nyâyakandalî of *S*rîdhara (*vide* Pandit, New Series Vol. V. pp. 335, 399, *et passim*), and must therefore be later than 991 A. D., the date of the Kandalî, cf. Bühler, Bo. R. A. S. Journal, 1877, p. 76.

karavijaya industriously recites the story of the Pa*n*chapâdî. To enable the reader to judge for himself the outlines are here given.

Sure*s*varâchârya, one of *S*ankara's pupils, seeks and receives permission to write a vârttika on the master's Bhâshya. [xiii. *s*l. 1-3]. Other disciples secretly approach the master and express their disapproval of Sure*s*vara's attempt, on the ground of his being devoted to karmakâṇḍa and, therefore, unfitted for the task of commenting on j*n*ânakâṇḍa. They ask that another disciple Padmapâda, whose sannyâsin name is Sanandana, may be entrusted with the task. [*s*l. 5-21]. Permission is granted. But Padmapâda must not write a vârttika to which Sure*s*vara is pledged. [*s*l. 43]. Sure*s*vara is told in private of the objections brought against him. Urged by the master to write an original work on Vedânta, he produces the Naishkarmyasiddhi * : not, however, without giving vent to a curse on any future commentary, 'which shall never pass current in the world.' [*s*l. 44-53]. Padmapâda writes a ṭîkâ 'the former portion of which is known as the Pa*n*chapâdikâ, and the latter portion as the Vṛitti.' [*s*l. 70-71] † The master consoles Sure*s*vara. Of Padmapâda's work, five pâdas—in fact, only the portion on the first four sûtras shall be known in time to come. Reappearing in this world as Vâchaspati, ‡ Sure*s*vara shall write a complete and lasting ṭîkâ. [*s*l. 72-73]. Padmapâda's ṭîkâ is burnt in his uncle's house. [xiv. *s*l. 160]. *S*ankara recites it from memory, while the delighted Padmapâda writes it down. [*s*l. 167-170].

We need not entirely discredit the above story. The jealousy of fellow disciples, or the accident of fire, might well injure or destroy a book. But there is a decidedly suspicious ring about the curse of Sure*s*vara and the prophecy of *S*ankara. Further, against *s*l. 70-71 we must balance the (fact already noticed) that

---

* Sure*s*vara nowhere mentions these circumstances.

† "यत्पूर्वभागः किल पञ्चपादिका तच्छेषगा वृत्तिरिति प्रथीयसी" ॥

‡ "वाचस्पतित्वमधिगम्य वसुन्धरायाम्" । 'Vâchaspatitva' may of course imply nothing more than mastery of style or language; but the personal reference to Vâchaspati, the writer of the Bhâmati, would be irresistible to Mâdhava, the self-styled *navakâlidâsa* (cf. K. T. Telang, Ind. Antiq. Vol. I. p. 299).

the gloss writers, and Vidyâraṇya, do not even hint at the work having ever existed in a complete form. Their silence may not be conclusive; but it becomes all the harder to explain on the assumption that the Mâdhavîya*s*añkaravijaya furnishes an authentic and well known history of the Pa*n*chapâdikâ.

Our text is based on 4 MSS.: (*a*) No. 208, Benares Sanskrit College Catalogue, not dated, accurate; (*b*) No. 195, Ben. Sans. Coll. Cat. not dated, but older than (*a*), accurate; (*c*) lent by Mahâmahopâdhyâya Gañgâdhara *S*âstrî, not dated, but a copy of the Vivaraṇa in the same hand bears date Samvat 1822: both copies have evidently been revised by a pandit; (*d*) lent by Pandit Vibhavarâma of Benares, not dated, this too has been carefully revised by a pandit, who has appended occasional notes in the margin.

The Pa*n*chapâdikâ is a marked instance of a book more known than read. Though constantly quoted as the Ṭîkâ κατ' ἐξοχήν in later polemical works, the book itself is now rarely studied, having been supplanted by the Bhâmatî and the other commentaries on the Bhâshya. But as a full and, in some respects, original exposition of that Vedânta crux, adhyâsa (see appended notice in Sanskrit), our work has merits of its own which, together with its historical interest, will, it is hoped, justify its publication for the first time. A closer discussion of its contents is reserved for the introduction to the English translation now being prepared.



# ॥ भूमिका ॥

अथेयं पञ्चपादिका श्रीमद्भगवच्छङ्कराचार्यपादप्रणीतब्रह्मसूत्रभाष्यस्य व्याख्या तत एव साक्षादधिगतसकलवेदान्ततत्त्वेन तच्छिष्यमुख्येन श्रीपद्मपादाचार्येण विरचिता गभीरार्थपरिपूरिता जिज्ञासुजनोपयोगाय प्रकाश्यते। अस्याः किल पञ्चैव पादाः प्रचरेयुस्तत्रापि आद्या चतुःसूत्र्येव प्रसिध्येदिति भगवता शङ्करभगवत्पादेन रचयिताऽभिदध इति वर्णयन्ति स्म शङ्करदिग्विजये माधवाचार्याः। तदादेशानुसारेणैव चिरमन्विष्यमाणापि चतुःसूत्रीतो नाधिकाऽद्यावुपलभ्यते व्याख्या चास्या विवरणनाम्नी तावत्येव। अस्यां च प्रथमसूत्रे चत्वारि वर्णकानि द्वितीये चैकं तृतीये द्वे चतुर्थे च द्वे इत्येवं नव वर्णकानि विषयभेदेन तत्तद्विषयोपयुक्तविविधयुक्तिसंसक्तानि विहितानि सुखप्रतिपत्तये ग्रन्थकृता।

अयं च पद्मपादाचार्यो विष्णववतारो विमलनामकब्राह्मणपुत्रः शङ्करदिग्विजये स॰३–श्लो २ अस्यैवाहणावतारत्वमिति ३–६ मतान्तरत्वेन पूर्वोक्त्या तद्विरोधपरिहारश्च तत्रैव टीकायाम्। अस्यैव भगवता शङ्कराचार्येण चतुर्थाश्रमं प्रापितस्य सनन्दननामलाभ इति ६–१४ अस्याचार्यमुख्यशिष्यत्वमिति ६–६६ अयं चाचार्यात्त्रिवारं भाष्यमपठदिति ६–६८ तस्यैवाचार्येण गङ्गापारादाहूतस्य गङ्गयाविर्भावितेषु पद्मेषु पादविन्यासपूर्वकमागतस्योपदर्शितप्रभावेण पद्मपादनामलाभ इति ६–७१ अयमेव सुरेश्वराचार्येण ब्रह्मसूत्रभाष्ये विधित्सितं वार्तिकमनिच्छद्भिः शिष्यैरर्थितेन गुरुणोक्तो ब्रह्मसूत्रभाष्ये टीकां कृतवान् इति १३–५=७३ अयं च तीर्थयात्रासमये स्वमातुलगृहे निहितस्वकृतपुस्तकोऽसूयया स्वगृहेण सह दाहिते तस्मिन्नाचार्येण सदयं पञ्चपादिकां यथापूर्वानुपूर्वीकां ग्राहित इति १४–१=६६ काश्मीरमण्डले शारदापीठमारुरुक्षत आचार्यस्य हस्तावलम्बं चक्र इति १६–८२ एवमाचार्यप्रत्यासन्नतमो महाप्रभावश्चायम् ॥

अत्रोपलभ्यमानानां बहूनां विषयाणां भामतीरत्नप्रभादौ संवादेऽपि भगवतः पद्मपादाचार्यस्य भाष्यकारसमानकालीनत्वात्तदुत्तरकालीनत्वाच्चान्येषां व्याख्याकृतां प्रथममनेनैवोहिता उपपत्तयोऽन्यैः संगृहीता इत्यत्र न

कस्यापि विमतेरवकाशः । नानाशास्त्रीयविषयग्रथनं युक्तिगाढत्वमुपपादनप्रौढिश्चात्र न कस्य सूक्ष्मदृशः श्लाघागोचरः । अस्मादेव प्रबन्धात् स्वस्वमतिसंमानितेषु संगृहीतेष्वपि व्याख्याकृद्भिर्विषयेषु प्रसिद्धेष्वपि सन्ति भूयांसस्तादृशा विषया ये विहायामुं प्रबन्धं नान्यत्रोपलभ्यन्ते तथा विशदरूपेण यत्प्रकाशनफलकोऽयं चिराद्वेदान्तरसिकैरन्विष्यमाणस्य प्रबन्धरत्नस्य मुद्रणप्रयासो निराकुर्यात् पिष्टपेषणधियं परीक्षकाणाम् । तथा हि । प्रथमे वर्णके अविरोधात्पूर्वं समन्वयप्रदर्शने उपपत्तिस्तमःप्रकाशयोर्विरोधस्य स्वरूपप्रदर्शनं नैमित्तिकस्यापि व्यवहारस्य नैसर्गिकत्वोपपादनमध्यासस्य सद्भावात्पार्थक्येन संभवप्रदर्शने बीजमध्यासस्य स्मृतित्वनिराकरणावसरे स्मरणाभिमानप्रमोषस्यानुपपत्तिप्रदर्शनं निरधिष्ठानभ्रमनिराकरणमात्मनः स्वयंप्रकाशत्वेपि तथाविद्यासंभवोऽहमिति प्रतीतेर्देहेन्द्रियाद्यविविक्तात्ममात्रविषयकत्वोपपादनमर्थक्रियाकारित्वरूपसत्तानिरास इत्यादयः । द्वितीयवर्णके धर्मजिज्ञासाप्रतिज्ञानात्पृथक् ब्रह्मजिज्ञासारम्भप्रतिज्ञायामभ्यधिकाशङ्का तन्निराकरणं तत्प्रसङ्गागताश्च विषयाः । तृतीयवर्णके च ब्रह्मज्ञानस्य शास्त्रप्रयोजनत्वे आक्षेपप्रकारस्तन्निराकरणं तत्प्रसङ्गेन वेदाध्ययनविधावर्थावबोधस्याधिकारहेतुत्वाभावे ऽध्ययने प्रवृत्त्यनुपपत्तिशङ्का तस्य सविस्तरं निराकरणमित्यादयः । चतुर्थवर्णके ऽपि आत्मस्वरूपविप्रतिपत्तिनिरूपणावसरे विप्रतिपत्तिबीजानि चेतनस्य भोक्तृत्वानुपपत्तौ युक्तिः शरीरे भोगासंभवोपपादनशैलीत्यादयः । अष्टमवर्णके तृतीयसूत्रोदाहृतश्रुतिव्यतिरिक्तश्रुत्युदाहरणे भाष्यकृतस्तात्पर्यनिरूपणम् । नवमे वर्णके च श्रवणादीनां स्वरूपनिरूपणं स्वरूपपराणामपि वेदान्तानां प्रामाण्ये शास्त्रकारान्तरानुमतिप्रदर्शनमित्यादयो ये व्याख्यान्तरेषु सूचिता अपि प्रतिपादनशैलीवैलक्षण्येन युक्तिभेदैश्चैतद्ग्रन्थैकपर्यालोचनावधारणीया इति निश्चेष्यन्ते सकलमिमं प्रबन्धं सावधानं विचारयद्भिः शास्त्ररसिकैः । संस्कृतप्रौढप्रबन्धसकलतात्पर्यावगमसामर्थ्यविकलानां च विचिन्वतां प्राचीनविद्वदूहितान् विषयान् प्रमोदयिता कृत्स्नार्थावेदनेन नातिचिरात् काशीसंस्कृतपाठशालाप्रधानाध्यक्षश्रीमदार्थरवेनिससाहिबैर्महता परिश्रमेण निर्मितमवतरणम् । तदेवं चिराद्विपश्चिद्भिरन्विष्यमाणः प्रौढतमो ऽयं प्रबन्धः प्रमोदयतु दर्शनदर्शनलालसास्पृहणीयचेतसः सचेतस इति शुभम् ॥

# अथ शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १० | शीर्षके | अन्तस्त्वोक्तिः | अन्तस्त्वोक्तिः |
| " | २ | निदर्श | निदर्शो |
| " | ११ | ज्ञाप्यते नेदं | ज्ञाप्यतो नेदं |
| ११ | २४ | तस्येव | तस्यैव |
| १२ | १४ | बीजाङ्कुरा | बीजाङ्कुरा |
| " | २३ | कुटस्थ | कूटस्थ |
| १३ | १७ | लाकिक | लौकिक |
| " | २० | सम्यकज्ञानं | सम्यग्ज्ञानम् |
| १६ | १६ | न व | नव |
| १७ | २ | किं वृत्तस्य | किंवृत्तस्य |
| " | २२ | रूपत्वे नात्म | रूपत्वेनात्म |
| २१ | ४ | पद्मपराग | पद्मराग |
| २२ | १६ | रस्त्यत्राह | रस्ति । अत्राह |
| २४ | २० | विषयताफल | विषयता फल |
| २५ | शीर्षके | नीलादि | नीलादि |
| २६ | १७ | दमल्लक्षण | दसल्लक्षण |
| " | २० | ज्ञानाजन | ज्ञानजन |
| २७ | २१ | त्या | त्यथा |
| ३० | ११ | अर्थवि | अर्थावि |
| ३३ | १३ | करणारम्भे | करणारम्भे |
| ३४ | १६ | सर्वथा | सर्वथा |
| ३५ | ११ | कथत्वादा | कथत्वादी |
| ३६ | ३ | मिथ्यागो- | मिथ्या गो- |
| ३७ | २२ | आत्मकत्व | आत्मकत्व- |
| ३८ | १३ | विपर्यय | विपर्य |
| " | १४ | बोध्यते। तत्र | बोध्यते तत्र |
| ३९ | ११ | द्वे | द्वे |
| ४० | ३ | सारिता ऽविद्या | सारिताऽविद्या |
| " | १४ | रूपण | रूप |
| ४१ | | शीर्षके निवृत्ति | निवृत्ति |
| ४२ | २७ | शुकल्पे | ऽकल्पे |
| ४३ | ११ | र्था | र्था- |
| ४४ | ६ | शब्दे- | शब्दो |
| " | २४ | मर्थनकं | मनर्थकं |
| ४६ | ६ | शेषताकृतं | शेषता । कृतं |
| ४८ | १ | किमपरमम | किमपरम |
| " | १६ | वेदार्थो ऽस्ति | वेदार्थोऽस्ति |
| " | " | जैमनिना । | जैमिनिना न्यायान्तर |
| " | २४ | प्रामा | प्रमा |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४६ | ५ | ध्यनय | ध्ययन |
| ५१ | ५ | काय | कार्य |
| ५७ | ४ | स्वासिद्धेः । | स्वासिद्धेः विधितो |
| " | २५ | उपसर्यैरिति | उपसर्पैरिति |
| ५८ | ५ | भवति । यदि | भवति यदि |
| " | ८ | ऽपेक्षितनव्यः | ऽपेक्षितव्यः |
| " | १६,२० | तादर्थ्यविगमा- | तादर्थ्याऽवगमा- |
| " | " | विग्रे | विग्रये |
| " | २४ | जिज्ञायाः | जिज्ञासायाः |
| ५६ | ३ | शब्दापादान | शब्दोपादान |
| ६० | १ | ष्ठानान्सर्य | ष्ठानानन्तर्य |
| " | १३ | सर्वथां | सर्वथा |
| ६२ | १ | निश्रेयस | निःश्रेयस |
| " | २ | स्वसंविद्यः | स्वसंवेद्यः |
| " | ८ | वैलक्षण्य | वैलक्षण्यम् |
| ६३ | ६ | चिन्त्वा | चिह्ना |
| " | १५ | अतः शब्दो | अतःशब्दो |
| ६४ | १५ | ह्यस्यपतः | ह्यस्य यतः |
| " | २० | तत्कर्तृकताज्ञान | तत्कर्तृकता ज्ञान |
| ६६ | १० | भवति | भवति । |
| " | १२ | जिज्ञासेति । | जिज्ञासेति |
| " | १३ | प्रदर्शनार्थ | प्रदर्शनार्थम् । |
| ६७ | ५ | सितत्यम् । | सितव्यम् । |
| " | " | क्रिया नियतापि | क्रियानियतापि |
| " | २० | कर्तव्यतामीम | कर्तव्यता मीम |
| " | ८ | कस्मात् | कस्मात् । |
| ६८ | ६ | तदर्थो | तदर्थो |
| ६९ | १६ | पक्षता | पक्षता |
| ७० | ३ | निर्दिष्टेः | निर्दिष्टे |
| ७१ | २२ | सिद्धस्य | सिद्धस्य । |
| " | २५ | स्तौति | स्तौति |
| ७४ | २२ | हं विषय | हंविषय |
| ७५ | १७ | विचार्य- | विचार्य |
| ७७ | ८ | मुपचक्रम | मुपक्रम |
| " | १४ | अनेन कर्तु | अनेककर्तु |
| ७८ | ११ | जन्मे | जन्म |
| ८१ | १ | दिषया | विषया |
| " | १६ | निर्णये | निर्णय- |
| ८२ | ४ | कल्पम् प्रत्यय | कल्पप्रत्यय |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| " | ८ | त्वाच्च | त्वाच्च । |
| ८३ | १६ | वस्तुत्य | वस्तुन्य |
| " | १८ | र्थाबाध | र्थबाध |
| " | २० | इत्येत | इत्यत |
| ८४ | २० | दानि | र्दानि |
| ८५ | १ | सिद्धर्थ | सिद्धार्थ |
| ८७ | २३ | मानम् । | मानम् |
| ८८ | ३ | पर्यपव | पर्यव |
| " | ६ | विधायत | विर्धीयत |
| " | १० | गतर्म | गतकर्म |
| ८९ | ८ | क्रियाते | क्रियातो |
| " | " | त्यांति | प्रीति |
| " | १६ | नित्यन्व | नित्यत्वे |
| ८९ | १८ | न वर्त्तन्त | नायर्तन्त |
| " | २४ | दशन | दर्शन |
| ९० | ८ | मांत्तंन | मोत्तं न |
| " | २५ | संपादादिरूपेहा | संपदादिरूपे हो |
| ९१ | १ | नरूप | निरूप |
| " | ६ | पत्यु | पत्यु |
| " | ७ | ततज् | तज् |
| " | " | तद धि | तदधि |
| " | १२ | नरा | निरा |
| " | १६ | भेदे | भेदो |
| " | २४ | दिना । | दिना |
| ९२ | १४ | व्यांक्त | व्यक्ति |
| " | २४ | तद् द्वारेण | तद्द्वारेण |
| ९४ | ६ | त्यर्हे | त्यर्हे |
| " | १२ | तथा प्र | तथाप्र |
| " | १८ | त्तरम् । | त्तरम् |
| ९५ | ५ | शून्ये | शून्ये |
| ९६ | १३ | तव्भ | तव्भू |
| ९७ | २ | ऽस्ति क्रिया | ऽस्तिक्रिया |
| " | ३ | र्भवन्त्तिपर | र्भवन्तीपर |
| " | " | मत | मतं |
| " | २१ | दिवनञ | दिव नञ |
| ९९ | ९ | वात्तत् | वात्तत्· |
| " | १५ | दादिद्वि | दादिवद्वि |
| १०० | ४ | अतः स । | अतः स |

इति ।



# वर्णक्रमानुसारिसूचीपत्रम्।

# पञ्चपादिका

अनाद्यानन्दकूटस्थज्ञानानन्तसदात्मने ।
अभूतद्वैतजालाय साक्षिणे ब्रह्मणे नमः ॥ १ ॥

नमः श्रुतिशिरःपद्मषण्डमार्तण्डमूर्तये ।
बादरायणसंज्ञाय मुनये शमवेश्मने ॥ २ ॥

नमाम्यभोगिपरिवारसम्पदं निरस्तभूतिमनुमार्द्धविग्रहम् ।
अनुग्रमुन्मृदितकाललाञ्छनं विना विनायकमपूर्वशङ्करम् ॥ ३ ॥

यद्वक्त्रमानससरःप्रतिलब्धजन्मभाष्यारविन्दमकरन्दरसं पिबन्ति ।
प्रत्याशमुन्मुखविनीतविनेयभृङ्गास्तान् भाष्यवित्तकगुरून् प्रणमामि मूर्द्धा ॥४॥

पदादिवृन्तभारेण गरिमाणं बिभर्ति यत् ।
भाष्यं प्रसन्नगम्भीरं तद्व्याख्यां श्रद्धया ऽऽरभे ॥ ५ ॥

युष्मदस्मत्प्रत्ययगोचरयोरित्याद्यहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार इत्यन्तं भाष्यम् अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इत्यनेन भाष्येण पर्यवस्यच्छास्त्रस्य विषयः प्रयोजनं चार्थात् प्रथमसूत्रेण * सूचिते इति प्रतिपादयति । गतञ्च तस्माद् ब्रह्म जिज्ञासितव्यमित्यादिभाष्ये स्पष्टतरं प्रदर्शयिष्यामः ।

अत्राह । यद्येवमेतावदेवास्तु भाष्यम् अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति † तत्रानर्थहेतोः प्रहाणाय इति प्रयोजननिर्देशः आत्मैकत्वविद्याप्रतिपत्तय इति विषयप्रदर्शनम् किमनेन युष्मदस्मदित्यादिनाऽहं मनुष्य इति देहेन्द्रियादिष्वहंममेदमित्यभिमानात्मकस्य लोकव्यवहारस्य अविद्यानि ‡ मित्तत्वप्रदर्शनपरेण भाष्येण । उच्यते । ब्रह्मज्ञानं हि सूचितमनर्थहेतुनिवर्हणम् । अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वभोक्तृत्वम् तद्यदि वस्तुकृतम् न ज्ञानेन निवर्हणीयम् यतो ज्ञान-

* सूत्रित इति २ पु० । † अत्रेति ३ पु० ।
‡ निमित्तत्वेत्युपक्रान्त्यंतमास्ते २ पु० ।

मज्ञानस्यैव निवर्त्तकम् तद्यदि कर्तृत्वभोक्तृत्वमज्ञानहेतुकं स्यात्ततो ब्रह्मज्ञानमनर्थहेतुनिर्बर्हणमुच्यमानमुपपद्येत * । तेन सूत्रकारेणैव ब्रह्मज्ञानमनर्थहेतुनिर्बर्हणं सूचयता अविद्याहेतुकं † कर्तृत्वभोक्तृत्वं प्रदर्शितं भवति । अतस्तत्प्रदर्शनद्वारेण सूत्रार्थोपपत्त्युपयोगितया सकलतन्त्रोपोद्घातः प्रयोजनमस्य भाष्यस्य । तथा चास्य शास्त्रस्य ऐदम्पर्य्यं सुखैकतानसदात्मककूटस्थचैतन्यैकरसता संसारित्वाभिमतस्यात्मनः पारमार्थिकं स्वरूपमिति वेदान्ताः पर्यवस्यन्तीति प्रतिपादितम् । तच्चाहं कर्त्ता सुखी दुःखीति प्रत्यक्षाभिमतेन अबाधितकल्पेनावभासेन विरुद्ध्यते । अतस्तद्विरोधपरिहारार्थं ब्रह्मस्वरूपविपरीतरूपमविद्यानिर्मितमात्मन इति यावन्न प्रतिपाद्यते ‡ तावज्जरद्गवादिवाक्यवदनर्थकं प्रतिभाति § अतस्तन्निवृत्त्यर्थमविद्याविलसितमब्रह्मस्व || रूपत्वं ¶ मात्मन इति प्रतिपादयितव्यम् । वक्ष्यति चैतदविरोधलक्षणे जीवप्रक्रियायां सूत्रकारस्तद्गुणसारत्वादित्यादिना ।

यद्येवमेतदेव प्रथममस्तु । नैवम् अर्थविशेषोपपत्तेः । अर्थविशेषे हि समन्वये प्रदर्शिते तद्विरोधाशङ्कायां तन्निराकरणमुपपद्यते । अप्र ** दर्शिते पुनः समन्वयविशेषे तद्विरोधाशङ्का तन्निराकरणञ्च निर्विषयं स्यात् । भाष्यकारस्तु तन्सिद्धमेवादिसूत्रेण सामर्थ्यबलेन †† सूचितं सुखप्रतिपत्त्यर्थं वर्णयति इति न दोषः ॥

ननु च ग्रन्थकरणादिकार्यारम्भे कार्यानुरूपमिष्टदेवतापूजानमस्कारेण बुद्धिसन्निधापिताथवृद्ध्यादिशब्दैर्दध्यादिदर्शनेन वा कृतमङ्गलाः शिष्टाः ‡‡ प्रवर्तन्ते शिष्टाचारश्च नः प्रमाणम् । प्रसिद्धं च मङ्गलाचरणस्य विघ्नोपशमनं प्रयोजनम् । महति च निःश्रेयसप्रयोजने §§ ग्रन्थमारभमाणस्य विघ्नबाहुल्यं सम्भाव्यते प्रसिद्धञ्च श्रेयांसि बहुविघ्नानीति । विज्ञायते |||| च तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युरिति येषां च यन्न प्रियं ते तद्विघ्नन्तीति प्रसिद्धं लोके । तत्कथमुल्लङ्घ्य शिष्टाचारमकृतमङ्गल एव ¶¶ विस्रब्धं भाष्यकारः प्रववृते ।

---

* उपपद्यतं-इति २ पु० । † कप्रत्ययो नास्ति १ पु० । ‡ प्रदर्श्यतं-इति २ पु० ।
§ अतः शब्दो नास्ति २ पु० । || स्वशब्दो नास्ति २ पु० । स्वरूपमिति ३ पु० ।
¶ त्वप्रत्ययोनास्ति १ पु० । ** प्रशब्दो नास्ति २ पु० । †† सूचितमिति ३ पु० ।
‡‡ प्रवर्त्तन्ते शिष्टा इति १ पु० । §§ मोक्षरूपप्रयोजननिमित्तमित्यर्थः ।
|||| तस्मादित्यादिश्रुतितोऽपि विशेषेण ज्ञायते न केवलं लोकत एव संभाव्यत इति भावः ।
¶¶ विस्रब्धमिति २ पु० ।

अत्र उच्यते । युष्मदस्मदित्यादि तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिरित्यन्तमेव * भाष्यम् । अस्य चायमर्थः सर्वोपप्लवरहितो विज्ञानघनः प्रत्यगर्थ इति तत्कथञ्चन परमार्थत एवम्भूते वस्तुनि रूपान्तरवदवभासो मिथ्येति कथयितुं तदन्यपरादेव भाष्यवाक्यान्निरस्तसमस्तोपप्लवं चैतन्यैकतानमात्मानं प्रतिपद्यमानस्य कुतो विघ्नोपप्लवसम्भवः । तस्मादग्रणीः शिष्टाचारप्रतिपालने † भाष्यकारः ‡ ॥ विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायामिति ।

कोऽयं विरोधः कीदृशो वा इतरेतरभावोऽभिप्रेतो यस्यानुपपत्तेस्तमःप्रकाशवदिति निदर्शनम् । यदि तावत् सहानवस्थानलक्षणो विरोधः ततः § प्रकाशभावे तमसो भावानुपपत्तिः । तदसत् । दृश्यते हि मन्दप्रदीपे वेश्मन्यऽस्पष्टं रूपदर्शनमितरत्र च स्पष्टम् । तेन ज्ञायते मन्दप्रदीपे वेश्मनि || तमसोऽपीषदनुवृत्तिरिति । तथा छायायामपि औष्ण्यं तारतम्येनोपलभ्यमानम् आतपस्यापि तत्रावस्थानं सूचयति । एतेन शीतोष्णयोरपि युगपदुपलब्धेः सहावस्थानमुक्तं वेदितव्यम् । उच्यते । परस्परानात्मतालक्षणो विरोधः । न जातिव्यक्त्योरिव परमार्थतः परस्परसम्भेदः सम्भवतीत्यर्थः । तेन इतरेतरभावस्य इतरेतरसम्भेदात्मकत्वस्यानुपपत्तिः । कथम् । स्वतस्तावद्विषयिणश्चिदेकरसत्वान्न युष्मदंशसम्भवः । अपरिणामित्वान्निरञ्जनत्वाच्च न परतः । विषयस्यापि न स्वतश्चित्सम्भवः समत्वाद् विषयत्वहानेः । न परतश्चितेरप्रतिसङ्क्रमत्वात् । तद्धर्माणामपि सुतरामिति । एवं स्थिते स्वाश्रयमतिरिच्य धर्माणामन्यत्र भावानुपपत्तिः सुप्रसिद्धा इति दर्शयति । इतिशब्दो हेत्वर्थः । यस्मादेवमुक्तेन न्यायेनेतरेतरभावासम्भवो ऽतो ऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके इत्यस्मत्प्रत्यये योऽनिदमंशश्चिदेकरसः तस्मिंस्तद्बलनिर्भासिततया लक्षणतो युष्मदर्थस्य मनुष्याभिमानस्य सम्भेद इवावभासः स एव अध्यासः । तद्धर्माणाञ्चेति । यद्यपि विषयाध्यासे तद्धर्माणामप्यर्थसिद्धो ऽध्यासस्तथापि विनापि विषयाध्यासेन तद्धर्माध्यासो बधिरादिषु श्रोत्रादिधर्मेषु

---

* मङ्गलवाक्यमितिशेषः मङ्गलत्वमेवोपपादयति अस्येत्यादिना ।

† परिपालनदति २ पु० ।

‡ भगवान्भाष्यकार इति ३ पु० क्रतमस्ति ।

§ प्रकाशस्येति २ पु० ।

|| वेश्मनीति ३ पु० नास्ति ।

विद्यते इति पृथग्धर्मग्रहणम् । तद्विपर्य्ययेण विषयिणस्तद्धर्माणाञ्चेति । चैतन्यस्य तद्धर्माणां चेत्यर्थः । ननु विषयिणश्चिदेकरसस्य कुतो धर्मा ये विषये ऽध्यस्येरन् । उच्यते । आनन्दो विषयानुभवो नित्यत्वमिति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्ते इति न दोषः ।

अध्यासो नाम अतद्रूपे तद्रूपावभासः स मिथ्येति भवितुं युक्तमिति । मिथ्याशब्दो द्व्यर्थो ऽपह्नववचनो ऽनिर्वचनीयतावचनश्च । अत्र* अयमपह्नववचनः मिथ्येति भवितुं युक्तम् अभाव एवाध्यासस्य युक्त इत्यर्थः । यद्यप्येवं तथापि नैसर्गिकः प्रत्यक्चैतन्यसत्तामात्रानुबन्धी अयम् युष्मदस्मदोरितरेतराध्यासात्मको ऽहमिदं ममेदमिति लोकव्यवहारः । तेन यथास्मदर्थस्य सद्भावो नापलम्भमर्हति एवमध्यासस्यापि इत्यभिप्रायः † । लोक इति मनुष्यो ऽहमित्यभिमन्यमानः प्राणिनिकाय उच्यते । व्यवहरणं व्यवहारः लोक इति व्यवहारो लोकव्यवहारः मनुष्योऽहमित्यभिमान इत्यर्थः । सत्यानृते मिथुनीकृत्येति । सत्यमनिदं चैतन्यम् अनृतं युष्मदर्थः स्वरूपतोऽप्यध्यस्तस्वरूपत्वात् । अध्यस्य मिथुनीकृत्येति च क्त्वाप्रत्ययो न पूर्वकालत्वमन्यत्वं च लोकव्यवहारादङ्गीकृत्य प्रयुक्तः भुक्त्वा व्रजतीतिवत्क्रियान्तरानुपादानात् । अध्यस्य नैसर्गिकोऽयं लोकव्यवहार इति स्वरूपमात्रपर्यवमानात् । उपसंहारे च ‡ एवमनादिरनन्तो नैसर्गिको ऽध्यास इति तावन्मात्रोपसंहारात् । अतश्चैतन्यं पुरुषस्य स्वरूपमितिवद्व्यपदेशमात्रं द्रष्टव्यम् । मिथ्याज्ञाननिमित्त इति । मिथ्या च तदज्ञानं च मिथ्याज्ञानम् । मिथ्येति अनिर्वचनीयता उच्यते अज्ञानमिति च जडात्मिका ऽविद्याशक्तिः ज्ञानपर्युदासेनोच्यते । तन्निमित्तः तदुपादान इत्यर्थः ।

कथं पुनः § नैमित्तिकव्यवहारस्य नैसर्गिकत्वम् । अत्रोच्यते । अवश्यमेषा अविद्याशक्तिर्बाह्याध्यात्मिकेषु वस्तुषु तत्स्वरूपसत्तामात्रानुबन्धिनी अभ्युपगन्तव्या अन्यथा मिथ्यार्थावभासानुपपत्तेः । सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति प्रमाणवैकल्यादेव तदग्रहणसिद्धेः । रजतप्रति-

* अत्रेति पुस्तकान्तरे नास्ति ।

† इत्यभिप्राये लोक इतीति ३ पु· ।

‡ चैवमयमनादिरिति २ पु· ।

§ नैमित्तिकस्य लोकव्यवहारस्येति २, ३ पु· पाठः ।

भासात् प्रागूर्द्ध्वं च सत्यामपि तस्यां स्वरूपग्रहणादर्शनात् । अतस्तत्र * रूपान्तरावभासहेतुरेव केवलम् । प्रत्यगात्मनि तु चितिस्वभावत्वात्स्वयम्प्रकाशमाने ब्रह्मस्वरूपानवभासस्य अनन्यनिमित्तत्वात् तद्गतनिसर्गसिद्धाऽविद्याशक्तिप्रतिबन्धादेव तस्य अनवभासः । अतः सा प्रत्यक्चिति ब्रह्मस्वरूपावभासं प्रतिबध्नाति अहङ्काराद्यतद्रूपप्रतिभासनिमित्तं च भवति सुषुप्त्यादौ चाहङ्कारादिविक्षेपसंस्कारमात्रशेषं स्थित्वा पुनरुद्भवतीति । अतो नैसर्गिकोऽप्यहङ्कारममकारात्मको मनुष्याद्यभिमानो लोकव्यवहारो मिथ्याज्ञाननिमित्त उच्यते न पुनरागन्तुकत्वेन । तेन † नैसर्गिकत्वं नैमित्तिकत्वेन न विरुध्यते ।

‡ अन्योन्यधर्मांश्चेति । पृथग्धर्मग्रहणं धर्ममात्रस्यापि कस्यचिदध्यास इति दर्शयितुम् । इतरेतराविवेकेनेति । एकतापत्त्यैवेत्यर्थः । कस्य धर्मिणः कथं कुत्र § चाध्यासो धर्ममात्रस्य वा क्वाध्यास इति भाष्यकारः स्वयमेव वक्ष्यति । अहमिदं ममेदमित्यध्यासस्य स्वरूपं दर्शयति । अहमिति तावत्प्रथमोऽध्यासः । ननु अहमिति निरंशं चैतन्यमात्रं प्रतिभासते नांशान्तरमध्यस्तमनध्यस्तं वा । यथा अध्यस्तांशान्तर्भावस्तथा दर्शयिष्यामः । ननु इदमित्यहङ्कर्तुर्भोगसाधनं ‖ कार्यकरणसङ्घातोऽवभासते ममेदमिति चाहङ्कर्त्रा स्वत्वेन तस्य सम्बन्धः तत्र न किञ्चिदध्यस्तमिव दृश्यते । उच्यते । यदैवाहङ्कर्ता अध्यासात्मकस्तदैव तदुपकरणस्यापि तदात्मकत्वसिद्धिः । न हि स्वप्नावाप्तराज्याभिषेकस्य माहेन्द्रजालनिर्मितस्य वा राज्ञो राज्योपकरणं परमार्थसद्भवति । एवमहङ्कर्तृत्वप्रमुखः क्रियाकारकफलात्मको लोकव्यवहारोऽध्यस्तो नित्यशुद्धबुद्धमुक्तस्वभावे आत्मनि अतस्तादृग्ब्रह्मात्मानुभवपर्यन्तात्ज्ञानादनर्थहेतोरध्यासस्य निवृत्तिरुपपद्यते इति तदर्थविषयवेदान्तमीमांसारम्भ उपपद्यते ।

आह कोऽयमध्यासो नामे ¶ त्याद्यारभ्य अध्याससिद्धिपरं भाष्यम् । तत्रापि कथम्पुनरविद्यावद्विषयाणीत्यतः प्रागध्यासस्वरूपतत्सम्भावनाय

स्वरूपेति पुस्तकान्तरे ।
नैसर्गिकत्वनैमित्तिकत्वे न विरुध्येते इति पुस्तकान्तरपाठः ।
अन्योन्यं धर्मांश्चेतरेति ३ पु० । § चाध्यास इति पु० ।
कार्यकारणसंघातइति २ पु० । ¶ इत्याद्यध्यासेति पु०

तदादि * तत्सद्भावनिर्णयार्थमिति विभागः । यद्येवं † तत्स्वरूपतत्सम्भावनोपन्यासः पृथग्न कर्त्तव्यः । न हि अनिर्ज्ञातरूपमसम्भाव्यमानं च निर्णीयते चेति दुःसम्पादं विशेषतोऽध्यक्षानुभवनिर्णये । उच्यते । न देहे ‡ न्द्रियादिष्वहंममाभिमानवत एव प्रमातृत्वप्रदर्शनमात्रेण तस्य अध्यासात्मकता सिद्ध्यति । तत्कस्य हेतोः । लोके शुक्तिरजतद्विचन्द्रादिवदध्यासानुभवाभावात् । बाधे हि सति स भवति नेह स विद्यते । तस्मादध्यासस्य लक्षणमभिधाय तल्लक्षणव्याप्तस्य सद्भावः कथनीयः ।

नन्वेवमपि तल्लक्षणस्य वस्तुनः सद्भावमात्रमिह कथनीयम् । न हि यत्र यस्य सद्भावः प्रमाणतः प्रतिपन्नस्तत्रैव तस्य असम्भावनाशङ्का येन तद्विनिवृत्तये तत्सम्भावनाऽपरा कथ्येत । सत्यमेवम् । विषयविशेषस्तु प्रयत्नेन अन्विच्छद्भिरपि अनुपलभ्यमानकारणदोषे विज्ञाने ऽवभासमानो ऽपि पूर्वप्रवृत्तेन सकललोकव्यापिना निश्चितेन प्रमाणेनासम्भाव्यमानतया अपोद्यमानो दृश्यते तद्यथौत्पातिकः सवितरि § शुषिर्यथा वा माहेन्द्रजालकुशलेन प्रासादादेर्निगरणमेवमविषये ऽसङ्गे केनचिदपि गुणादिना अध्यासहेतुना रहिते निष्कलङ्कचैतन्यतया अन्यगतस्याप्यध्यासस्यापनोदनसमर्थेऽध्यासावगमोऽविभाव्यमानकारण ‖ दोषो विभ्रम इत्याशङ्क्येत तन्मा शङ्कीति सद्भावातिरेकेण सम्भवोपि पृथक् कथनीयः । तदुच्यते । आह कोऽयमध्यासो नामेति किंवृत्तस्य प्रश्ने ¶ आक्षेपे च प्रयोगदर्शनादुभयस्य चेह सम्भवात् तन्त्रेण वाक्यमुच्चरितम् ** । तत्रापि †† प्रथमं प्रश्नस्य प्रतिवचनं स्वरूपमाख्याय पुन ‡‡ स्तस्यैव सम्भवमाक्षिप्य प्रतिविधत्ते । तत्रैवम्भूते विषये श्रोतॄणां सुखप्रबोधार्थं व्याचक्षाणाः प्रतिवादिनं तटस्थमिव समुत्थाप्य तेनाक्षिप्तमनेन पृष्टमिति मत्वा प्रत्युक्तम् पुनरसौ स्वाभिप्रायं विवृणोतीति आक्षेपमवतार्य प्रतिविधानं प्रतिपद्यन्ते । सर्वत्रैवंविधे ग्रन्थसन्निवेशे एष एव व्याख्याप्रकारः ।

स्मृतिरूपः परत्र पूर्वदृष्टावभास इति प्रश्नवाक्यस्थितमध्यासमुद्दिश्य लक्षणमभिधीयते । तत्र परत्रेत्युक्तेऽर्थात्परस्य अवभासमानता सिद्धा । तस्य विशेषणं स्मृतिरूपत्वम् । स्मर्यते इति स्मृतिः असञ्ज्ञायामप्यकर्त्तरि कारके

---

* तदादि सर्वं तदिति पुस्तकान्तरे । † तद्रूपेति पु० । ‡ न देहादिष्विति ३ पु० ।
§ सुषिरिति २ पु० । ‖ दोषोऽपीति पु० । ¶ प्रश्ने क्षेपे चेति पु० ।
** उच्चारितमिति १ पु० । †† प्रथममिति पुस्तकान्तरे नास्ति । ‡‡ तस्यैवेति २ पु० ।

जादीनां प्रयोगदर्शनात् । स्मर्यमाणरूपमिव रूपमस्य न पुनः स्मर्यत एव रूपं पुरोऽवस्थितत्वावभासनात्* । पूर्वदृष्टावभास इत्युपपत्तिः स्मृतिरूपत्वे । न हि पूर्वम्† दृष्टरजतस्य‡ शुक्तिसम्प्रयोगे रजतमवभासते । यतोऽर्थान्तरविषयस्य अवभासस्यापि इदमेव§ लक्षणमुक्तं भवति । कथम् । तदुच्यते । स्मृते रूपमिव रूपमस्य न पुनः स्मृतिरेव पूर्वप्रमाणविषयविशेषस्य तथानवभासकत्वात् । कथं पुनः स्मृतिरूपत्वम् । पूर्वप्रमाणद्वारसमुत्पन्नत्वात् । न हि असम्प्रयुक्तावभासिनः पूर्वप्रवृत्ततद्विषयप्रमाणद्वारसमुत्पन्नत्वमन्तरेण समुद्भवः सम्भवति ।

अपर आह ननु अन्यसम्प्रयुक्ते चक्षुषि अन्यविषयज्ञानं‖ स्मृतिरेव । प्रमोषस्तु स्मरणाभिमानस्येन्द्रियादीनां ज्ञानकारणानां केनचिदेव¶ दोषविशेषेण कस्यचिदेवार्थविशेषस्य स्मृतिसमुद्बोधः क्रियते सम्प्रयुक्तस्य च दोषेण विशेषप्रतिभासहेतुत्वं करणस्य विहन्यते । तेन दर्शनस्मरणयोर्निरन्तरोत्पन्नयोः** करणदोषादेव विवेकानवधारणाद् दूरस्थयोरिव वनस्पत्योरनुत्पन्ने एवैक††त्वावभास उत्पन्नभ्रमः । ननु अनास्वादिततिक्तरसस्यापि बालकस्य‡‡ पित्तदोषान्मधुरे तिक्तावभासः कथं स्मरणं स्यात् । उच्यते । जन्मान्तरानुभूतत्वात् । अन्यथाऽननुभूतत्वाविशेषे ऽत्यन्तमसन्नेव कश्चिन्मधुरो रसः किमिति नावभासेत । तस्मात्पित्तमेव मधुरग्रहणे तिक्तस्मृतौ तत्प्रमोषे च हेतुः । कार्यगम्यत्वाद्धेतुभावस्य । एतेन अन्यसम्प्रयोगेऽन्य§§विषयस्य ज्ञानस्य स्मृतित्वतत्प्रमोषौ सर्वत्र व्याख्यातौ द्रष्टव्यौ ।

उच्यते । कोऽयं स्मरणाभिमानो नाम । न तावत् ज्ञानानुविद्धतया ग्रहणम् । न ह्यनिवृत्तस्य ज्ञानस्य ग्राह्यविशेषणतया विषयभावः । तस्माच्छुद्धमेवार्थं स्मृतिरवभासयति न ज्ञानानुविद्धम् । तथा च पदात्पदार्थस्मृतौ न दृष्टो ज्ञानसम्भेदः ज्ञानस्यापि शब्दार्थत्वप्रसङ्गात् । तथैकभागविषया स्मृतिः स सेव्य इति‖‖ ग्राह्यमात्रस्था न ज्ञानपरामर्शिनी । अपि च । भूयस्यो

* अवभासादिति २ पु० । † पुंस इति शेषः । ‡ शुक्तिकेति पु० ।
§ लक्षणमित्युक्तमिति २ पु० । ‖ अन्यविषयं विज्ञानमिति २ पु० ।
¶ एवमिति २ पु० । ** कारणेति २ पु० । †† अनुत्पन्ने एकैकत्वावभास इति ३ पु० ।
‡‡ कप्रत्ययो नास्ति १ पु० । §§ अन्यविषयज्ञानस्य स्मृतितत्प्रमोषाविति १, ३ पु० ।
‖‖ ग्राह्यमात्रावस्था न ज्ञानपरामर्शिनी इति क्वचित् ।

ज्ञानपरामर्शशून्या एव स्मृतयः। नापि स्वगतो ज्ञानस्य स्मरणाभिमानो * नाम रूपभेदोऽवभासते नहि नित्यानुमेयं ज्ञानमन्यद्वा वस्तु स्वत एवं † रूपसम्भिन्नं गृह्यते। अत एवोक्तमनाकारामेव बुद्धिम‡नुमिमीमह इति। अनाकारामनिरूपिताकारविशेषामनिर्दिष्टस्वलक्षणामित्यर्थः। अतो न स्वतः स्मरणाभिमानात्मकता। नापि ग्राह्यविशेषनिमित्तः स्मरणाभिमानः प्रमाणग्राह्यस्यैव अविकलाद्यधिकस्य गृह्यमाणत्वान्नापि फलविशेषनिमित्तः प्रमाणफलविषयमात्रावच्छिन्नफलत्वात्। यः पुनः क्वचित्कदाचिदनुभूतचरे स्मरामि इत्यनुवेधः स वाचकशब्द§संयोजनानिमित्तो यथा साक्षादिमदाकृतौ गौरित्यभिमानः। तस्मात्पूर्वप्रमाणसंस्कारसमुत्थतया तद्विषयावभासित्वमात्रं स्मृतेः। न पुनः प्रतीतितो ऽर्थतो वा अधिकोऽंशोऽस्ति यस्य दोषनिमित्तः प्रमोषः परिकल्प्येत। न चेह पूर्वप्रमाणविषयावभासित्वमस्ति पुरोऽवस्थितार्थप्रतिभासनादित्युक्तम्। अतो नान्यसम्प्रयोगे ऽन्यविषयज्ञानं|| स्मृतिः किन्त्वध्यासः।

नन्वेवं सति वैपरीत्यमापद्यते रजतमवभासते¶ शुक्तिरालम्बनमिति। नैतत् संविदनुसारिणामनुरूपम्। ननु शुक्तेः स्वरूपेणाप्य**वभासने†† संवित्प्रयुक्तव्यवहारयोग्यत्वमेवालम्बनार्थः सैवेदानीं रजतव्यवहारयोग्या प्रतिभासते तत् किमित्यालम्बनं न स्यात्। अथ तथारूपावभासनं शुक्तेः पारमार्थिकमुच्यते। न। यदि पारमार्थिकं नेदं रजतमिति बाधो न स्यात् नेयं शुक्तिरिति यथा। भवति च बाधः‡‡। तस्मान्नैष पक्षः प्रमाणवान्। अथ शुक्तेरेव दोषनिमित्तो रजतरूपः परिणाम§§ उच्यते। एतदप्यसारम्। न हि क्षीरपरिणामे दधनि नेदं दधि इति बाधो दृष्टः। नापि क्षीरमिदमिति प्रतीतिः। इह तु तदुभयं दृश्यते। किञ्च रजतरूपेण चेत्परिणता शुक्तिः क्षीरमिव दधिरूपेण सदा दोषापगमेऽपि तथैव अवतिष्ठेत। ननु कमलमुकुल|||| विकास¶¶ परिणामहेतोः सावित्रस्य तेजसः स्थितिहेतुत्वमपि दृष्टं तदपगमे पुन-

* स्मरणाभिमानात्मको नामेति २ पु०।  † स्वशब्दोऽत्राधिकः २ पु०।
‡ अनुमिमीमह इति उपकल्पयामस्मि २ पु०।  § शब्देति नास्ति २ पु०।
|| अन्यविषयमिति २ पु०।  ¶ शुक्तिकालम्बनमिति पाठान्तरम्।
** अवभासमान इति १ पु०।  †† चित्प्रयुक्तेति नास्ति २ ३ पु०।
‡‡ बाध इति नास्ति २, ३ पु०।  §§ इत्युच्यत इति २ पु०।  |||| कमलमुकुलस्य विकासेति १ पु०।  ¶¶ परिणतेति २, ३ पु०।

मुकुलीभावदर्शनात्तथेहापि स्यात् । न । तथा सति तद्वदेव पूर्वावस्थापरिणामबुद्धिः स्यात् न बाधप्रतीतिः स्यात् * । अथ पुनर्दुष्टकारणजन्यायाः प्रतीतेरेव रजतोत्पाद इति मन्येत । एतदपि † न सम्यगिव । कथम् । यस्याः प्रतीतेस्तदुत्पादस्तस्यास्तावन्न तदालम्बनं पूर्वोत्तरभावेन भिन्नकालत्वात् । न प्रतीत्यन्तरस्य पुरुषान्तरप्रतीतेरपि तत्प्रसङ्गात् । ननु किमिति पुरुषान्तरप्रतीतेरपि तत्प्रसङ्गो ‡ दुष्टसामग्रीजन्मनो हि प्रतीतेस्तदालम्बनम् । मैवम् । प्रतीत्यन्तरस्यापि तद्विधस्य रजतान्तरोत्पादनेनैव उपयुक्तत्वात् प्रथमप्रत्ययवत् । अतोऽनुत्पन्नसममेव स्यात् । तदेवं पारिशेष्यात्स्मृतिप्रमोष एवावतिष्ठेत § ।

ननु स्मृतेः प्रमोषो न सम्भवति इत्युक्तम् । तथा च तन्त्रान्तरीया आहुः ‖ अनुभूतविषयाऽसम्प्रमोषा स्मृतिरिति । का तर्हि ¶ गतिः शुक्तिसम्प्रयोगे रजतावभासस्य । उच्यते । नेन्द्रियजज्ञानात्संस्कारजं स्मरणं पृथगेव स्मरणाभिमानशून्यं समुत्पन्नं किन्तु एकमेव संस्कारसहितादिन्द्रियात् । कथमेतत् । उच्यते । कारणदोषः कार्यविशेषे तस्य शक्तिं निरुन्धन्नेव संस्कारविशेषमप्युद्बोधयति । कार्यगम्यत्वात्कारणदोषशक्तेः । अतः संस्कारदुष्टकारणसंवलितैका सामग्री । सा चैकमेव ज्ञानमेकफलं जनयति । तस्य च दोषोत्थापितसंस्कारविशेषसहितसामग्रीसमुत्पन्नज्ञानस्योचितमेव शुक्तिगतमिथ्यारजतमालम्बनमवभासते । तेन मिथ्यालम्बनं ज्ञानं मिथ्याज्ञानं न स्वतो ज्ञानस्य मिथ्यात्वमस्ति बाधाभावात् । भिन्नजातीयज्ञानहेतुसामग्र्योः ** कथमेकज्ञानोत्पादनमिति चेन्नैष दोषः । दृश्यते हि लिङ्गज्ञा †† नसंस्कारयोः सम्भूय लिङ्गिज्ञानोत्पादनं प्रत्यभिज्ञानोत्पादनञ्च अक्षसंस्कारयोरुभयथापि स्मृतिगर्भमेकमेव प्रमाणज्ञानम् । संस्कारानुद्बोधे तदभावात् । तस्माल्लिङ्गदर्शनमेव सम्बन्धज्ञानसंस्कारमुद्बोध्य तत्सहितं लिङ्गिज्ञानं जनयतीति

---

* स्यादिति नास्ति २, ३ पु॰ । † तदपीति २ पु॰ ।

‡ तद्धिति नास्ति २ पु॰ । § अवतिष्ठते-इति २, ३ पु॰ ।

‖ अनुभूतविषयासम्प्रमोषः स्मृतिरिति पातञ्जलसूत्रपाठः, एवमनुभूतो यो विषयो वृत्तितदारूढार्थौ तयोरसम्प्रमोषो ऽस्तेयमनपहरणं धर्मधर्म्यभेदात्तद्वृत्तौ तदुभयविषयिणीति यावदिति तद्वार्त्तिकञ्च । परन्तु त्रिष्वपि एतत्पुस्तकेषु अनुभूतविषयासम्प्रमोषा-इति पाठस्तत्रानुभूतविषययोरसम्प्रमोषो यस्यामिति बहुव्रीहिविशेषणं द्रष्टव्यम् ।

¶ तर्हिस्थाने पुनरिति २ पु॰ । ** सामग्र्याः कथमेकज्ञानोत्पादकत्वमिति २ पु॰ ।

†† ज्ञानेति २ पु॰ नास्ति ।

वक्तव्यम् । अयमेव च न्यायः प्रत्यभिज्ञाने * ऽपि । न पुनर्ज्ञानद्वये प्रमाण-
मस्ति । तथा भिन्नजातीयज्ञानहेतुभ्यो नीलादिभ्य एकं चित्रज्ञानं निदर्शनीयम् ।
तत्र लैङ्गिकज्ञानप्रत्यभिज्ञाचित्रज्ञानानामदुष्टकारणारब्धत्वाद् यथार्थमेवाव-
भासः इह तु कारणदोषादतथाभूतार्थावभास इति विशेषः । एवञ्च सति
नानुभवविरोधः प्रतिभासमानस्य रजतस्यैवावलम्बनत्वात् । अतो मायामयं
रजतम् । अथ पुनः पारमार्थिकं स्यात् सर्वैरेव † गृह्येत । यतो न हि
पारमार्थिकं रजतं कारणदोषं स्वज्ञानोत्पत्तावपेक्षते । यद्यपेक्षेत तदा ‡ तद-
भावे न तत्र ज्ञानोत्पत्तिरालोकाभाव इव रूपे । मायामात्रत्वे तु मन्त्राद्युप-
हतचक्षुष इव दोषापहत § तज्ज्ञानकारणा एव पश्यन्तीति युक्तम् । किञ्च । नेदं
रजतमिति बाधो ऽपि मायामयत्वमेव सूचयति । कथम् । तेन हि तस्य
निरूपाख्यतापादनपूर्वकं मिथ्यात्वं ज्ञाप्यते । नेदं रजतं मिथ्यैवाभासिष्टेति ।
न च तत् केनचिद्रूपेण रूपवत्त्वे ऽवकल्पते सम्प्रयुक्तशुक्तिवन्नि‖ रस्यमान-
विपर्ययज्ञानवच्च । ननु न व्यापकमिदं लक्षणम् स्वप्नशोकादावसम्भवात् ।
न हि स्वप्नशोकादौ केनचित्सम्प्रयोगो ऽस्ति येन परत्र परा ऽवभासः स्यात् ।
अत एव च मनोनिमित्तकारणाभावात् स्मृतिरेव न स्मृतिरूपता । अत्रोच्यते । न
तावत् स्मृतित्वमस्य परोक्षा ¶ र्थावभासनात् । ननु स्मृतिरूपत्वमपि नास्ति
पूर्वप्रमाणसंस्कारमात्रजन्यत्वात् । अत्रोच्यते । उक्तमेतत्पूर्वप्रमाणविषयाव-
भासित्वमात्र स्मृतेः स्वरूपमिति । तदिह निद्रादिदोषोपप्लुतं मनो ऽदृष्टादिस-
मुद्बोधितसंस्कारविशेष ** सहकार्यनुरूपं मिथ्यार्थविषयं ज्ञानमुत्पादयति तस्य
च तदवच्छिन्नापरोक्षचैतन्यस्थाविद्याशक्तिरालम्बनतया विवर्तते । नन्वेवं
सत्य ऽन्तरेव स्वप्नार्थप्रतिभासः स्यात् । को वा ब्रूते नान्तरिति । ननु
बहिष्ठ इव देशो ऽनुभूयते स्वप्नेऽपि जागरण इव न तदन्तर †† नुभवाश्रयत्वे स्वप्नार्थ-
स्योपपत्तिः । ननु देशो ऽपि तादृश एव कुतस्तत्सम्बन्धाद्विच्छेदो ऽवभासते
अयमपि तद्व्यपरो दोषः । नैष ‡‡ दोषो जागरणे ऽपि प्रमाणज्ञानादन्तरपरोक्षानु-

* प्रत्यभिज्ञाने ऽपीति २ पु० ।
† तच्छब्दो ऽत्राधिकः २ पु० ।
‡ तदा शब्दो नास्ति २ पु० ।
§ दोषोपहृतेति २ पु० ।
‖ निरस्यमानविपर्ययेति १ पु० ।
¶ ऽर्थप्रतिभासनादिति २ पु० ।
** सहकार्यनुरूपमिति २ पु० ।
†† अनुभावाश्रयत्वे-इति १ पु० ।
‡‡ न दोष इति २ पु० ।

नामादिषु ब्रह्मदृष्टिर्मानसक्रिया न ज्ञानम्। अध्यासविषये ऽन्यवादिसंवादप्रदर्शनम्।

भवान्न विषयस्था ऽपरोक्षता भिद्यते। एकरूपप्रकाशनात्। अतो ऽन्तरपरोक्षानुभवावगुण्ठित एव जागरणे ऽप्यर्थो ऽनुभूयते ऽन्यथा जडस्य प्रकाशानुपपत्तेः। यथा तमसा ऽवगुण्ठितो घटः प्रदीपप्रभावगुण्ठनमन्तरेण न प्रकाशीभवत्येवम्। यः पुनर्विच्छेदावभासः स जागरे ऽपि मायाविजृम्भितः सर्वस्य प्रपञ्चजातस्य चैतन्यैकाश्रयत्वात्तस्य च निरंशस्य प्रदेशभेदाभावात्। प्रपञ्चभेदेनैव हि तत्कल्पितावच्छेदं सदवच्छिन्नमिव बहिरिवान्तरिव * प्रकाशते। अथवा दिगाकाशौ मनोमात्रगोचरौ सर्वत्राध्यासाधारौ विद्येते इति न परत्रेति विरुध्यते। कथं तर्हि नामादिषु ब्रह्माध्यासः। किमत्र कथम्। न तत्र कारणदोषो नापि मिथ्यार्थावभासः। सत्यम्। अत एव चोदनावशादिच्छातो ऽनुष्ठेयत्वान्मानसी क्रियैषा न ज्ञानम्। ज्ञानस्य हि † दुष्टकारणजन्यस्य विषयो मिथ्यार्थः। न हि ज्ञानमिच्छातो जनयितुं निवर्तयितुं वा ‡ शक्यं § कारणैकायत्तत्वादिच्छानुप्रवेशानुपपत्तेः। ननु स्मृतिज्ञानमाभोगेन जन्यमानं मनोनिरोधेन च निरुध्यमानं दृश्यते। सत्यम्। न स्मृत्युत्पत्तिनिरोधयोस्तयोर्व्यापारः किन्तु कारणव्यापारे तत्प्रतिबन्धे च चक्षुष इवो ‖ न्मीलननिमीलने न पुनर्ज्ञानोत्पत्तौ व्यापार इच्छायाः। तस्माद् ब्रह्मदृष्टिः केवला ऽध्यस्यते चोदनावशात्फलायैव मातृबुद्धिरिव रागनिवृत्तये ¶ परयोषिति। तदेवमनवद्यमध्यासस्य लक्षणं स्मृतिरूपः परत्र पूर्वदृष्टावभास इति॥

तं केचिदित्यादिनाऽध्यासस्वरूपे मतान्तरमुपन्यस्यति स्वमतपरिशुद्धये। कथमन्यत्र शुक्तिका ** दावन्यधर्मस्यार्थान्तरस्य रजतादेर्ज्ञानाकारस्य बहिष्ठस्यैव वा ऽध्यास इति वदन्ति। केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहणनिबन्धनो भ्रम इति। यत्र यस्याध्यासस्तयोर्विवेकस्याग्रहणात्तन्निबन्धनो ऽयमेकत्वभ्रम इति वदन्तीत्यनुषङ्गः। अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते इति। यत्र शुक्तिकादौ यस्य रजतादेरध्यासस्तस्यैव शुक्तिशकलादेर्विपरीतधर्मत्वस्य रजतादिरूपत्वस्य कल्पनामविद्यमानस्यैवावभासमानतामाचक्षते सर्वथापि त्विति, स्वमतानुसारित्वं

---

* अन्तरिव चेति २ पु०। † हि शब्दो नास्ति २ पु०। ‡ वा स्थाने च शब्दः २ पु०।
§ स्वकारणेति २ पु०। ‖ उन्मीलने निर्मीलने इति २ पु०।
¶ रागविनिवृत्तये इति पाठान्तरम्। ** शुक्तिशकलादाविति ३ पु०।

सर्वेषां कल्पनाप्रकाराणां दर्शयति अन्यस्यान्यधर्मावभासित्वं नाम लक्षणम् परत्रे-त्युक्ते ऽर्थात्परावभासः सिद्ध इति यद्वादिषु तन्न व्यभिचरति । कथम् । पूर्वस्मिन् कल्पे ज्ञानाकारस्य बहिस्थस्य वा शुक्तिधर्मत्वा * वभासनान्न व्यभि-चारः । द्वितीये ऽपि शुक्तिरजतयोः पृथक् सतोरपृथगवभासो † ऽभिमानात् । तृतीये ऽपि शुक्तिशकलस्य रजतरूपप्रतिभासनात् पूर्वदृष्टत्वस्मृतिरूपत्वयोः सर्वत्राव्यभिचारान्न ‡ विवाद इत्यभिप्रायः । तत्र स्मृतिरूपः पूर्वदृष्टावभास इत्येतावति लक्षणे निरधिष्ठानाध्यासवादिपक्षे ऽपि निरुपपत्तिके § लक्षणव्याप्तिः स्यादिति तन्निवृत्तये परत्रेत्युच्यते । कथं निरुपपत्तिको ऽयं पक्षः । न हि निरधिष्ठानो ऽध्यासो दृष्टपूर्वः संभवी वा ‖ । ननु केशोण्डूकाद्यवभासो निर-धिष्ठानो दृष्टः । न । तस्यापि तेजोवयवाधिष्ठानत्वात् ।

ननु रजते संवित् संविदि रजतमिति परस्पराधिष्ठानो भविष्यति बीजाङ्कुरादिवत् । नैतत्सारम् । न तत्र यतो बीजाद्यो ऽङ्कुरस्तत एव तद्बी-जमपि त्वङ्कुरान्तरात् इह पुनर्यस्यां संविदि यद्रजतमवभासते तयोरेवेतरे-तराश्रयत्वमस्तीति दुर्घटमेतत् । बीजाङ्कुरादिष्वपि न बीजाङ्कुरान्तरपरम्परामात्रेणा-ऽभिमतवस्तुसिद्धिः प्रतीतितो वस्तुतश्चानिवृत्ताकाङ्क्षत्वात् तथा च कुत इदमे-वास्मात् पर्यनुयोगे दृष्टत्वादेवमिति ¶ तत्र च दूरं वा परिधाव्य ** स्थातव्य-मन्यथा हेतुपरम्परामेवावलम्ब्य क्व चिदप्यनवतिष्ठमानो नानवस्थादोषमति-वर्तेत †† । अपि च । न क्व चिन्निरवधिको नेत्येव बाधावगमो दृष्टः यत्राप्यनुमाना-दाप्तवचनाद्वा न सर्प इत्येवावगमस्तत्रापि किं पुनरिदमित्यपेक्षादर्शनात्पुरो-ऽवस्थितं वस्तुमात्रमवधिर्विद्यते प्रधानादिष्वपि जगत्कारणे त्रिगुणत्वादिबाधो ऽधिगता ‡‡ वधिरेव । अथवा सर्वलोकसाक्षिकमेतत् §§ केशोण्डूकादावपि तद्बाधे तदनुपद्रुत एव बोधे बाध्यते न बोधः । अतस्तदवधिः सर्वस्य बाधस्तेन त-न्मात्रस्य बाधाभावात्स्वतश्च विशेषानुपलब्धेः कूटस्थापरोक्षैकरसचैतन्यावधिः सर्वस्य बाधः । नाप्यध्यस्तमप्यसदेव । तथात्वे प्रतिभासायोगात् ।

* बहिस्थस्य वा शुक्तिकाधर्मत्वेति २ पु. । † अवभासाभिमानादिति २ पु. ।
‡ अव्यभिचार इति २ पु. । § निरुपपत्तिका लक्षणाव्याप्तिरिति २ पु. ।
‖ सम्भवी वेति २ पु. नास्ति । ¶ तत्रैवेति २ पु. । ** अवस्थातव्यमिति २ पु. ।
†† वर्तितव्यमिति २, ३ पु. । ‡‡ अवगतावधिरेवेति २ पु. ।
§§ केशोण्डूकादाविति २ पु. ।

ननु सर्वमेवेदमसदिति भवतो मतम् । क एवमाह अनिर्वचनीयानाद्यविद्यात्मकमित्युद्घोषितमस्माभिः । अथ पुनर्विद्योदये ऽविद्याया निरूपाख्यतामङ्गीकृत्यासत्त्वमुच्येत काममभिधीयताम् । तथाच बाधकज्ञानं नेदं रजतमिति वि*शिष्टदेशकालसम्बद्धं रजतं† विलोपयदेवोदेति न देशान्तरसम्बन्धमापादयति तथानवगमात् । तथाच दूरवर्त्तिनीं‡ रज्जुं सर्पं मन्यमानस्तन्निकटवर्त्तिना ऽऽप्तेन नायं सर्प इत्युक्ते सर्पाभावमात्रं प्रतिपद्यते न तस्य देशान्तरवर्तित्वम् । तत्प्रतिपत्तावसामर्थ्याद्वाक्यस्य । नार्थापत्त्या । इह भग्नघटाभाववत्तावन्मात्रेणापि§ तत्सिद्धेः । यत्रापि सर्पबाधपूर्वको रज्जुविधिरत्त्वजन्यस्तादृशवाक्यजन्यो वा तत्रापि स एव न्यायस्तथा ऽनवगमात्तदेवं न क्वचिन्निरधिष्ठानो ऽध्यासस्तस्मात्साधूक्तं परत्रेति ।

यद्येवं परत्र पूर्वदृष्टावभास इत्येतावदस्तु लक्षणं तथाविधस्य स्मृतिरूपत्वाव्यभिचारात् । सत्यमर्थलभ्यस्य स्मृतित्वमेव स्यान्न स्मृतिरूपत्वम् । नच स्मृतिविषयस्याध्यासत्वमित्युक्तम् । यद्येवमेतावदस्तु लक्षणं परत्र स्मृतिरूपावभास इति । तत्र परत्रेत्युक्ते ऽर्थलभ्यस्य परावभासस्य स्मृतिरूपत्वं विशेषणम् । न हि परस्यासंयुक्तस्य पूर्वदृष्टत्वाभावे स्मृतिरूपत्वसम्भवः । ‖ सत्यम् । विस्पष्टार्थं पूर्वदृष्टग्रहणमिति यथान्यासमेव लक्षणमस्तु । तथा च लोके ऽनुभवइत्युदाहरणद्वयेन ¶ लौकिकसिद्धमेवेदमध्यासस्य स्वरूपं लक्षितं किमत्र युक्त्येति कथयति शुक्तिका हि रजतवदवभासत इति ।

ननु न शुक्तिका प्रतिभासते रजतमेव प्रतिभासते तेन ** शुक्तिकेति रजतवदिति चोभयं नोपपद्यते । उच्यते । शुक्तिकाग्रहणमुपरितनसम्यक्ज्ञानसिद्धं परमार्थतः शुक्तिकात्वमपेक्ष्य, वतिग्रहणं तु संप्रयुक्तस्यारजत††स्वरूपस्य मिथ्यारजतसम्भेद इवाव‡‡भासनमङ्गीकृत्य,मिथ्यात्वमपि रजतस्यागन्तुकदोषनिमित्तत्वादनन्तरबाधदर्शनाच्च कथ्यते न पुनः परमार्थाभिमताद्रजतादन्यत्वमाश्रित्य, तत्रासंप्रयुक्तत्वाद्रजतस्य नेदन्तावभासस्तद्वतः किन्तु

* विशिष्टदेशसम्बन्धमिति २ पु० । † विलापयदिति २ पु० ।
‡ दूरवर्त्तिना रज्जुमिति २ पु० । § तन्मात्रेणाऽपि तत्सिद्धिरिति २ ३ पु० ।
‖ सत्यमेवेति ३ पु० । ¶ लौकिकसिद्धमिति १ पु० ।
** शुक्तिका रजतवदितीति-इति २ पु० । †† स्वशब्दो नास्ति २ पु०
‡‡ अवभासमिति २ पु० ।

संप्रयुक्तगत एवापरोक्षावभासस्तु संस्कारजन्मनोऽपि रजतोल्लेखस्य दोषबलादिन्द्रियजज्ञानान्तर्भावाच्चेति द्रष्टव्यम् । तत्र शुक्तिकोदाहरणेन संप्रयुक्तस्यानात्मा रजतमिति * दर्शितम् । निरञ्जनस्य चैतन्यस्यास्मदर्थे ऽनिदमंशस्यानात्मा तदवभास्यत्वेन युष्मदर्थत्व † लक्षणापन्नो ऽहंकारो ऽध्यस्त इति ‡ प्रदर्शनार्थम् । द्विचन्द्रोदाहरणेन जीवेश्वरयोर्जीवानां चानात्मरूपो भेदावभास इति दर्शितम् ।

ननु बहिरर्थे कारणदोषो ऽर्थगतः सादृश्यादिरिन्द्रियगतश्च तिमिरादिरुपलभ्यते तन्निमित्तश्चार्थस्य सांशत्वादंशान्तरावग्रहे ऽप्यंशान्तरप्रतिबन्धो युज्येत § न त्विह कारणान्तरायत्ता सिद्धिर्येन तद्दोषादनवभासो ऽपि स्यान्निरंशस्य चैतन्यस्य || स्वयंज्योतिषस्तदयोगात् । ननु ब्रह्मस्वरूपमनवभासमानमस्त्येव न तदनवभासनाज्जीवेऽनवभासविपर्यासौ भवतः । न हि शुक्तेरग्रहणात्स्थाणाव ¶ ऽग्रहणं विपर्यासो वा । ननु न ब्रह्मणोऽन्यो जीवो ऽनेन जीवेनात्मनेति श्रुतेस्तस्माद्ग्रहणमात्मन एव ** तत् । एवं तर्हि सुतरामविद्यायास्तत्रासम्भवस्तस्य विद्यात्मकत्वात्तस्य भासा सर्वमिदं भातीति †† तच्चैतन्येनैव सर्वस्य भासमानत्वात् ‡‡ । उच्यते । विद्यात एवात्माग्रहणाविद्यात्मको दोषः प्रकाशस्याच्छादकः । कथं गम्यते । श्रुतेस्तदर्थापत्तेश्च । श्रुतिस्तावदनृतेन हि प्रत्यूढा अनीशया शोचति मुह्यमान इत्येवमाद्या । तदर्थापत्तिरपि विद्यैव सर्वत्र श्रुतिषु ब्रह्मविषया मोक्षाय निवेद्यते । तेनार्थादिदमवगम्यते जीवस्य ब्रह्म §§ स्वरूपता |||| नवगमो ऽविद्यात्मको बन्धो निसर्गत एवास्तीति ।

ननु न जीवो ब्रह्मणो ऽन्य इत्युक्तम् । बाढम् । अत एवाऽर्थाज्जीवे ब्रह्मस्वरूपप्रकाशाच्छादिका ऽविद्या कल्प्यते ऽन्यथापरमार्थतस्तत्स्वरूपत्वे तदवबोधोऽपि यदि नित्यसिद्धः स्यात्तदा तादात्म्योपदेशो व्यर्थः स्यात् अतो

* निर्दर्शितमिति २ पु. ।
† लक्षणापन्न इति २ पु. ।
‡ प्रदर्शना नास्ति २ पु. ।
§ युज्यत इति १ पु. उपकल्पितमास्ते ।
|| चैतन्यस्येति २ पु. नास्ति ।
¶ स्थाणवग्रहणमिति क्वचित् ।
** सदिति २ पुस्तके लिखितमपि छिन्नम् ।
†† विभातीति २ पु. ।
‡‡ भास्यमानत्वादिति २ पु. ।
§§ स्वेति २ पु. नास्ति ।
|||| अनवगमोऽविद्यात्मक इति २ पु. ।

ऽनादिसिद्धाविद्यावच्छिन्नानन्तजीवनिर्भासास्पदमेकरसं ब्रह्मेति श्रुतिस्मृति *-न्यायकोविदैरभ्युपगन्तव्यम् । तथा च स्मृतिः । प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपीति † क्षेत्रक्षेत्रज्ञत्वनि ‡ मितामनादिसिद्धामविद्यां प्रकृतिशब्देनाह मायां तु प्रकृतिं विद्यादिति श्रुतेरतो मायावच्छिन्न § रूपत्वादनन्यदपि ब्रह्म-रूपमात्मनो न वेत्ति । तथा चोक्तम् । अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदेति ।

ननु प्रमाणान्तरविरोधे ‖ सति श्रुतिस्तदर्थापत्तिर्वा नाविद्यां निवेद-यितुमलम् । किं तत्प्रमाणं येन सह विरोधः । निरंशस्य स्वयंज्योतिषः स्वरूपानवभासानुपपत्तिः । ननु भोक्तुः कार्यकारणसंघाताद्व्यावृत्तता स्वयं-ज्योतिषो ऽपि न प्रकाशते । ननु न भोक्ता स्वयंज्योतिः किं त्वहंप्रत्ययेनाव-भास्यते । यथा स्वयंप्रकाशमानता ऽहङ्कारो न प्रत्ययस्तथा वक्ष्यते ।

कथं पुनर्भोक्ता स्वयंज्योतिः कार्यकारणसंघाताद्व्यावृत्तो न प्रकाशते मनुष्योहमितिमिथ्यैवैकताभिमानात् । ननु गौणो ऽयं न मिथ्या । यथा न गौणस्तथा भाष्यकार ¶ एव वक्ष्यति ** ।

नन्वहमिति यदि देहसमानाधिकरणः प्रत्ययो न तर्हि तद्व्यतिक्त आत्मा सिध्यति अन्यस्य तथाग्राहिणः प्रत्ययस्याभावादागमानुमानयोरपि तद्विरोधे प्रमाणत्वायोगात् । मिथ्यात्वात्तस्य न विरोध इति चेत् कुतस्तर्हि मिथ्यात्वम् आगमादनुमानाद्वा । अन्यथावगमादिति चेत् । मैवम् । अन्यो-न्याश्रयता तथा स्यात् आगमानुमानयोः प्रवृत्तौ तन्मिथ्यात्वं तन्मिथ्यात्वे तयोः प्रवृत्तिरिति । तस्माद्देहादिव्यतिरिक्तविषय एवायमहङ्कार इत्यात्मवादि-भिरभ्युपेयम् । अन्यथा ऽऽत्मसिद्धिर †† प्रामाणिकी स्यादतो गौणो मनुष्यत्वा-भिमानः । उच्यते । यद्यपि देहादिव्यतिरिक्तभोक्तृविषय एवायमहङ्कारस्तथापि तथा ऽनध्यवसायात्तद्धर्मानात्मन्यध्यस्यति दृश्यते च स्वरूपेणावभासमाने ऽपि वस्त्वन्तरभेदानध्यवसायात्तत्सम्भेदेनावभासः । यथैकस्मिन्नप्यकारे ह्रस्वादिसम्भेदः ।

---

* तच्चार्येति २ पु॰ ।     † क्षेत्रेति २ पु॰ नास्ति ।     ‡ निमित्तामित्यन्यत्र १ पाठः ।
§ स्वशब्दो ऽधिकः २ पु॰ ।     ‖ प्रमाणविरोधे श्रुतीति २, ३ पु॰ ।     ¶ भाष्यएवेति २, ३ पु॰ ।
** वक्ष्यतेति २,३ पु॰ ।     †† अप्रमाणिकीति १, २ च पु॰ ।

अथ पुनरेकान्ततो भिन्न एव देहादेरहङ्कर्ता ऽवभासेत* रसादिव गन्धः । ततस्तत्सद्भावे न विप्रतिपत्तिरिति तत्सिद्धये जिज्ञासा नावकल्पेत† जिज्ञासोत्तरकालं तर्हि गौण एव युक्तः । कथम् । जिज्ञासा नाम युक्त्यनुसन्धानम् । न हि युक्तिः पृथग् ज्ञानान्तरजननी किन्तु सिद्धस्यैवाहंप्रत्ययस्य विषयविवेचिनी‡ । तस्माद्विविक्तविषयत्वाद्व्यतिरिक्तात्मानुभवपर्यन्त एवाहंकारो जिज्ञासोत्तरकालं युक्तः । न युक्तः अकारइव ह्रस्वत्वाभिमानः । ननु तत्रापि कथम् । अनुभव एव । एव§ महङ्कारेऽपि समानश्चर्चः । नन्वनुभवस्तर्कबलाद्यथावभासिन्यकारे सम्भवति ह्रस्वादेः पृथक्सतस्तथानवगमात् । तन्न । एकस्य पृथक्त्वे ऽप्यर्थादितरस्यापि पृथक्त्वात् ।

ननु महदेतदिन्द्रजालं यत्तर्कानुगृहीतात्प्रमाणाद्यथायथमसाधारणरूपयोरवभासमानयोरेकत्वावगमो न गौण इति । बाढम् । इन्द्रजालमेवैतदविद्याकृतत्वात् । तथाप्यहंप्रत्ययस्य स्वविषयप्रतिष्ठितस्यैव सतस्तदेकप्रतिष्ठिताप्रतिबन्धकृदनाद्यविद्याकृतं देहादिप्रतिष्ठितत्वमपि दृष्टम् । अतो देहादिविषयत्वाविरोधि स्वविषयप्रतिष्ठत्वमहंप्रत्ययस्यातो युक्त्या विषयविवेचने ऽपि स्वविषयोपदर्शनेन तत्प्रतिष्ठत्वमात्रं कृतं नाधिकमादर्शितम् । स्वविषयप्रतिष्ठत्वं च देहादिष्वहं‖ ममाभिमानेन न विरुध्यत इत्युक्तमतो न्यायतो विषयविवेचनादूर्ध्वमपि न प्रागवस्थातो विशिष्यते ऽहंप्रत्ययस्तेन न कदाचिदपि मनुष्यो ऽहमिति प्रत्ययो गौणः । ¶ तदेवं स्वयंज्योतिष एव सतो जीवस्य कार्य** करणसङ्घातव्यतिरिक्ततायास्तथा†† ऽनवभासदर्शनान्मनुष्योऽहमिति बाध्यासोपलब्धे‡‡ ब्रह्मात्मैकत्वस्यापि तत्स्वरूपस्यानवभासनं पूर्वकालकोटिरहितप्रकाशाच्छादितमोनिमित्तं श्रुतितदर्थापत्तिसमर्पितं तन्निमित्ता§§ हंकाराध्यासश्च सम्भाव्यते ऽनादित्वाच्च|||| पूर्वदृष्टत्वं स्मृतिरूपत्वं च पृथग्भोक्तृविषयानुभवफलाभावाद्भोक्तृचैतन्यसंवलितैकानुभवफलत्वाच्च परत्र परावभास-

---

* अवभासते—इति २ पु० । † अवकल्प्यते—इति २ पु० । ‡ विवेचनीति २ पु० ।
§ अहंकारोऽपि समानचर्च इति १ पु० । ‖ अहंमानेनेति २ पु० ।
¶ यदेवमिति २ पु० । ** कारणाव्यतिरिक्ततायाः इति २ पु० ।
†† अनवभासमादित्युपकल्प्यते १ पु० । ‡‡ एवं ब्रह्मेति १ पु० ब्रह्मात्मकत्वस्येति २ पु० ।
§§ अहंकाराध्यासश्चेति २ पु० ।
|||| सदापूर्वदृष्टत्वमिति २ पु० १ पुस्तके तु सदाशब्दः सर्वापि स्थितोऽस्ति ।

स्याऽन्योन्यसम्भेदस्य विद्यमानत्वादध्यासलक्षणाव्याप्तिरिहाप्युपपद्यते । को-ऽयमध्यासो नामेति । किं वृत्तस्य प्रश्ने चेपे च समानवर्त्तिनो विशेषानुपलब्धेः पृष्टमनेनेति मत्वा ऽध्यासस्वरूपे ऽभिहिते पुनराक्षिप्तं मयेत्यभिप्रायं विवृणोति कथं पुनः प्रत्यगात्मन्यविषये ऽध्यासो विषय * तद्धर्माणामिति । बाढमेवंलक्षणो ऽध्यासः स चेह न सम्भवति । कथम् । यतः सर्वो हि पुरो ऽवस्थिते विषये विषयान्तरमध्यस्यति युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनो ऽविषयत्वं ब्रवीषि नह्यविषये ऽध्यासो दृष्टपूर्वः सम्भवी वा । उच्यते । न तावदयमेकान्तेनाविषयः अस्मत्प्रत्ययविषयत्वात् ।

ननु विषयिणश्चिदात्मनः कथं विषयभावः पराग्भावेनेदन्तासमुल्लेख्यो हि विषयो नाम भवति तद्विपरीत्येन प्रत्यग्रूपेणानिदंप्रकाशो विषयी तत्कथमेकस्य निरंशस्य विरुद्धांशद्वयसंनिवेशः । अत्रोच्यते । अस्मत्प्रत्ययत्वाभिमतो ऽहंकारः । स चेदमनिदंरूपवस्तुगर्भः सर्वलोकसाक्षिकः । तमवहित † चेतस्तया निपुणतरमभिवीक्ष्य रूपकपरीक्षकवत् स्वानुभवमऽप्रच्छादयन्तो वदन्तु भवन्तः परीक्षकाः किमुक्तलक्षणो न वेति ‡ ।

ननु किमत्र वदितव्यमसम्भिन्नेदंरूप एवाहमित्यनुभवः । कथम् । प्रमातृप्रमेयप्रमितयस्तावदपरोक्षाः । प्रमेयं कर्मत्वेनापरोक्षम् प्रमातृप्रमिती पुनरपरोक्षे एव केवलं न कर्मतया प्रमितिरनुभवः स्वयंप्रकाशः प्रमाणफलं तद्बलेनेतरत्प्रकाशते प्रमाणं तु प्रमातृव्यापारः फललिङ्गो नित्यानुमेयस्तत्राहमिदं जानामीति प्रमातृज्ञानव्यापारः कर्मविषयो नात्मविषयः । आत्मा तु विषयानुभवादेव निमित्तादहमिति फले विषये चानुसन्धीयते ।

ननु नायं विषयानुभवनिमित्तोऽहमुल्लेखः किं त्वन्य एवात्ममात्रविषयो ऽहमिति प्रत्ययः । तस्मिंश्च द्रव्य § स्वरूपत्वे नात्मनः प्रमेयत्वं ज्ञातृत्वेन प्रमातृत्वमिति प्रमातृप्रमेय ‖ निर्भासरूपत्वादहंप्रत्ययस्य ग्राह्यग्राहकरूप आत्मा तस्मादिदमनिदंरूपः प्रमेयांशस्येदं ¶ रूपत्वात्, अनिदंरूपत्वात् प्रमात्रंशस्य । नैतद्युक्तम् । अनंशत्वादपरिणामित्वाच्चात्मनः ।

---

* तदिति २ पु· नास्ति ।
† चेतस्कतयेत्यपरत्र १ पाठः ।
‡ नेतीति ३ पु· ।
§ स्वशब्दो नास्ति १, २ पु· ।
‖ प्रतिभासेति २ पु· कल्पितमास्ते ।
¶ रूपवत्त्वादिति २ पु· ।

प्रमेयस्य चेदंरूपतया पराग्रूपत्वादनात्मत्वात्तस्मान्नीलादिज्ञानफलमनुभवः स्वयंप्रकाशमानो ग्राह्यमिदंतया ग्राहकं * चानिदन्तया ऽवभासयति ग्रहणं चानुमापयतीति युक्तम् । अतो नेदमंशो ऽहंकारो युज्यते । उच्यते । तत्रेदं भवान् प्रष्टव्यः किमात्मा चैतन्यप्रकाशो ऽनुभवो जडप्रकाश उत सोपि चैतन्यप्रकाशः अथवा स एव चैतन्यप्रकाश आत्मा जडस्वरूप † इति । तत्र न तावत्प्रथमः कल्पः । जडस्वरूपे † प्रमाणफले विश्वस्यानवभासप्रसङ्गात् । मैवम् । प्रमाता चेतनस्तद्बलेन प्रदीपेनेव विषयमिदन्तया ऽऽत्मानं चानिदन्तया चेतयत इति न विश्वस्यानवभासप्रसङ्गः । तन्न । स्वयं चैतन्यस्वभावो ऽपि सन् ‡ विषयप्रमाणेनाचेतनेनानुगृहीतः प्रकाशत इति नैतत्साधु § लक्ष्यते । किं च । प्रमाणफलेन चेत् प्रदीपेनेव विषयमात्मानं च चेतयते तदा चेतयतिक्रियानवस्थाप्रसङ्गः ।

द्वितीये ‖ कल्पे ¶ आत्मापि स्वयमेव प्रकाशेत किमिति विषयानुभवमपेक्षेत । अथ चैतन्यस्वभावत्वेपि नात्मा स्वयंप्रकाशः । ** विशेषे हेतुर्वाच्यः । न हि चैतन्यस्वभावः सन् स्वयंपरोक्षो ऽन्यतो ऽपरोक्ष इति युज्यते । किं च । समत्वान्नेतरेतरापेक्षत्वं प्रकाशने प्रदीपयोरिव । तृतीये ऽपि †† कल्पे ऽनिच्छतोप्यात्मैव चितिप्रकाश आपद्यते न तदतिरिक्ततथाविधफलसद्भावे प्रमाणमस्ति । कथम् । प्रमाणजन्यश्चेदनुभवस्तथा सति स्वगतेन विशेषेण प्रतिविषयं पृथक् पृथगवभासेत सर्वानुभवानुगतं च गोत्ववदनुभवत्वमपरमी ‡‡-क्षेत । न च नीलानुभवः पीतानुभव इति विषयविशेषपरामर्शशून्यः स्वगतो विशेषो लक्ष्यते ।

ननु विनष्टाविनष्टत्वेन विशेषः सिध्यति । सिध्येद्यदि विनष्टाविनष्टता सिध्येत् । सा च जन्यत्वे सति तस्यां च सिद्धायां जन्यत्वमिति परस्पराश्रय §§ स्थितित्वेनैकमपि न सिध्येत् । एतेनातिसादृश्यादनुभवभेदो न विभाव्यत इति प्रत्युक्तम् भेदासिद्धेः । न हि चित्प्रकाशस्य स्वगतो भेदो न प्रकाशते

* च शब्दो नास्ति २ पु· । † स्वशब्दो नास्ति २,३ पु· ।
‡ विषयप्रमाणेनेत्यस्य स्थाने विषयप्रवणेनेति कल्पितं २ पु· ।
§ न साधु-इति २ पु· । ‖ अपिशब्दो ऽत्राधिकः २ पु· ।
¶ विकल्प इति १ पाठान्तरम् । ** विशेषहेतुरिति २ पु· । †† विकल्पे इति १ पु·
‡‡ ईक्षेतेति २ पु· । §§ स्थितित्वं नैकमपि सिध्येदिति २ पु· ।

इति युक्तिमत् येन तदप्रकाशनात्सादृश्यनिबन्धनो विभ्रमः स्यात्। न च यथा जीवस्य स्वयंज्योतिषोऽपि स्वरूपमेव सद् ब्रह्मरूपत्वं न प्रकाशते तद्वत्स्यादिति युक्तम्। अभिहितं तत्राप्रकाशने प्रमाणम् इह तन्नास्ति। नहि सामान्यतोदृष्टमनुभवविरोधे युक्तिविरोधे च समुत्तिष्ठति दर्शिते चानुभव-युक्ती। तस्मात् चित्स्वभाव एवात्मा तेन तेन प्रमेयभेदेनोपधीयमानोऽनुभवाभिधानीयकं लभते ऽविवक्षितोपाधिरात्मादिशब्देरभिधीयते ऽवधीरित-* वनाभिधाननिमित्तैकदेशावस्थाना इव वृक्षा वृक्षादिशब्दैरित्यभ्युपगन्तव्यम्। बाढम्। अत एव विषयानुभवनिमित्तोऽनिदमात्मको ऽहङ्कारो वर्ण्यते। सत्यमेवम्। किन्तु तथा सति सुषुप्ते ऽप्य † हमित्युल्लेखः स्यात्। कथम्। नीलानुषङ्गो यश्चैतन्यस्य स ‡ नीलाभोगो। नासावहमुल्लेखार्हः अहमित्यात्मावभासते तत्र यदि नाम सुषुप्ते विषयानुषङ्गाभावादिदं जानामीति विषयतदनुभवपरामर्शो § नास्ति मा भूत् अहमित्यात्ममात्रपरामर्शः किमिति न भवेत्।

नन्वहमिति भोक्तृत्वं प्रतिभासते तदभावे कथं तथा प्रतिभासः। नैतत्सारम्। समुत्कालितोपाधिविशेषं चैतन्यमात्रमस्मदर्थस्ततः सर्वदा ऽहमिति स्यान्नैतच्छक्यमुपाधि ‖ परामर्शेन चैतन्यमहमित्युल्लिख्यते इति वक्तुम्। तत्परामर्शो हि तत्सिद्धिनिमित्तो न स्वरूपसिद्धिहेतुः ¶ स्वमाहात्म्येनैव तु स्वरूपसिद्धिः ततश्च विषयोपरागानुभवात्मत्व ** शून्यः स्वरूपतो ऽहमिति सुषुप्ते ऽप्यवभासेत दृशिरूपत्वाविशेषात्। भवत्येवेति चेन्न। तथा सति स्मर्येत ह्यस्तन इवाहङ्कारः। अविनाशिनः संस्कारस्याभावान्न स्मर्यते इति चेत्। ह्यस्तनो ऽपि न स्मर्येत।

नन्वस्त्येव सुषुप्ते ऽहमुल्लेखः सुखमहमस्वाप्समिति सुषुप्तोत्थितस्य स्वापसुखानुभवपरामर्शदर्शनात् नात्मनो ऽन्यस्य तत्रानुभवः सम्भवति। सत्यमस्ति। न तत्स्वापे सुखानुभवसंस्कारजं स्मरणं किं तर्हि सुखावमर्शो दुःखाभावनिमित्तः। कथम्। स्वप्ने तावदस्त्येव दुःखानुभवः। सुषुप्ते तु तदभावात्सुखव्यपदेशः। तदभावश्च करणव्यापारोपरमात्। यदि पुनः सुषुप्तः सुख-

* वनाभिधेयनिमित्तेति ३ पु०।
† अहमुल्लेखइति २ पु०।
‡ सनीलभाग इति २ पु०।
§ नास्तीति २ पु० नास्ति।
‖ परामर्शो चैतन्यमिति २ पु०।
¶ स्वमहात्म्येनेति १ पु०।
** स्वपश्चो नास्ति २ पु०।

मिति च तद्विषयं स्मरणं स्या* तदा विशेषतः स्मर्येत न च तदस्ति । व्यपदेशो ऽपि सुखं सुप्तो न किंचिन्मया चेतितमिति हि दृश्यते । यत्पुनः सुप्तोत्थितस्याङ्गलाघवेन्द्रियप्रसादादिना सुखानुभवोन्नयनमिति । तदसत् । अनुभूतं चेत्सुखं स्मर्येत न तत्र लिङ्गेन प्रयोजनम् । यद्येवं सुप्तोत्थितस्य कथं कस्यचिदङ्गलाघवं कस्य चिन्नेति । उच्यते । जागरणे कार्यकरणानि श्राम्यन्ति तदपनुनये व्यापारोपरमः स्वापः तत्र यदि सम्यग् व्यापारोपरम† स्तदाङ्गानि लघूनीतरथा गुरूणीति । तदेवं नायं नीलादिप्रत्ययादन्य एवात्मविषयो ऽहंप्रत्ययो नापि विषयानुभवादेवाहमुल्लेखः । तस्माद् ब्रह्मविदामेकपुण्डरीकस्य लोकानुग्रहैकरसतया सम्यग्ज्ञानप्रवर्तनप्रयोजनकृतशरीरपरिग्रहस्य भगवतो भाष्यकारस्य मतमागमयितव्यम् ।

तदुच्यते । येयं श्रुतिस्मृतीतिहासपुराणेषु नामरूपमव्याकृतमविद्या माया प्रकृतिरग्रहणमव्यक्तं तमः कारणं लयः शक्तिर्महासुप्तिर्निद्रा क्षरमाकाशमिति च तत्र तत्र बहुधा गीयते चैतन्यस्य स्वत एवाव‡ स्थितलक्षणब्रह्म§स्वरूपतावभासं प्रतिबध्य जीवत्वापादिका ऽविद्याकर्मपूर्वप्रज्ञासंस्कारचित्रभित्तिः सुषुप्ते प्रकाशाच्छादनविक्षेपसंस्कारमात्ररूपस्थितिरनादिरविद्या । तस्याः परमेश्वराधिष्ठितत्वलब्धपरिणामविशेषो विज्ञानक्रियाशक्तिद्वयाश्रयः कर्तृत्वभोक्तृत्वैकाधारः कूटस्थचैतन्यसंवलनसंजातज्योतिः स्वयं प्रकाशमानो ऽपरोक्षो ऽहङ्कारो यत्सम्भेदात्कूटस्थचैतन्यो ऽनिदमंश आत्मधातुरपि मिथ्यैव भोक्तेति प्रसिद्धिमुपगतः । स च सुषुप्ते समुत्खातनिखिलपरिणामायामविद्यायां कृतलयः । न चैवं मन्तव्यम् आश्रितपरिणतिभेदतयैवाहंकारस्य निर्भासे ऽनन्तर्भूतेव तन्निमित्तमिति तथा सत्यऽपाकृताहंकृतिसंसर्गो भोक्तृत्वादिस्तद्विशेषः केवलमिदन्तयैवावभासेत न च तथा समस्ति । स च परिणामविशेषो ऽनिदश्चिदात्मनो बुद्ध्या निष्कृष्य वेदान्तवादिभिरन्तःकरणं मनो बुद्धिरहम्प्रत्ययीति च विज्ञानशक्तिविशेषमाश्रित्य व्यपदिश्यते परिस्पन्दशक्त्या च प्राण इति । तेनान्तःकरणोपरागनिमित्तं मिथ्यैवाहंकर्तृत्वमात्मनः स्फटिकमणेरिवो‖ पधाननिमित्तो लोहितिमा । कथं पुनः स्फटिके

* स्मर्येत १ पु· ।
† तदङ्गानीति १ पु·, तदा लघूनीति २ पु· ।
‡ एवशब्दो नास्ति १, २ पु· ।
§ स्वशब्दो नास्ति २ पु· ।
‖ उपाधिनिमित्त इति २ पु· ।

लोहितिम्नो मिथ्यात्वम्। उच्यते। यदि स्फटिक* प्रतिस्फालिता † नायनरश्मयो जपाकुसुममुपसर्पेयुस्तदा विशिष्टसंनिवेशं तदेव लोहितं ग्राहयेयुः। न हि रूपमात्रनिष्ठश्चाक्षुषः प्रत्ययो दृष्टपूर्वः नापि स्वाश्रयमनाकर्षद्रूपमात्रं प्रतिबिम्बितं क्वचिदुपलब्धपूर्वम् । नन्वभिजातस्येव पद्मरागादिमणेर्जपाकुसुमादेरपि प्रभा विद्यते तया व्याप्तत्वात् स्फटिको ऽपि लोहित इवावभासते। तथापि स्वयमलोहितो मिथ्यैव लोहित इत्यापद्येत। अथ प्रभैव लोहिता ऽवभासते न स्फटिक इति । शौक्ल्यमपि तर्हि स्फटिके प्रकाशेत। ‡ अथ प्रभया ऽपसारितं तदिति चेत्। स तर्हि नीरूपः कथं चाक्षुषः स्यात्। न § च रूपिद्रव्य ||-संयोगात्। वायोरपि तथात्वप्रसङ्गात् । न प्रभानिमित्तं लौहित्यं तत्रोत्पन्नम् उत्तरकालमपि तथारूपप्रसङ्गात्। अभ्युपगम्य प्रभामिदमुक्तम्। यथा पद्मरागादिप्रभा निराश्रया ऽप्युन्मुखोपलभ्यते न ¶ तथा जपाकुसुमादेः । तदेवं स्फटिकमणावुपधानोपराग इव चिदात्मन्य**प्यहङ्कारोपरागस्ततः सम्भिन्नोभयरूपत्वाद्ग्रन्थिरिव भवतीत्यहङ्कारो ग्रन्थिरिति गीयते । तत्र जडरूपत्वादुपरक्तस्य न तद्बलादुपरागस्य साक्षाद्भावश्चिद्रूपस्य पुनरुपरागस्तद्विषयव्यापारविरहिणो ऽपि तद्बलात्प्रकाशते। तेन लक्षणत इदमंशः कथ्यते न व्यवहारतः। व्यवहारतः पुनर्यदुपरागादनिदमात्मनो ऽहंकर्तृत्वं मिथ्या तदात्मनस्तद्व्यापारेण व्याप्रियमाणस्यैव व्यापारपूर्वको यस्य परिच्छेदः स एवेदमात्मको विषयो ऽत एवाहमित्यसम्भिन्नेदमात्मको ऽव †† भास इति विभ्रमः केषांचित् ‡‡ दृष्टश्च लक्षणतस्तद्व्यवहारार्होऽपि तमननुपतन् । तद्यथाङ्कुरादिफलपर्यन्तो वृक्षविकारो मृत्परिणामपरम्परापरिनिष्पन्नो ऽपि घटव §§ ल्मीकवन्न मृन्मयव्यवहारमनुपतति । व्युत्पन्नमतयस्तु तद्व्यवहारमपि नातीवोल्बणं मन्यन्ते । अत एव निपुणतरमभिवीक्ष्य रूपकपरीक्षकवदहङ्कारं निरूपयतां सम्भिन्नेदंरूपः स इत्यभिहितम्। यत्पुनर्दर्पणजलादिषु मुखचन्द्रादि |||| प्रतिबिम्बोदाहरणं तदहङ्कर्तुरनिदमंशो बिम्बादिव प्रतिबिम्बं न ब्रह्मणो वस्त्वन्तरं

* प्रतिफलिता इति ३ पु०.। † नायना रश्मय इति १ पु०। ‡ अथेति २,३ पु० नास्ति।
§ च शब्दो नास्ति १ पु०। || द्रव्येति २,३ पु० नास्ति। ¶ नशब्दोनास्ति ३ पु०।
** अपिशब्दो नास्ति १ पु०। †† अवभासत इति २ पु०। ‡‡ दृष्ट इत्यधिकं ३ पु०।
§§ वल्मीकादिवदिति २ पु०। |||| प्रतीति २ पु० नास्ति।

किं तु तदेव तत्पृथगवभासविपर्यय * स्वरूपतामात्रं मिथ्येति दर्शयितुम् । कथं पुनस्तदेव । तदेक † स्वलक्षणतावगमात् । तथाच यथा बहिःस्थितो देवदत्तो यत्स्वलक्षणः प्रतिपन्नस्तत्स्वलक्षण एव वेश्मान्तःप्रविष्टोऽपि प्रतीयते तथा दर्पणतलस्थितोऽपि न तद्वस्त्वन्तरत्वे युज्यते । अपिच । अर्थाद्वस्त्वन्तरत्वे सत्याऽऽदर्श एव विम्बसन्निधावेव तदाकारगर्भितः परिणत इति वाच्यम् विरुद्धपरिमाणत्वात्संश्लेषाभावाच्च प्रतिमुद्रेव विम्बलाञ्छितत्वानुपपत्तेः । तथा सति विम्बसन्निधिलब्धपरिणतिरादर्शस्तदपाये ऽपि ‡ तथैवावतिष्ठेत । न खलु संवेष्टितः कटो निमित्तलब्धप्रसारणपरिणतिर्निमित्तापगमे तत्क्षणमेव संवेष्टते यथा तथा स्यादिति मन्तव्यम् । यतश्चिरकालसंवेष्टनाहितसंस्कारस्तत्र पुनः § संवेष्टननिमित्तम् । तथा च यावत्संस्कारक्षयं प्रसारणनिमित्तानुवृत्तो पुनः संवेष्टनोपजननः । एवं || चिरकालसन्निहितविम्बनिमित्ततदाकारपरिणति ¶ रादर्शस्तथैव तदपायेऽपि यावदायुरवतिष्ठेत न ** च तथोपलभ्यते । यः पुनः कमलमुकुलस्य विकासपरिणतिहेतोः सावित्रस्य †† तेजसो दीर्घकालानुवृत्तस्यापि विगमे तत्समकालं पुनर्मुकुलीभावः स प्रथमतरमुकुल ‡‡ हेतुपार्थिवाप्यावयवव्यापारनिमित्तस्तदुपरमे जीर्णस्य पुनर्मुकुलतानुपलब्धेर्न तदर्शे पुनस्तथा पूर्वरूपपरिणामहेतुरस्त्यथाह भवतु न वस्त्वन्तरम् तदेव तदिति तु न लभ्यते शुक्तिकारजतस्य मिथ्यारूपस्यापि सत्यरजतैकरूपावभासित्वदर्शनात् । मैवम् । तत्र हि बाधदर्शनान् मिथ्याभावो नेह स बाधो दृश्यते । यत्पुनर्दर्पणापगमे तदपगमो न स बाधो दर्पणे ऽपि तत्प्रसङ्गात् ।

ननु तत्त्वमसिवाक्याद् बाधो दृश्यते । मैवम् । तत्र तत्त्वमिति विम्बस्थानीयब्रह्म §§ स्वरूपता प्रतिविम्बस्थानीयस्य जीवस्योपदिश्यते ऽन्यथा न तत्त्वमसीति स्यात् किन्तु न त्वमसीति भवेन्न रजतमस्तीतिवत् । किंच । शास्त्रीयो ऽपि व्यवहारः प्रतिविम्बस्य पारमार्थिकमेव विम्बैकरूपत्वं

* स्वेति नास्ति २ पु. ।
† स्वलक्षणत्वावगमादिति २ पु. ।
‡ तथैवेति २ पु. नास्ति ।
§ संवेष्टने-इति २ पु. ।
|| चिरकालमिति २ पु. ।
¶ तदपायेऽप्यादर्शस्तथैव यावदायुरिति २ पु. ।
** चेति २ पु. नास्ति ।
†† सावित्रतेजस इति. २ पु. ।
‡‡ मुकुलभावेति २ पु. ।
§§ स्वेतिशब्दो नास्ति २ पु. ।

दर्शयति “नैवैतोद्यन्तमादित्यं नास्तं यन्तं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतमिति । यस्तु मन्यते न पराक्प्रवणप्रवृत्तनायनरश्मिभि- र्विम्बमेव भिन्नदेशस्थं गृह्यते किन्तु दर्पणप्र * तिस्फालितैः परावृत्य प्रत्यङ्मुखैः स्वदेशस्थमेव विम्बं गृह्यत इति तमनुभव एव निराकरोतीति न पराक्रम्यते । कथं पुन: † परिच्छिन्नमेकमेकस्वभावं विच्छिन्नदेशद्वये सर्वात्मना ऽवभास- मानमुभयत्र पारमार्थिकं भवति । न वयं विच्छेदावभासं पारमार्थिकं ब्रूमः किं त्वेकत्वम् । विच्छेदस्तु मायाविजृम्भितः । न हि मायायामसम्भावनीयं नाम । असम्भावनीयावभासचतुरा हि सा ।

ननु सत्येव विम्बैकतावगमे प्रतिविम्बस्य तद्गतो विच्छेदादिमिथ्याव- भासस्तथा ब्रह्मैकतावगमे ऽपि जीवस्य विच्छेदादिर्मिथ्यावभासो न निवर्ति- तुमर्हति । उच्यते । देवदत्तस्याचेतनांशस्यैव ‡ प्रतिविम्बत्वात्सचेतनांशस्यैव वा § प्रतिविम्बत्वे प्रतिविम्बहेतोः श्यामादिधर्मेणेव जाड्येनाप्यास्कन्दितत्वान्न तत्प्रतिविम्बं विम्बैकरूपतामात्मतो जानात्यचेतनत्वात् । तथा चानुभवो न विम्बचेष्टया ‖ विना प्रतिविम्बं चेष्टते । यस्य हि भ्रान्तिरात्मनि परत्र वा समु- त्पन्ना तद्गतेनैव सम्यग्ज्ञानेन सा निवर्तते यस्तु जानीते देवदत्तः प्रतिविम्ब- स्यात्मनो ऽभिन्नत्वं न स तद्गतेन दोषेण संस्पृश्यते नाऽपि ज्ञानमात्रात्प्रति- विम्बस्य निवृत्तिस्तद्धेतोर्दर्पणादेः परमार्थिकत्वात् । जीवः पुनः प्रतिविम्बकल्पः सर्वेषां नः प्रत्यक्चिद्रूपो नान्तःकरणजाड्येनास्कन्दितः । स चाहंक ¶ र्तृत्व- मात्मनो रूपं मन्यते न विम्बकल्पब्रह्मैकरूपतामतो युक्तस्तद्रूपावगमे मि **- थ्यात्वापगमः । ननु तत्र विभ्राम्यतो विभ्रमहेतुर्दर्पणालक्तकादिपरमार्थवस्तु संनिहितमस्ति न तथेह किञ्चित्सर्वत्रैव चिद्विलक्षणे विभ्रमविलासाभिमानिन् इति मा भूदाशङ्केति रज्जुसर्पमुदाहरन्ति ।

ननु तत्रापि यदि नामेदानीमसन्निहितः सर्पस्तथापि पूर्वनिर्वृत्ततदनु- भवसंस्कारः समस्त्येव । बाढम् । इहाप्यहङ्कर्तृतातत्संस्कारयोर्बीजाङ्कुरयोरि- वानादेः कार्यकारणभावस्य वक्ष्यमाणत्वात्संस्कारो विभ्रमहेतुर्विद्यते । तत्र

* प्रतिस्फलितैरिति २ पु॰, प्रतिफलितैरिति ३ पु॰ । † परिच्छिन्नदेशमिति २ पु॰ ।
‡ प्रतिविम्बितत्वादिति २ पु॰ । § प्रतिविम्बितत्वे इति २ पु॰ ।
‖ न विम्बचेष्टां विनेति ३ पु॰ । ¶ कर्तृत्वमेवात्मन इति २ पु॰ ।
** मिथ्यापगम इत्युपकल्पितं २ पु॰ ।

यद्यप्यनिर्वचनीयतयैवारुणादिना स्फटिकादेः सावयवत्वेन सम्भेदयोग्य-
स्याप्यसम्भेदो * भ्रमभासः सिद्धस्तथापि तदासङ्गीव स्फटिकप्रतिबिम्बमुत्प्रेक्ष्यते
रज्ज्वां पुनः सर्पबुद्धिरेव न तत्सम्भिन्नत्वमसम्भिन्नत्वं वा तस्यान्तेना ऽसङ्गो
नहि सज्जते † असङ्गो ह्ययं पुरुष इत्यादिश्रुतिसमर्पिता ऽसङ्गता ऽऽत्मनो
न स्पष्टं ‡ दर्शितेति तदर्थं घटाकाशोदाहरणम् । तत्र हि तत्परामर्शादृते न
भेदरूपकार्यमसात्म्याः स्वगता दृश्यन्ते । एतच्च सर्वमुदाहरणजातं श्रुतितन्न्याया-
नुभवसिद्धस्य तदसम्भावनापरिहाराय बुद्धिसाम्यार्थं च न वस्तुन एव साक्षा-
त्सिद्धये । तदेवं यद्यपि चैतन्यैकरसो ऽनिदमात्मकत्वादविषयस्तथाप्यहङ्कारे
व्यवहारयोग्यो भवतीति गौण्या वृत्त्या ऽस्मत्प्रत्ययविषयतोच्यते प्रमेयस्य §
व्यवहारयोग्यत्वाव्यभिचारात् ।

ननु व्यवहारयोग्यत्वे ऽध्यासो ऽध्यासपरिनिष्पन्नाहम्प्रत्ययबलाद्व्यवहा-
रयोग्यत्वमिति प्राप्तमितरेतराश्रयत्वम् । नाऽनादित्वेन प्रत्युक्तत्वात् । तच्चैवम्भू-
तस्याहङ्कारस्येदमंशस्य ज्ञानसंसृष्टितो व्यापारविशेषः सकर्मत्वात्कर्मकारका-
भिमुखं स्वाश्रये किञ्चिदवस्थाविशेषमादधाति स्वाश्रयविकारहेतुत्वात्क्रिया-
याः । स च प्राप्तिक्रियाहितकर्तृस्थविशेषवत्कर्मसम्ब || न्धो ज्ञातृज्ञेय-
सम्बन्ध इति गीयते । तेन विषयविशेषसम्बद्धमेवान्तःकरणं चैतन्यस्याव-
च्छेदकं कर्मकारकमपि प्रधानक्रियासिद्धौ स्वव्यापाराविष्टं चैतन्यविवर्तत्वा-
त्प्रधानक्रियाहितप्रमात्रवस्थाविशेषावच्छिन्नापरोक्षतैकरूपामपरोक्षतामभिव्य-
नक्ति सतश्चात्मनो ऽन्तःकरणा ¶ वस्थाविशेषोपाधिजनितो विशेषो विषयानु-
भवसंसृष्टितो विषयस्यापरोक्षैकरसः फलमिति क्रियैकविषयताफलस्य युज्यते ।
एवं चाहङ्कारो स्वांशचैतन्यबलेन व्यापाराविष्टतया च प्रमातेति बुद्धिस्थमर्थं
पुरुषश्चेतयत इत्युच्यते । तत्र च प्रमातुः स्वयंज्योतिषो विषयसम्बन्धसञ्जात-
विशेषो ऽनुभवो ऽपरोक्षतया सर्वान् प्रत्यऽविशिष्टोऽपि कारकाणां सम्भूय
प्रधानक्रियासाधनत्वात्तेन सह साधनं तन्निष्ठ एव नान्यत्र कर्मकारकमपि येन
सह साधनं तस्यैवापरोक्षम् गन्तृसम्बन्ध इव ग्रामस्य ।

* भ्रमाभास इति २ पु. ।
‡ उपरत्यधिकं २ पु. ।
|| सम्बन्धादिति २ पु. ।
† सज्यत इति क्वचित् ।
§ व्यवहारशब्दो ऽत्राधिकः २ पु. ।
¶ अन्तःकरणस्यावस्थाविशेष इति पुस्तकान्तरे ।

ननु नीलादिविषयेऽपि चेदपरोक्षस्वभावो नीलात्मिका संविदित्युक्तं स्यात् । अतः स एव * माहायानिकपक्षः समर्थितः । मैवम् । परस्परव्यावृत्तौ नीलपीतावववभासेते अपरोक्षता तु न तथा एकरूपावगमाद्विच्छेदावभासे ऽप्यतो न तत्स्वभावा । यदि स्यात्तद्वदेव व्यावृत्तस्वभावता ऽप्यवभासेत । न तथा ।

किंच । तैरपि नीलात्मकसंविदो ऽन्य एव पराग्व्यावृत्तो ऽपरोक्षः प्रत्यगवभासः स्वरूपमात्रे पर्यवसितो विकल्प उपेयते प्रतीयते च नीलसंवित् † प्रत्यग्व्यावृत्तेदन्तया ‡ ग्राह्यरूपा ततश्च वस्तुद्वयं ग्राह्यग्राहकरूपमितरेतरव्यावृत्तं सिद्धम् । नैतत् । द्वयोरपि स्वरूपमात्रनिष्ठयोः कुतो विषयविषयिभावः । कथं पुनरिदमहं जानामीति तयोर्ग्राह्यग्राहकतावभासः । नायं तदवभासः किन्त्वहमिति इदमिति जानामीति च परस्पर § व्यावृत्ताः विकल्पा एते । कथं पुनस्तेषु कटाक्षेणाप्य ‖ न्योन्यमनीक्षमाणेष्वयं सम्बन्धावगमः । तद्वासनासमेतसमनन्तरप्रत्ययसमुत्थं सङ्कलनात्मकं प्रत्ययान्तरमेतन्नेह सम्बन्धावगमः । किं पुनरेवमनुभवानारूढामेव प्रक्रियां विरचयति भवान् । क्षणविध्वंसिनः क्रियानुपपत्तेः । स्थायित्वे हि सत्यऽहमुल्लेख्यस्य स्थायिनैव नीलादिना क्रियानिमित्तः सम्बन्धस्ततश्च क्रियानिमित्तैव नीलादेरप्यपरोक्षता स्यात् न च स्थायित्वमस्ति । यदेवमहमिति संविदः प्रतिक्षणं स्वलक्षणभेदेन भाव्यम् । स किं विद्यते नवेति स्वसंविदमगूहमाने ¶ रेवाभिधीयताम् । अथात्यन्तसादृश्यान्न ** भेदो ऽवभासत इति संविदो ऽपि चेत् स्वरूपं नावभासते आयातमान्ध्यम् †† शेषजगतः ।

अपि च । तद्रूपप्रतिभासे सादृश्यकल्पना प्रमाणविरुद्धा ‡‡ निष्प्रमाणिका च । तद्रूपप्रतीतेर्व्यामोहत्वान्न प्रमाणविरुद्धता §§ नाप्यप्रामाणिकता निर्बीजभ्रान्त्ययोगादिति चेत् नेतरेतराश्रयत्वात् । ‖‖ सिद्धे व्यामोहे सादृश्यसिद्धिः

* महायानिकेति १ पु॰, अतस्त्वयैव महायानिकेति ३ पु॰ ।
† अत्र तुशब्दोऽधिकः २ पु॰ । ‡ ग्राह्यकरूपेति २ पु॰ । § व्यावृत्त्येति २ पु॰
‖ अन्येन्यमीक्षमाणेष्विति १ पु॰, अन्योन्यमनिरीक्षमाणेष्विति ३ पु॰ ।
¶ एवकारो नास्ति १, २ पु॰ ।
** न भेदोऽवभासत इति संविदोऽपि स्वरूपं नावभासेत आयातमिति ३ पु॰ ।
†† अशेषस्येति २, ३ पु॰ ।
‡‡ निःप्रमाणकी चेति १ पु॰, निष्प्रामाणिकी चेति ३ पु॰ ।
§§ नाप्यप्रमाणिकत्वं चेति १ पु॰, नाप्रामाणिकतेति २ पु॰ ।
‖‖ सिद्धे व्यामोहत्वे-ऽइत्युपकान्यतं ३ पु॰ ।

प्रमाणविरोधाभावात्प्रमाणसद्भावाच्च। सिद्धे च सादृश्ये * तन्निमित्ता † व्यामोहसिद्धिः। स्यादेतत्। अव्यामोहे ऽपि तुल्यमेतत्। सिद्धे हि सादृश्यकल्पनाया ‡ अप्रामाणिकत्वे प्रमाणविरोधे च तद्रूपप्रतीतेरव्यामोहत्वम् अव्यामोहत्वे चास्याः सादृश्यकल्पनायाः निष्प्रमाणकत्वं प्रमाणविरोधश्च। नैतत्। स्वारसिकं हि प्रामाण्यं प्रतीतेरनपेक्षम्। तथा च तत्प्रामाण्यात्सादृश्यकल्पना § निष्प्रामाणिकी प्रमाणविरुद्धा च। न तु सादृश्यकल्पना स्वतःसिद्धा येन प्रामाण्यमावहेदप्रामाण्यपूर्विकैव सा। अथान्ते क्षयदर्शनादादौ क्षयानुमानम् अतो भिन्नत्वात्सादृश्यकल्पनेति। आदौ सत्त्वादर्शनादन्तेऽपि सा किं नानुमीयते। क्षयानुभवविरोधादिति चेत् इहापि तद्रूपस || त्वानुभवविरोधः। न ह्युभयोरनुभवयोः कश्चिद्विशेषः।

अथ मन्येत यो ऽसौ स्थिरत्वेनाभिमतो ऽहमुल्लेखः स किं कांचिदर्थक्रियां कुर्याद्वा न वा। यदि न कुर्यादसल्लक्षणप्राप्तेर्न परमार्थवस्तु। अथ कुर्यात् न तर्हि स्थायी। स्थायिनो ऽर्थक्रियाऽयोगात्। कथमयोगः। इत्थमयोगः। स तां कुर्वन् क्रमेण • कुर्याद्यौगपद्येन वा। न तावत्क्रमेण। पूर्वोत्तरकालयोस्तस्य विशेषाभावे ऽपि किमिति पूर्वस्मिन्नेव काले उत्तरकालभाविनीमपि न कुर्यात्। नापि यौगपद्येन। यावज्जीवकृत्यमेकस्मिन्नेव क्षणे कृतमित्युत्तरकाले तद्विरहादसल्लक्षणप्राप्तिः। अतो ऽर्थक्रियाकारित्वादेव न स्थायी। तेन प्रतिक्षणं भिन्नेष्वहमुल्लेखेषु तद्बुद्धिः सादृश्यनिबन्धनेति। उच्यते। अथ केयमर्थक्रिया यदभावादसल्लक्षण ** त्वप्राप्तिः। स्वविषयज्ञानजननम्। प्राप्तं तर्हि सर्वासामेव संविदां स्वसंविदितरूपत्वेन स्वविषयज्ञानाजननादसल्लक्षणत्वम्। न सन्तानान्तरे ऽपि तज्जननम् अनैन्द्रियकत्वात् अनुमाने ऽप्यर्थजन्यत्वाभावा ††-त्सार्वज्ञ्येऽपि न साक्षात्स्वसंविदं जनयति संसारसंविदकरूपत्वप्रसङ्गात् अतद्रूपत्वे तद्विषयत्वायोगात्। अथ क्षणान्तरोत्पादो ऽर्थक्रिया। चरमक्षणस्यासल्लक्षणत्वप्रसङ्गः। न च सर्वज्ञज्ञानजननेनार्थवत्त्वम्। चरमत्वानुपपत्तेः

* तन्निमित्तव्यामोहेति २ पु.।
† व्यामोहत्वेत्युपकल्पितं ३ पु.।
‡ अप्रमाणकत्वे-इति २ पु.।
§ निःप्रमाणिकेति २ पु.।
|| स्वतानुभवेति २ पु.।
• क्रमेण वा कुर्यादिति २ पु.।
** स्वप्राप्तिर्नास्ति २ पु.।
†† न सार्वज्ञ्येऽपि साक्षादिति २ पु., न सार्वज्ञ्येऽपि ज्ञाने साक्षादिति ३ पु.।

मुक्त्यभावप्रसङ्गात् । न च संवित्संविदो विषयः संविदात्मना भेदाभावात्प्रदीपस्येव प्रदीपान्तरम् । किञ्च । नार्थक्रियातः सत्त्वं भवति स्वकारणनिष्पन्नस्य कार्यजननात् । अतः प्रतीतिर्वक्तव्या । तच्च तस्या * अन्यतः सत्त्वप्रतीतिस्तस्या अप्यन्यत इत्यनवस्थानान्न क्वचित्सत्तावगम इति शून्यं जगदभविष्यत् । ननु स्वज्ञानार्थक्रियायाः स्वयंसिद्धत्वान्नानवस्था । न तह्यर्थक्रियातः सत्तावगमः । न हि स्वरूपमेव स्वस्यार्थक्रिया ।

यत्पुनः क्रमेणार्थक्रिया न युज्यते पूर्वोत्तरकालयोस्तस्य † विशेषाभावादिति । नैष दोषः । स्थायिनो ऽपि कारणस्य सहकारिसव्यपेक्षस्य जनकत्वात् विशेषाभावादित्ययुक्तम् । अथ कारणस्यान्यापेक्षा न युक्ता अकारणस्याऽपि नतरामित्यसहकारि विश्वं स्यात् । अथाकारणं कारणोत्पत्तयेऽपेक्षत इति चेत् अथ तत्कारणस्य कारणम् ‡ कारणं वा । कारणं चेन्नापेक्षितुमर्हति अकारणं चेन्नतराम् । अथ नापेक्षा हेतूनां सहकारिणीति ब्रूयाद्दर्शनेन बाध्येत । दृष्टं हि सहकार्यपेक्षत्वं हेतूनाम् । तस्माद्यथैव हेतोर्हेतुत्वं सति कार्ये केनाप्यतर्कणीयेन क्रमेण ज्ञायते सत्येव हेतौ कार्यस्य दर्शनात्तथा समेतसहकारिण्येव दर्शनात्सहकार्यपेक्षस्य तद्विज्ञेयम् ।

यस्तु मन्यते सहकारिजनितविशेषो हेतुः कार्यं जनयति अन्यथा ऽनुपकारिणो ऽपेक्षायोगादिति । स वक्तव्यो विशेषस्य स हेतुरहेतुर्वा । अहेतुश्चेद्विशेषोत्पत्तौ ना § पेक्ष्येत तच्च केवला एव सहकारिणो विशेषमुत्पादयेयुस्ततश्च कार्यं स्यात् । अथ हेतुः सहकारिभिरजनितविशेषस्तमेव कथं कुर्याद् विशेषस्य वा जननेऽनवस्था । अथ मतम् । न सर्वं कार्यं सहकारिभिरजनितात्मभेदहेतुजन्यम् समग्रेषु हेतुषु तावत्येवाभवदङ्कुरादि तथा किञ्चि ‖ त्सन्निहितसहकारिहेतुजन्यं यथा ऽक्षेपकारीन्द्रियादिज्ञानम् । तच्चाद्यो विशेषः सहकारिसन्निधानमात्रलभ्यः अक्षेपकारीन्द्रियादिज्ञानवदिति नानवस्था । अनुपकुर्वन्नपि तर्हि सहकार्यपे ¶ क्ष्येत न हि तत्र हेतोः सहकारिभ्य आत्मभेदः । मानुप-

* अपिशब्दोऽधिकः २ पु० । † विशेषस्याभावादिति २ पु० ।
‡ अथाऽकारणमिति २ पु० । § अपेक्षेतेति २ पु० ।
‖ तुशब्दो ऽधिकः २ पु० । ¶ अपेक्ष्यते–इत्युपकल्पितं २ पु० ।

कुर्वे* नपेक्ष्यते ऽतिप्रसङ्गात् स्वरूपे तु नोपकारोतिं किन्तु कार्ये तत्सिद्धेस्त-न्नान्तरीयकत्वात् । नित्यो ऽपि तद्वदनाधेयातिशयो भावः कार्यसिद्धये क्षणिक इव सहकारिणमपेक्षत इति किन्नाभ्युपेयते । यथैव क्षणिको भावः सहकारिस-मवधान एव कार्यं जनयति सामग्रीसाध्यत्वात्तथा नित्यो ऽपि स्वरूपानुपयो-गित्वे ऽपि सहकारिसमवधानं कार्योपयोगादपेक्षेत । अथ मतं क्षणिकोऽपि नैवापेक्षते ऽन्यजनकस्य स्वयमन्यापेक्षानुपपत्तेः । कार्यं तु यदन्यसन्निधौ भवति ततस्यान्यसन्निधावेव भावादन्यथा चाभावान्नित्यस्य तु जनकस्य सर्वदा† जननप्रसङ्गः । को हेतुरन्यापेक्षायाः । क्षणिकस्तु यो जनको भावः स न पुरस्तान्न पश्चादिति न‡ पूर्वोत्तरकालयोः कार्योत्पादः ।

इदमयुक्तम् वर्त्तते । किमत्रायुक्तम् । सति नियमे§ ऽपि निरपेक्ष-त्वम् । तथाहि । यः कश्चित् कस्यचित् क्वचिन्नियमः स‖ तदपेक्षाप्रभावितः अनपेक्षत्वे नियमानुपपत्तेः । एवं हि कार्यकारणभावसिद्धिः । कार्यार्थिभिश्च विशिष्टानां हेतूनामुपादानम् तत्र यदि न क्षणिकं कारणं सहकारिणमपेक्षते नापि तत्कार्यं कथं¶ नियमः । तथाहि । हेतुपरम्पराप्रतिबन्धान्न हेतुः स्वरूपे सहकारिणमपेक्षते न कार्ये स्वयंजननशक्तेः । नापि कार्यम् एकस्यापि शक्तिमत्त्वेन प्रसह्यजननात्तत्र सहकारिसन्निधिनियमो ऽनर्थकः स्यात् । काक-तालीयमुच्यते । तथाच कार्यकारणव्यवहाराः सर्वे एवोत्सीदेयुः । तस्मात् क्षणिकस्यापि भावस्य स्वयंजनकस्य स्वरूपानुपयोगिन्यपि सहकारिणि कार्य-सिद्धये ऽपेक्षा वाच्या कार्यस्यैव वा सामग्रीसाध्यत्वात्तत्र नियमात् तथा नित्येऽपीति न विशेषं पश्यामः ।

तदेवमहंकर्तुः** सदैकरूपावगमात्स्थायित्वे ऽप्यर्थक्रियासम्भवान्न नीलस्य स्वगतापरोक्षत्व†† साधेय‡‡ माहायानिकपक्षः समर्थ्यते । किन्तु ग्राहकस्याहङ्कर्तुरात्मनः स्थायिनो ऽभावे । स चैकरूपो ऽनुभवाद्युक्तिबलाच्च प्रसाधितः । ननु नानुमेयादिष्वपरोक्षता दृश्यते । उच्यते । नानुमेयादिष्व-

* अपेक्षते-इति ३ पु० ।
‡ नः-इति २ पु० ।
‖ तदपेक्षः प्रभावितस्त्वपपत्त्यत ३ पु० ।
** सदेकरूपस्यावगमादिति २ पु० ।
‡‡ महायानिकेति ५ पु० ।
† जननप्रसङ्गात् को हेतुरिति ३ पु० ।
§ अपिशब्दो नास्ति ३ पु० ।
¶ कथं सन्निधिनियम इति २ पु० ।
†† स्वशब्दो नास्ति २ पु० ।

परोक्षत्वं स्वज्ञानोत्पत्तावव्यापृतत्वात् । लिङ्गादीनामेव कुतश्चित्सम्बन्धवि-
शेषाद्विशिष्टैकार्थज्ञानहेतुत्वात् । प्रमेयस्य || स्वज्ञानोत्पत्तिहेतुत्वे प्रमाणा-
भावात् । अलं प्रसङ्गागतप्रपञ्चेन स्वावसर एवैतत्सुगतमतपरीक्षायां निपुण-
तर ¶ म्प्रपञ्चयिष्यामः ।

तदेवमहङ्कारग्रन्थिरस्मच्छ * ब्दसंशब्दितः प्रत्ययश्चासावादर्श इव
प्रतिबिम्बस्यानिदञ्चित्सम्बलितत्वेन तस्याभिव्यक्तिहेतुत्वात् । अतस्तस्य विष-
यवद्भवतीत्युपचारेणानिदञ्चिदात्मधातुरस्मत्प्रत्ययविषय उच्यते । स पुनरे-
वम्भूतो जाग्रत्स्वप्नयोरहमुल्लेखरूपेण सुषुप्ते † तत्संस्काररञ्जिताग्रहणाविद्या-
प्रतिबद्धप्रकाशत्वेन च गतागतमाचरन् संसारी जीवो विज्ञानघनो विज्ञा-
नात्मा प्राज्ञः शरीरी शारीर आत्मा सम्प्रसादः पुरुषः प्रत्यागात्मा कर्ता
भोक्ता क्षेत्रज्ञ इति च श्रुतिस्मृतिप्रवादेषु गीयते । किञ्च । न केवलमस्म-
त्प्रत्ययविषयत्वादध्यासार्हः अपरोक्षत्वाच्च । तत्साधनार्थमाह प्रत्यगात्म-
प्रसिद्धेरिति । न ह्यात्मन्य ऽप्रसिद्धे स्वपरसंवेद्ययोर्विशेषः । न च संवेदज्ञा-
नेनैव तत्सिद्धिरकर्मकारकत्वादतिप्रसङ्गात् । न च ज्ञानान्तरेण । भिन्नका-
लत्वे संवेद्यसम्बन्धानवगमात्स्वपरसंवेद्याविशेषात् । न ह्येककालं विरुद्ध-
विषयद्वय ‡ ग्राहिज्ञानद्वयोत्पादः । न हि देवदत्तस्याग्रपृष्ठदेशस्थितार्थव्यापि-
गमनक्रियाद्वयावेशो युगपद्दृश्यते । आह । माभूज्ज्वलनात्मकं क्रियाद्वयं युग-
पत् परिणामात्मकं तु भवत्येव । मैवम् । परिस्पन्दात्मकमपि भवत्यऽविरुद्धं
यथा गायन् गच्छतीति । परिणामात्मकमपि न भवति विरुद्धम् यथा
यौवनस्थाविरहेतुः । तस्मात्प्रत्यगात्मा स्वयंप्रसिद्धः सर्वस्य हानोपादाना-
वधिः स्वयमहेयो ऽनुपादेयः स्वमहिम्नैवापरोक्षत्वादध्यासयोग्यः ॥

ननु न क्वचिदपरोक्षमात्रे ऽध्यासो § दृष्टपूर्वः सर्वत्राक्षिसम्प्रयोगितया
पुरोवस्थितऽपरोक्ष एव दृश्यते इत्याशङ्क्याह न चायमस्ति नियम इति ।
अप्रत्यक्षे ऽपि ह्याकाश इति परोक्ष इत्यर्थः । अथवा अक्षव्यापारमन्तरेणाप्य-

* प्रदर्शयिष्याम इति ३ पु· ।
† तुशब्दोऽत्राधिकः ३ पु· ।
‡ विषयग्राहीति १ पु· ।
§ पूर्वशब्दो नास्ति २ पु· ।
|| प्रमेयस्य चेति २ पु· ।
¶ शब्देति नास्ति २ पु· ।

परोक्ष आकाशे बाला अयथार्थदर्शिन* स्तलमिन्द्रनीलतमालपत्त्रसदृशं मलिनताम्र धूमादिकमन्यत्र नीलोत्पलसमानवर्णताद्यऽध्यस्यन्ति एवम-विरुद्ध इति सम्भावनां निगमयति । यथा ऽऽकाशस्याक्षव्यापारमन्तराप्य-परोक्षता तथा दर्शयिष्याम: ।

ननु ब्रह्मविद्यामनर्थहेतु† निबर्हणीं प्रतिजानता ऽविद्यानर्थहेतु: सूचि-ता । तत: सैव कर्तृत्वाद्यनर्थबीजमुपदर्शनीया किमिदमध्यास: प्रपञ्च्यते इत्या-शङ्क्याह तमेतमेवंलक्षणमध्यासं पण्डिता: प्रमाणकुशला अविद्येति मन्यन्ते तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहु: । अध्यस्तातद्रूपसर्पविलयनं कुर्व-द्वस्तुस्वरूपं रज्जुरेवेत्यवधारयद् विज्ञानं विद्येति प्रसिद्धमेव लोके ब्रह्मविदो वदन्ति । यद्येवमध्यास इति प्रक्रम्य पुनस्तस्याविद्याभिधानव्याख्याने यत्नगौ-रवाद्वरमविद्येत्येवोपक्रम: कृत: । नैतत्सारम् अथैवविद्येत्येवोच्यमाने आच्छा-दकत्वं नाम यतस्यास्तत्त्वं तदेवाऽभिहितं स्यान्नातद्रूपावभासितया ऽनर्थहे-तुत्वम् अतो ऽतद्रूपावभासित्वमध्यासशब्देन प्रकृतोपयोगितयोपक्षिप्य पुनस्त-स्याविद्याशब्दतया विद्यामात्रा‡पनोदनार्हत्वं दर्शनीयम् तदेतदाह यत्र यद-ध्यासस्तत्कृतेन दोषेण गुणेन वा ऽणुमात्रेणाऽपि स न सम्बध्यत इत्यवास्त-वमनर्थं दर्शयति । वास्तवत्वे हि न ज्ञानमात्रात्तद्विगम इति प्रतिज्ञा हीयेत ।

एवम् तावद्युष्मदस्मदित्यादिना मिथ्याज्ञाननिमित्त: सत्यानृते मिथु-नीकृत्याहमिदं ममेदमिति§ नैसर्गिको ऽयं लोकव्यवहार इत्यन्तेन भाष्येण सिद्धवदुपन्यस्तमात्मानात्मनो:रितरेतरविषयमविद्याख्यमध्यासं सिषाधयिषु-स्तस्य लक्षणमभिधाय तत्सम्भवं चात्मनि दर्शयित्वा पुन‖स्तत्र सद्भावनि-श्चयमुपपत्तिम उपपादयितुमिच्छन्नाह तमेतमविद्याख्यमात्मनात्मनोरितरे-तराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा: लौकिका:¶ वैदिकाश्च प्रवृत्ता: सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणीति । मोक्षपरत्वं च शास्त्रस्य

* तलमिन्द्रनीलनीलपत्त्रसदृशं मलिनतां च धूमादि अन्यत्र नीलोत्पलसमानवर्णतामप्यध्य-स्यन्तीति २ पु. ।

† निबर्हिणीमिति ३ पु. ।

‡ अपनोदार्हत्वमिति १. २ पु. ।

‖ पुनस्तत्सद्भावनिश्चयमिति २ पु. ।

+ अन्तरेणेति २ पु. ।

§ नैसर्गिको योऽयमिति ३ पु. ।

¶ वैदिकाश्चेति नास्ति ३ पु. ।

विधिप्रतिषेधविरहिततयोपादानपरित्यागशून्यत्वात्स्वरूपमात्रनिष्ठत्वमङ्गीकृत्य पृथक् क्रियते । कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति । बाढमुक्तलक्षणाविद्या प्रत्यग्दृश्यपि सम्भवेन्नैतावता तत्स *-म्भवः सिध्यति तेन निदर्शनीयः सः । प्रमातारमाश्रयन्ति प्रमाणानि तेन प्रमाता प्रमाणानामाश्रयो नाविद्यावान् अनुपयोगादित्यभिप्रायः । अथवा । कथमविद्यावद्विषयाणि प्रत्यक्षादीनि शास्त्राणि † च प्रमाणानीति सम्बन्धः । अविद्यावद्विषयत्वे सत्याऽऽश्रयदोषानुगमादप्रमाणान्येव स्युरित्याक्षेपः । उच्यते । देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेरिति भाष्यकारस्य वस्तुसंग्रहवाक्यम् अस्यैव प्रपञ्चो नहीन्द्रियाण्यनुपादाये ‡ त्यादिः । न हि देहेन्द्रियादिष्वहंममाभिमानहीनस्य सुषुप्तस्य प्रमातृत्वं दृश्यते । यतो देहे ऽहमभिमानः इन्द्रियादिषु ममाभिमानः आदिशब्देन बाह्वाद्यवयवग्रहणम् । देहशब्देन सशिरस्को मनुष्य § त्वादिजातिसम्भिन्नो ऽवयव्यभिमतो न शरीरमात्रम् देहो ऽहमिति प्रतीत्यऽभावात्सर्वो हि मनुष्यो ऽहं देवो ऽहमिति जातिविशेषैकाधिकरणे ‖ चैतन्ये एव ¶ प्रवर्तते इति स्वसाक्षिकमेतन्न स्वत्वेन संबन्धिना मनुष्यावयविना तदनुस्यूतेन वा चक्षुरादिना प्रमात्रादिव्यवहारः सिध्यति । भृत्यादिमनुष्यावयविनापि प्रसङ्गात् ।

अपर आह । आत्मेच्छानुविधायित्वं कार्य ** कारणसंघातस्यात्मना सम्बन्धस्तस्यापि तस्य यथेष्टविनियोजकत्वं तेन सम्बन्धस्तत आत्मनः प्रमात्रादिकः सर्वः क्रियाकारकफलव्यवहारस्तथा चोत्तिष्ठामीति इच्छयोत्तिष्ठत्युपविशति च । नच भृत्यादिषु तदस्ति । तेन तत्र प्रमात्रादिव्यवहाराभावो न मिथ्या मुख्याभिमानाभावादिति । नैतत् संविदि बहुमानवतो युक्तम् । तथाहि । मनुष्योऽहमिति स्वसाक्षिका संवित् न मे मनुष्य इति । गौणीति चेद्भवानेवात्र †† प्रमाणम् । अपि ‡‡ च । इच्छापि परिणामविशेषः स कथमपरिणामिन आत्मनः स्यात् परिणाम्यन्तःकरणसम्वलिताऽहङ्कर्तृ-

* तत्सद्भाव इति २ पु० ।
† च शब्दो नास्ति ३ पु० ।
‡ इत्यादि—इति १, ३ पु० ।
§ त्वप्रत्ययो नास्ति १, २ पु० ।
‖ समासो २ पु० ।
¶ प्रवृत्त इति ३ पु० ।
** करणेति २ पु० ।
†† भवानेव प्रमाणमिति २ पुस्तके
‡‡ अपि चेदिच्छापीति १ पु० ।

त्वमन्तरेण । तथा चानुभवो ऽहमुत्तिष्ठामीति इच्छयोत्तिष्ठत्युपविशति च । तस्माद्यत्किञ्चिदेतत् । अतः स्वयमसङ्गस्याविकारिणोऽविद्याध्यासमन्तरेण न प्रमातृत्वमु* पपद्यते । तेन यद्यपि प्रमातृत्वशक्तिसन्मात्रं प्रमाणप्रवृत्तौ निमित्तम् । तदेव त्वविद्याध्यासविलसितमित्यविद्यावद्विषयता प्रमाणानां † मुच्यते । तथा निरपेक्षाणां स्वसामर्थ्येनार्थसिद्धिं विदधतां बाधानुपलब्धेः प्रामाण्यमविद्यावद्विषयत्वं च विधिमुखोपदर्शितं न नेति शक्यमपह्नोतुम् । दोषस्त्वागन्तुक एव मिथ्यात्वे हेतुर्न नैसर्गिकस्तथोपलब्धेः । न च सर्वसाधारणे नैसर्गिके दोषबुद्धिस्तथाहि क्षुत्पिपासोपजनिते सन्तापे शश्वदनुवर्तमाने जाठराग्निकृतविकारे ऽन्नपाननिष्यन्दे वा न रोगबुद्धिर्जनस्य । मुहूर्तमात्रपरिवर्तिनि मन्दे ज्वरे प्रतिश्याये वाऽल्पकफप्रसूतावपि रोगबुद्धिरनैसर्गिकत्वात् । अनैसर्गिकं च दोषमभिप्रेत्योक्तं यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः ‡ प्रत्ययो नान्य इति ।

इतश्चैतदेवं पश्वादिभिश्चाविशेषात् । तथाच पश्वादयः प्रमातृत्वादिव्यवहारकाले प्रवृत्तिनिवृत्त्योदासीन्यं भजमानाः कार्यकारणसंघात एवाहंमानं कुर्वन्तीति प्रसिद्धं लोके । तदेकरूपयोगक्षेमा हि मनुष्या जन्मत एव पश्वादिभ्यो ऽधिकतरविवेकमतयः शास्त्राधेयसाम्परायिक§ मतिसामर्थ्या अपि असमस्तदेकरूपकार्यदर्शना|| त्कार्यकारणसंघाते ऽप्यात्माभिमानः समानो युक्तः । ननु पश्वादीनामपि कार्य ¶ कारणसंघाते ऽहङ्कारानु ** बन्ध इति कुतो ऽवसीयते येन || सिद्धवदभिधीयते । उच्यते । प्रौढमतिभ्य एव प्रत्यक्षादिवृत्तकुशलैरात्मा व्युत्पाद्यते ऽन्यथा तदनर्थकत्वप्रसङ्गात् एवमेव प्रमाणविचारविरहे सर्वः ‡‡ संप्रतिपद्येत ॥

ननु गोपालाङ्गनादयः प्रमाणविरहमेव वर्तमानदेहपातेपि स्थायिनं भोक्तारं मन्यमानास्तदर्थमाचरन्ति । न । तदभिज्ञव्यवहारमात्रप्रमाणक§§ त्वात् । तथाच ते पृष्टाः कः परलोकसम्बन्धीति न विद्मो विशेषतः प्रसिद्धो लोके

* उपलभ्यत इति २ पु० ।
‡ प्रत्यय इति नास्ति २ पु० ।
|| कार्यकारणेति २ पु० ।
** अनुसम्बन्ध इति २ पु० ।
‡‡ प्रतिपद्यते इति २ पु० ।

† प्रमाणानामित्युच्यत इति १ पु० ।
§ मतिसमर्था अपीति ३ पु० ।
¶ करणेति २ पु० ।
++ पश्वभ्योऽधिकः २ पु० ।
§§ कप्रत्ययो नास्ति २ पु० ।

इति प्रतिब्रुवन्ति । तस्मादुक्तमुक्तम् । पश्वादीनां च प्रसिद्धो ऽविवेकपूर्वकः प्रत्यक्षादिव्यवहारस्तत्सामान्यदर्शनाद् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति । एवं तावत्प्रत्यक्षादीनि प्रमाणानि चक्षुरादिसाधनानि तानि च नाधिष्ठानशून्यानि व्याप्रियन्ते अधिष्ठानं च देहो न तेनानध्यस्तात्मभावेनासङ्गस्याविकारिणश्चैतन्यैकरसस्यात्मनः प्रमातृत्वमुपपद्यत इत्यनुभवारूढमविद्यावद्विषयत्वं प्रत्यक्षादीनामुपदिश्य पश्वादिव्यवहारसाम्येन कार्यतो ऽप्यापाद्य शास्त्रं पुनः प्रतिपन्नात्मविषयमेव तेन न तत्राध्यासपूर्विका प्रवृत्तिरिति विशेषमाशङ्क्य तस्याप्यविद्यावद्विषयत्वप्रदर्शनायाह शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वा ऽऽत्मनः परलोकसम्बन्धमधिक्रियते इति ।

ननु फलनैयमिकनैमित्तिकप्रायश्चित्तचोदना वर्त्तमानशरीरपातादूर्ध्वकालस्थायिनं भोक्तारमन्तरेणापि प्रमाणतामश्नुवत एव । यथा चैतदेवं तथैक आत्मनः शरीरे ऽभावादित्यधिकरणारम्भे दर्शयिष्यामः । सत्यमेवम् । तथापि सकलशास्त्र * पर्यालोचनापरिनिष्पन्नं † प्रामाणिकमर्थमङ्गीकृत्याह ‡ भाष्यकारः । तथाच विधिवृत्तमीमांसाभाष्यकारो ऽप्युत्सूत्रमेवा § त्मसिद्धौ पराक्रान्तवान् । तत्कस्य हेतोः । धर्मजिज्ञासेति कार्यार्थविचारं प्रतिज्ञाय तदवगमस्य प्रामाण्ये ऽनपेक्षत्वं कारणमनुसरता सूत्रकारेण विशेषाभावात्स्वरूपनिष्ठानामपि वाक्यानां प्रामाण्यमनुसृतं ‖ मन्यते तथा चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवञ्जातीयकमर्थं शक्नोत्यवगमयितुमिति वदंश्चोदनाशेषत्वेनापि स्वरूपावगमे ऽनपेक्षत्वमविशिष्टमवगच्छतीत्यवगम्यते । स च स्वरूपावगमः कस्मिन् कथं ¶ वेति धर्ममात्रविचारं प्रतिज्ञाय तत्रैव प्रयतमानेन, भगवता जैमिना न मीमांसितमुपयोगाभावाद्भगवांस्तु पुनर्बादरायणः पृथग् ** विचारं प्रतिज्ञाय व्यचीचरत् समन्वयलक्षणेन । तत्र च देहान्तरोपभोग्यः स्वर्गः स्यास्यति । तच्च सर्वं कार्यकारणसंघातादन्येन भोक्रा विना न सिध्यति । तत्सिद्धिश्च नागममात्रायत्ता । प्रमाणान्तरगोचरस्य तदभावे तद्विरोधे वा

---

* पर्यालोचनया परिनिष्पन्नमिति ३ पु० । † समासो ऽत्र २ पु० ।
‡ भगवानित्यधिकं ३ पु० । § आत्मसिद्धौ-इति ३ पु० ।
‖ अनुस्मृतमिति २ पु० । ¶ वेतीति २ पु० । ** पृथक्तद्विचारमिति २ पु० ।

शिलाप्लवनवाक्यवदप्रामाण्यप्रसङ्गात् । अतस्तत्सिद्धौ परापेक्षान्तवान् । तेन सत्यं विनापि तेन सिध्येत्प्रामाण्यम् । अस्ति तु तत्तस्मिन् विद्यमाने न तेन विना प्रामाण्यं सिध्यति फलादिचोदनानामिति मत्वा ऽऽह शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वात्मनः परलोकसंबन्धमधिक्रियते इति तथापि न वेदान्तवेद्यमिति ।

किं तदित्यत आह असंसार्यात्मतत्त्वं न तदधिकारेऽपेक्ष्यतेऽनुपयोगादधिकारविरोधाच्च । अशनायाद्यतीतमित्य ऽसंसार्यात्मतत्त्वं दर्शयति । अशनायाद्युपप्लुतो हि * सर्वो जन्तुः स्वास्थ्यमलभमानः प्रवर्तते तदपाये स्वास्थ्ये स्थितो न किंचिदुपादेयं हेयं वा पश्यति । अपेतब्रह्मक्षत्त्रादिभेदमिति प्रपञ्चशून्यमेकरसं दर्शयति । प्राक् च तथाभूतात्मविज्ञानात्प्रवर्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्तत इति । तत्त्वमसीतिवाक्यार्थावगमादर्वागविद्याकृतं † संसारमहमुल्लेखमाश्रित्य प्रवर्तमानं शास्त्रं नाऽविद्यावद् ‡ विषयत्वमतिवर्तते । तस्मादुक्तमुक्तं प्रत्यक्षादीनां प्रमाणानां शास्त्रस्य चाविद्यावद्विषयत्वम् ।

तदेव दर्शयति । तथाहि । ब्राह्मणो यजेतेत्यादीनि शास्त्राणयात्मन्यतदध्यासमाश्रित्य प्रवर्तन्ते । वर्णवयोध्यासः अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिः § । आश्रमाध्यासो न ह वै स्नात्वा भिक्षेतेति । अवस्थाध्यासो यो ज्योगामयावी स्यात्स एतामिष्टिं निर्वपेदिति । आदिशब्देन यावज्जीवं जुहुयादिति जीवनाध्यासः । एवमध्याससद्भावं प्रसाध्य स्मृतिरूप इत्यादिना सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरतीत्यन्तेन भाष्येण लक्षितं निरूपणरितममतदारोपम् अध्यासो नामातस्मिँस्तद्बुद्धिरित्यवोचामेति परामृशति । कस्य युष्मदर्थस्य कस्मिन्नस्मदर्थे तद्विपर्ययेण चाध्यास इति विवेकतः प्रदर्शयितुमतस्मिन्नऽयुष्मदर्थेऽनिदंचिति तद्बुद्धिर्युष्मदर्थावभास इत्यर्थः । तदाह तद्यथा पुत्रभार्यादिष्वित्यादि ।

ननु प्रणव एष विप्लवो नहि पुत्रादीनां वैकल्यं साकल्यं वा ऽऽत्मनि मुख्यमध्यस्यति मुख्यो ह्यतदारोपो दर्शयितुं प्रारब्धः । सत्यम् । 'स

* सर्व इति २ पुस्तके नास्ति । † अविद्याकृतं रसान्तरमिति २ पु॰ पाठः । ‡ मतुपप्रत्ययो नास्ति १ पु॰ । § आदिशब्दो नास्ति २ पु॰ ।

एव * निदर्श्यते । कथम् । तद्यथा बालके प्रातिवेश्यमात्रसंबन्धिना केनचिद्वस्त्रालङ्कारादिना पूजिते निरुपचरितमात्मानमेव पूजितं मन्यते पिता । पूजयितापि पितरमेवा † पूपुजमिति मन्यते । यतो न बालकस्य पूजित ‡ त्वाभिमानोऽव्यक्तत्वात् । तथैव राजानमुपहन्तुकामो ऽनन्तरो विजिगीषुस्तद्राष्ट्रे ग्राममात्रमप्युपहत्य तमेवोपघ्नन्तमात्मानं मन्यते सो ऽप्युपहतोस्मीति संतप्यते । तदेवं प्रसिद्धव्यतिरेकस्यात्मनि मुख्य एवाध्यासो दृष्टः किमु वक्तव्यं कृशस्थूलाद्यभिमानस्य मुख्यत्वमिति कथयितुमाह अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यतीति । बाह्येषु पुत्रादिषु पूजादेर्धर्ममात्रस्यैव युष्मदर्थस्याध्यासः ।

अस्मदर्थश्चाहंप्रत्ययिसम्भिन्न एवानिदंचिदंशो विषयो न पुनः शुद्ध एवाहंप्रत्ययिन इवाध्यासेऽध्यासान्तरानास्कन्दितस्तथा देहधर्मान् कृशत्वादानिति धर्मिणो ऽपि धर्मशब्दस्तु मनुष्यत्वादिधर्मसमवायिन एवाध्यासो न देहोऽहमिति कथयितुं तन्निमित्तश्च शास्त्रेणेतश्चेतश्च नियमः क्रियते तथेन्द्रियधर्मान्मूकत्वादीनिति धर्ममात्रं तथान्तःकरणधर्मान् कामादीनिति धर्मग्रहणमन्तःकरणमित्यहंप्रत्ययिनो विज्ञानशक्तिभागो ऽभिधीयते तस्य धर्माः कामादयः । एवमहंप्रत्ययिनमिति धर्मिग्रहणम् । प्रत्ययाः कामादयो ऽस्येति प्रत्ययी अहं चासौ प्रत्ययी चेत्यहंप्रत्ययी तमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्येति स्वशब्देनाहङ्कारग्रन्थिः संसारनृत्यशालामूलस्तम्भो ऽभिधीयते । तस्य प्रचारः कामसङ्कल्पकर्तृत्वादिरनेकविधः परिणामो यन्निमित्तं ब्रह्मादिस्थावरान्तेषु प्रदीप्तशिरा इव परवशो जन्तुर्बम्भ्रमीति ।

तं प्रचारमशेषमसङ्गितया ऽविकारित्वेन च हानोपादानशून्यः साक्षादव्यवधानमवभासयति § चितिधातुः स एव देहादिष्विदन्तया बहिर्भावमापद्यमानेषु || प्रातिलोम्येनाञ्चतीवो ¶ पलक्ष्यते इति प्रत्यगुच्यते आत्मा च निरुपचरितस्वरूपत्वात् । तत्राध्यस्य तं च प्रत्यगात्मानमिति । यदि युष्मदर्थस्यैव प्रत्यगात्मनि अध्यासः स्यात् प्रत्यगात्मा न प्रकाशेत न हि शुक्तौ रजताध्यासे शुक्तिः प्रकाशते प्रकाशते चेह चैतन्यमहङ्कारादौ तथा यदि चैतन्यस्यैवाहङ्का-

* निर्दिश्यते इति २ पु· । † अपूपुजमिति २ पु· । ‡ पूजिताभिमान इति २ पु· ।
§ चिद्धातुरिति २ पु· । || प्रतिलोम्येनेति २ पु· । ¶ उपलभ्यते-इति २ पु· ।

रादावध्यासो भवेत्तदा नाहङ्कारप्रमुखः प्रपञ्चः प्रकाशेत तदुभयं मा भूदित्यनु-
भवमेवानुसरन्नाह तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादि-
ष्वध्यस्यतीति । नात्र विवदितव्यमितरेतराध्यासे पृथगवभासनान्न मिथ्यागौ-
णोऽयमिति तथानुभवाभावान्मुख्या * भिमानः । नहि दृष्टेऽनुपपन्नं नाम ।

नन्वन्तःकरण एव प्रत्यगात्मनः शुद्धस्याध्यासो ऽन्यत्र पुनश्चैतन्या-
ध्यास । परिनिष्पन्नापरोक्षमन्तःकरणमेवाध्यस्यते अत एव तद्विपर्ययेण विष-
यिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तमित्युक्तम् । अन्यथा
चैतन्यमात्रैकरसस्य कुतो धर्मा ये ऽध्यस्येरन् । सत्यमाह भवान् अपि त्वन्य-
थान्तःकरणं सचित्कमेवाध्यस्यमानं यत्राऽध्यस्यते तस्यैवात्मनः ‡ कार्यकर-
त्वमापाद्य स्वयमविद्यमानमिव तिरस्कृतं तिष्ठति चिद्रूपमेव सर्वत्राध्यासे स्वतः
परतो वा न विशिष्यते तेनोच्यते तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्यये-
णान्तःकरणादिष्वध्यस्यतीति । अत एव बुद्ध्यादिष्वेव चिद्रूपमनुस्यूतमुत्प्रेक्ष-
माणा बुद्धिमनःप्राणेन्द्रियशरीरेष्व § केकस्मिँश्चेतनत्वेनाहङ्कर्तृत्वं योजयन्तो
भ्राम्यन्ति । एवमयमनादिरनन्तो नैसर्गिको ऽध्यास इति निगमयति ।

ननूपन्यासकाले नैसर्गिको ऽयं लोकव्यवहार इति || लोकव्यवहारो नैस-
र्गिक उक्तः कथमिहाध्यासो निगम्यते ऽनादिरिति चाधिकावापः । अत्रोच्यते ।
तत्रापि प्रत्यगात्मन्यहङ्कारा ¶ ध्यास एव नैसर्गिको लोकव्यवहारो ऽभिप्रेतः ।
स च प्रत्यगात्मा ऽनादिसिद्धस्तस्मिन् नैसर्गिकस्यानादित्वमर्थसिद्धमतः
प्रक्रमानुरूपमेव निगमनं नचाधिकावापः ।

ननु भवेदनादिः । अनन्तः कथम् । यदि स्यात्तत्प्रहाणाय कथं वेदान्ता
आरभ्यन्ते । अन्तवत्त्वेऽपि तर्हि कथं ** स्वतो ऽन्यतो वा तत्सिद्धेस्तस्माद-
नन्तस्य प्रहाणाय †† वेदान्ता आरभ्यन्त इत्युक्तेऽर्थादेष एव प्रहाणहेतुरसत्य-
स्मिन्ननन्त इति निश्चीयते । मिथ्याप्रत्यय ‡‡ रूपइति रूपग्रहणं लक्षणतस्तथा
रूप्यते न व्यवहारत इति दर्शयितुम् । कर्तृत्वभोक्तृत्वप्रवर्तन इति अनर्थहेतुत्वं

---

* भिमानादिति ३ पु. ।
† परिनिष्पन्नापरोक्षमिति १, २ पु. ।
‡ कार्यकरणत्वमिति क्वचित ।
§ एवशब्दोऽत्राधिकः २ पु. ।
|| नैसर्गिको लोकव्यवहार इति ३ पु. ।
¶ आदिशब्दोऽत्राधिकः २ पु. ।
** स्वतो वा परतो वेति २ पु. ।
†† कथमित्यधिकमत्र १, ३ पु. ।
‡‡ रूपमितीति २ पु. ।

दर्शयति हेयतासिद्धये तेन कर्तुर्भोक्तुश्च सतो * मिथ्याज्ञानं दोषप्रवर्तनमिति येषां मतं तन्निराकृतं भवति । सर्वलोकप्रत्यक्ष इति । देहेन्द्रियादिष्वहंममाभिमानहीनस्येत्युपन्यस्य नहीन्द्रियाण्यनुपादायेत्यादिना यो ऽनुभवो मिथ्यात्वसिद्धये ऽनुसृतस्तं निगमयति ।

एवं तावत्सूत्रेणार्थो † पात्तयोर्विषयप्रयोजनयोः सिद्धये जीवस्या ऽब्रह्मस्वरूपत्वमध्यासात्मकमुपदर्श्यास्यानर्थहेतोः प्रहाणायेति प्रयोजनं निर्दिशति । हेतोः प्रहाण्या हि हेतुमतः प्रहाणिरात्यन्तिकी यतः । नन्वनर्थहेतुरध्यासो ऽनादिः स कथं प्रहीयते । तथा हि ‡ मनुष्यादिजातिविशेषमात्राध्यासस्ततो विविक्ते ऽपि न्यायतो ऽहंप्रत्यये ऽनादित्वात्पूर्ववद् § ऽविकलो वर्तते । नायं दोषः । तत्त्वमसीत्यादिवाक्याद्ब्रह्म ‖ रूपावगाहि ¶ ज्ञानान्तरोत्पत्तेरिष्टत्वात् । तद्धि ब्रह्मणो ऽवच्छिद्यैव चैतन्यस्य ब्रह्मरूपत्वप्रच्छादनेन जीवरूपत्वापादिकामनादिसिद्धामविद्यामहङ्कारादिविक्षेपहेतुं निराकुर्वदेवोत्पद्यते । ततः कारणनिवृत्तौ तत्कार्यमहमिति जीवे भोक्तृत्व ** रूपता सपरिकरा निवर्तते इति युज्यते । अहंप्रत्ययः पुनरनादिसिद्धो ऽनादिसिद्धेनैव कार्य †† करणमात्रेण सहभावादविरोधान्न स्वरूपविवेकमात्रेण निवर्तते । नापि ‡‡ ज्ञानान्तरसमुत्पन्नमिति विशेषः ।

ननु निरतिशयानन्दं ब्रह्म श्रूयते ब्रह्मावाप्तिसाधनं च ब्रह्मविद्या स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतिभ्यस्तस्मान्निरतिशयसुखावाप्तये इति वक्तव्यम् । किमिदमुच्यते ऽनर्थहेतोः प्रहाणायेति । ननु चानर्थस्यापि समूलस्य प्रहाणं श्रूयते ब्रह्मविद्याफलम् । तरति शोकमात्मवित् । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमान §§ मेति वीतशोक इति च उभयं तर्हि वक्तव्यं श्रूयमाणत्वात् पुरुषार्थत्वाच्च । न वक्तव्यम् । कथम् । आत्मैकत्व विद्याप्रतिपत्तय इत्यात्मनो जीवस्य ‖‖ ब्रह्मात्मकता शास्त्रस्य विषयस्तेनानन्दात्मक ¶¶ ब्रह्मस्व ** रूपताप्राप्तिर्जीवस्य विषयतयैव संवृत्ता न च सा

* जीवस्येत्यधिकं ३ पु० । † अर्थादुपात्तयोरिति २ पु० । ‡ मनुष्यत्वादीति २, ३ पु० ।
§ अविचलदिति २ पु० । ‖ ब्रह्मरूपतायगाहीति २ पु० । ¶ विशब्दोऽत्राधिकः २ पु० ।
** त्वप्रत्ययो नास्ति २ पु० । †† कारणेति ३ पु० । ‡‡ ज्ञानान्तरमुत्पन्नमिति २ पु० ।
§§ एतिस्थाने इतिशब्दः २, ३ पु० । ‖‖ ब्रह्मात्मकतेति ३ पु० ।
¶¶ कप्रत्ययो नास्ति २ पु० । ** स्वशब्दो नास्ति २ पु० ।

विषयाद्बहिर्येन पृथङ्निर्देशार्हो स्यात्समूलाऽनर्थहानिस्तु बहिः शास्त्रविषयाद् * ब्रह्मात्मरूपात् । अनर्थहेतुप्रहाणमपि † तर्हि न पृथङ्निर्देष्टव्यम् । यतः । सर्वेषु वेदान्तेष्वलौकिकत्वाद् ब्रह्मणस्तत्प्रतिपादनपूर्वकमेव जीवस्य तद्रूपता प्रतिपाद्यते । तद्यथा सदेव सोम्येदमग्र आसीदित्युपक्रम्यैतदात्म्यमिदं सर्वन्तत्सत्यम् स आत्मेत्यवसानं निरस्त ‡ समस्तप्रपञ्चं वस्तु तत्पदाभिधेयं समर्पयदेकं वाक्यम् तथा सति तादृशेन तत्पदार्थेन संसृज्यमानस्त्वंपदार्थः पराकृत्यैव निर्लेपमनर्थहेतुमग्रहणमन्यथाग्रहणं च तथा निश्चीयते इति । यद्येवं ब्रह्मात्मावगतिनान्तरीयकमनर्थहेतोरविद्यायाः प्रहाणं न शब्दस्य तत्र व्यापारस्तेन पृथङ्निर्दिश्यते । युक्तं चैतत् । न हि विपर्यासगृहीतं वस्तु तन्निरासादृते तत्त्वतो निर्णेतुं शक्यम् । तस्मात् पूर्वापरमितमतद्रूपं निरस्यदेव तत्त्वावद्योतिवाक्यं तत्त्वमवसाययति ।

ननु च नञादेर्निरासकृतो निरस्यमानवाचिनश्च पदस्याश्रवणात्कथं तन्नि§रस्यदेवेति । उच्यते । नेदं रजतमिति यत्र विपर्ययासमात्रं निरस्यते न वस्तुतत्त्वमवबोध्यते । तत्र तथा भवतु । इह पुनर्विज्ञानमेव तादृशमुत्पन्नं यद्विरोधिनिराकरणमन्तरेण न स्वार्थं साधयितुमलम् तुलोन्नमनव्यापार ‖ इवानमननान्तरीयकः । तथाह्युन्नमनव्यापारः स्वविषयस्य ¶ तुलाद्रव्यस्योर्ध्वदेशसम्बन्धं न साधयितुमलं तत्कालमेव तस्याधोदेशसम्बन्धमनापाद्य । न चोन्नमनकारकस्य हस्तप्रयत्नादेरामनने ऽपि कारकत्वम् । प्रसिद्ध्यभावादनुभवविरोधाच्च । तदेवं विपर्यासगृहीते वस्तुनि तत्त्वावद्योतिशब्दनिमित्त आत्मनो ज्ञानव्यापारो नाहं कर्ता ब्रह्माहमिति ग्राहयति । नेदं रजतं शुक्तिकेयमिति यथा । तस्माच्छुक्तिकेयमित्येव निराकाङ्क्षं वाक्यं नेदं रजतमित्यनुवादः । अत एवाख्यातपदस्य वाक्यत्वे क्रियाज्ञानादेव तत्साधनमात्रे ऽपि प्रतीतिसिद्धिः । पदान्तराणि नियमायानुवादाय वेति न्यायविदः । तथाचाहु**- र्यजतिचोदना द्रव्यदेवताक्रियासमुदाये कृतार्थत्वादिति ।

* ब्रह्मात्मतात्स्वरूपादिति ३ पु० ।
† न तर्हीति ३ पु० ।
‡ समस्तेति नास्ति १, २ पु० ।
§ निरस्यदुच्यते-इति १ पु० ।
‖ इवावनमनेति ३ पु० ।
¶ तुलेति २ पु० न दृश्यते ।
** यजतिचोदना द्रव्यं देवताक्रियासमुदाय इति ३ पु० ।

अपरे तु यज्ञं व्याख्यास्यामो द्रव्यं देवता त्याग इति। कथं क्रियामात्रवाचिनो द्रव्यदेवताभिधानं नान्तरीयकं तद्विषयज्ञाननिमित्तत्वं विहाय प्रत्यक्षबाधस्याप्ययमेव प्रकारोऽसंप्रयुक्तविषयत्वाद्बाधस्य । तदेवमशाब्दमविद्याविलयं मन्वानः श्रुतिन्यायकोविदो भगवान् भाष्यकारो विषयात्पृथङ् निर्दिशत्यस्यानर्थहेतोः प्रहाणायेति चतुर्थीप्रयोगो ऽपि विद्यासामर्थ्यसिद्धिमभिप्रेत्य न तदर्थमुपादनं प्रयोजनत्वं च पुरुषाकाङ्क्षया एवास्तु । न हि विद्या गवादिवत्तटस्था सिध्यति येनाप्तिः पृथगुपादीयेत । सा हि * वेदिताश्रया वेद्यं तस्मै प्रकाशयन्त्येवोदेति। सत्यमेवमन्यच । प्रकृते पुनर्विषये विद्योदितापि न प्रतिष्ठां लभते असम्भावना † विपरीतभावनाभिभूतविषयत्वात् । तथा च लोके यस्मिन् देशे काले चेदं वस्तु स्वरूपत एव न सम्भवतीति दृढभावितम् यदि ‡ तत्कथंचिद्दैववशादुपलभ्येत तदा स्वयमीक्षमाणो ऽपि तावन्नाध्यवस्यति यावत् तत्सम्भवं नानुसरति । तेन सम्यग्ज्ञानमपि स्वविषयेऽप्रतिष्ठितमनवाप्तमिव भवति। § तेन तत्स्वरूपप्रतिष्ठायै तर्कं सहायीकरोति। अत एव प्रमाणानामनुग्राहकस्तर्क इति तर्कविदः ।

अथ कोऽयं तर्को नाम । युक्तिः । ननु पर्याय एषः । स्वरूपमभिधीयताम् । इदमुच्यते। प्रमाणशक्तिविषयतत्सम्भवासम्भवपरिच्छेदात्मा प्रत्ययः। नन्वेवं तर्कसापेक्षं स्वमर्थं साधयतो ऽनपेक्षत्वहानेरप्रामाण्यं स्यात् । न स्यात्स्वमहिम्नैव विषयाध्यवसायहेतुत्वात्। क्व तर्हि तर्कस्योपयोगः। विषयासम्भवाशङ्कायां ‖ तथानुभवफलानुत्पत्तौ तत्सम्भवप्रदर्शनमुखेन फलप्रतिबन्धविगमे। तथा च तत्त्वमसिवाक्ये त्वंपदार्थो जीवस्तत्पदार्थब्रह्मस्वरूपतामात्मनो ऽसम्भावयन् विपरीतं च रूपं मन्वानः समुत्पन्ने ऽपि ज्ञाने तावन्नाध्यवस्यति यावत्तर्केण विरोधमपनीय तद्रूपतामात्मनो न सम्भावयति। ततः प्राग् विद्योदितापि वाक्यादनवाप्तेव भवति । अवाप्तिप्रकारश्च वेदान्तेष्वेव निर्दिष्टः । साक्षादनुभवफलोद्देशेन तेनोच्यते विद्याप्रतिपत्तये इति ।

नन्वात्मैकत्वविद्याप्रतिपत्तिर्नानर्थहेतुप्रहाणाय ¶ प्रभवति। तथाहि।

---

* वेदित्रा श्रुत्येति १, २ पु· ।
† विपरीतसंभावनेति क्वचित् ।
‡ तदिति नास्ति ३ पु· ।
§ तेन स्वप्रतिष्ठायै–इति ३ पु· ।
‖ शङ्कयेति २ पु· ।
¶ प्रहाणाय भवतीति २ पु· ।

जीवस्य कार्य * कारणसंघातादन्यत्वप्रतिपत्तेर्ब्रह्मस्वरूपताप्रतिपत्तिर्न विशिष्यते उभयथाप्यहङ्कारग्रन्थेर्मनुष्याभिमानपर्यन्तस्याविकलमनुवर्तमानत्वात् । उच्यते । भवतु तत्राविद्याया अनिर्वर्तितत्वात्तदिह पुनरपसारिताऽविद्यादोषं ब्रह्मात्मज्ञानमुदयमासादयत्कथं तन्निमित्तं भोक्त्रादिग्रन्थिप्रवाहं नापनयति । नहि जीवस्य ब्रह्मात्मावगमस्तद्विषयानवगममऽबाधमान उदेति ॥

ननु ब्रह्मज्ञानादग्रहणापाये तन्निमित्तस्याहङ्कारग्रन्थेस्तत्कालमेवाभावः प्रसज्येत। न । संस्कारादप्यग्रहणानुवृत्तेः सम्भवाद् भयानुवृत्तिवत् । तथाहि । सम्यग्ज्ञानान्निवृत्तमपि भयं स्वसंस्कारादनुवर्तते कम्पादिनिमित्तं च भवति । तथा ऽग्रहणमपि स्वसंस्कारादनुवर्तते ऽहङ्कारग्रन्थेश्च निमित्तं भवतीति न किञ्चिदनुपपन्नमस्ति ।

ननु न सर्वे वेदान्ता विद्यार्थमेवारभ्यन्ते तदेकदेशः क्रममुक्तिफलायैश्वर्यायाभ्युदयार्थं कर्मसमृद्धये चोपासनानि विविधान्युपदिशन्नुपलभ्यते । सत्यम् । उपासनाकर्म तु ब्रह्म तज्ज्ञापावृताशेषप्रपञ्चं जीवस्य निजं रूपमिति निरूपयितुमखिलप्रपञ्चजन्मादिहेतुतया प्रथमं सर्वात्मकं सर्वज्ञं सर्वशक्ति च ब्रह्म लक्षितमस्यां चावस्थायामनपाकृत्यैव ब्रह्मणि प्रपञ्चं तेनतेन प्रपञ्चेनोपधीयमानं ब्रह्म तस्मै तस्मै फलायो † पास्यत्वेन विधीयते दर्शपूर्णमासार्थाप्प्रणयनमिव गोदोहनेनोपरक्तं पशुभ्यस्तस्मात्तदर्थोपजीवित्वादितरस्यात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इति न विरुध्यते ।

नन्वब्रह्मोपासनान्यपि वेदान्तेषु दृश्यन्ते प्राणादिविषयाणि । सत्यम् । तान्यपि कार्यब्रह्मावाप्तिक्रमेण मुक्तिफलान्येव । वक्ष्यत्येतत्सूत्रकारः कार्यात्यये तदध्यक्षेण सहातः परमभिधानादिति । यथा चायमर्थः सर्वेषां वेदान्तानाम् तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्याम इति प्रतिज्ञातेर्थे वेदान्तानां तात्पर्यमुपदर्शयितुं समन्वयसूत्रप्रमुखैः सूत्रवाक्यैर्ग्रथितो न्याय इति दर्शयति । शरीरमेव शरीरकं शरीरके भवः शारीरको जीवः । तमधिकृत्य कृतो ग्रन्थः शारीरकः । तदिह वेदान्तानां जीवस्य सत्त्वमधिकृत्य प्रवृत्तानां ब्रह्मरूपतायां पर्यवसानमिति कथयितुं प्रणीतानां शारीरकं ‡ जीवतत्त्वमधिकृत्य कृतत्वमस्तीति शारीरकाभिधानम् । मुमुक्षुत्वे सत्यनन्तरं ब्रह्म-

* करणेति १ पु० । † उपास्यमानत्वेनेति १ पु० । ‡ जीवसतत्त्वमिति ३ पु० ।

अविद्यात्मकबन्धनिवृत्तिस्तत्त्वज्ञानाद्भवतीत्ययमर्थः प्रथमसूत्रेण सूच्यते । 

ज्ञानं कर्तव्यमिति यद्यप्येतावान्सूत्रस्य श्रौतो ऽर्थस्तथा ऽप्या * र्थाद् ब्रह्मज्ञानस्य मोक्षः प्रयोजनं निर्दिष्टं भवति । तथाहि । पुरुषार्थवस्तुकामनानन्तरं यत्र प्रवृत्तिरुपदिश्यते तस्य तत्साधनत्वमप्यर्थान्निर्दिष्टं प्रतीयते । तथा सति कुतस्तन्मोक्षसाधनं ब्रह्मज्ञानं भवतीत्यपेक्षायामर्थादस्माच्छास्त्राद्भवतीति शास्त्रस्य ब्रह्मज्ञानं विषयो निर्दिष्टः । तदेवं मुमुक्षुत्वानन्तरं ब्रह्मज्ञानकर्तव्यतोपदेशमुखेन वेदान्तानां विषयप्रयोजननिर्देशे † ऽप्यार्थं सूत्रस्य व्यापारं दर्शयित्वा तदपेक्षितमप्यर्थात् ‡ सूचितमविद्यात्मकबन्धमुपवर्ण्य प्रतिज्ञातार्थसिद्धये हेत्वाकाङ्क्षाया § मस्मिन्नेव तं प्रदर्शयिष्याम इति व्याख्येयत्व ‖ मुपक्षिप्य व्याख्यातुकामः प्रथमं तावत्प्रयोजनविषययोरुपादाने निमित्तमाह वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येद ¶ मादिमसूत्रम् अथातो ब्रह्मजिज्ञासेति । अयमस्यार्थः । शास्त्रस्यादिरयम् । आदौ च प्रवृत्त्यङ्गतया प्रयोजनं विषयश्च ** दर्शनीयः । सूत्रं चेतत् अतो यः कश्चिदर्थः शब्दसामर्थ्येनार्थबलाद्वा †† उत्प्रेक्षितः ‡‡ स सर्वस्तदर्थ एवेति भवत्ययमर्थकलापः तन्महिमाधिगतः । एवं सूत्रस्यादित्वेन कारणेन सूत्रतया च विषयप्रयोजनं तत्सिद्धिकरं चा §§ विद्याख्यं बन्धं तत्सामर्थ्यावगतमापाद्य तत्र सूत्रसामर्थ्यं दर्शयितुं प्रतिपदं व्याख्यामारभते ॥

॥ इति प्रथमवर्णकम् ॥



* अर्थादिति क्वचित् । † अर्थात् सूत्रस्येति १, ३ पु० । ‡ सूचितमिति २ पु० ।
§ अस्मिन्नेव शास्त्रे इति २, ३ पु० । ‖ उत्क्षिप्येति १, ३ पु० । ¶ आदिमं सूत्रमिति ३ पु० ।
** प्रदर्शनीय इति ३ पु० । †† उत्प्रेक्ष्यत इति ३ पु० ।
‡‡ सशब्दोऽत्र पुस्तकत्रयेऽपि नोपलभ्यते । §§ अविद्यात्मकं बन्धमिति ३ पु० ।

सिद्धैव ननु ब्रह्मजिज्ञासा अथातो धर्मजिज्ञासेति सकलवेदार्थविचारस्योदितत्वात् ब्रह्मज्ञानस्य च चोदनालक्षणत्वेन धर्मस्वरूपत्वात् । अतः सिद्धैव ब्रह्मजिज्ञासापि अभ्यधिकाशङ्काभावादिति । अत्र केचिदभ्यधिकाशङ्कां दर्शयन्तो ब्रह्मजिज्ञासां पृथगारभन्ते । केयमत्राभ्यधिका शङ्का । चोदनालक्षणोऽर्थो धर्म इति ब्रुवता विधेः प्रामाण्यं दर्शितम् । अत्र केषुचिद्वाक्येषु विधिरेव न श्रूयते सदेव * सोम्येदमग्र आसीदित्येवमादिषु । यत्रापि विधिः श्रूयते आत्मा वा अरे द्रष्टव्यः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति । तत्र यद्यपि कृत्या अविशेषेण विधौ स्मर्यन्ते तथापि यो भावाभिधायी † तव्यप्रत्ययः स क्रियाप्रधानत्वात् क्रियायां पुरुषं नियोक्तुं शक्नोति । यत्र पुनः कर्मप्राधान्येनोच्यते तत्र द्रव्ये गुणभूतां क्रियां ‡ कार्यान्तरसम्बन्धित्वेन विधातुं न शक्नोति । द्रव्यपरत्वे चानुत्पाद्यत्वादविकार्यत्वादनाप्यत्वादसंस्कार्यत्वात् संस्कृतस्य च कार्यान्तरे उपयोगाभावादसंस्कार्यत्वम् । अत आत्मानमुपासीतेत्यात्मन ईप्सिततमत्वं न सम्भवति । अथ पुनर्विपरीतो गुणप्रधानभावः सक्तुन्यायेन § कल्प्येत । तथापि न ज्ञायते किं तदुपासनं कथं चात्मना तत्क्रियत इति । अथ ज्ञायते ज्ञानमुपासनम् आत्मा च विषयभावेन त || न्निर्वर्तयतीति । एवं तर्हि तदेवायातं ज्ञानेना ¶ त्माप्यत इति । तच्च कृतकरणमनर्थकम् नित्याप्तत्वादात्मनः । संस्कार्यत्वे चोपयोगाभाव उक्तः । अतो विध्यभावादविवक्षितार्था वेदान्ता इति धर्मजिज्ञासानन्तरं स्नाने प्राप्ते इदमारभ्यते अथातो ब्रह्मजिज्ञासेति । अनन्तरं ब्रह्म जिज्ञासितव्यं न स्नातव्यमित्यभिप्रायः । कर्माभिधायिनोऽपि **कृत्यप्रत्ययान्नियोगसंप्रत्ययान्न नियोक्तृत्वं निराकर्तुं शक्यते कटस्त्वया कर्तव्यो ग्रामस्त्वया गन्तव्य इतिवत् । यदुक्तम् । द्रव्यपरत्वे प्रयोजनाभावादानर्थक्यं नियोगस्येति । तदसत् । अविद्योच्छेदस्योपलभ्यमानत्वादविद्या च संसारहेतुभूता ।

अपरे पुनरेवमारभन्ते । ब्रह्मणि †† प्रत्यक्षादिप्रत्ययान्तराणामसंभवात्परिनिष्पन्ने वस्तुनि प्रतिपत्तिहेतुतया सम्भावितसामर्थ्यानामप्याम्नायस्य पुनः

* सोम्येदमग्रमित्यत्र सर्वत्र पाठसत्त्वेऽपि सोम्येदमिति श्रौतः पाठः ।
† तव्येति नास्ति ३ पु० । ‡ क्रियां नेत्यत्र क्रियामो नकारः पूर्वमस्ति ३ पु० । गुणभूतेति १, २ पु० ।
|| निवर्तयतीति १ पु० । ¶ आत्मा आप्यत इति २ पु० ।
** तव्यप्रत्ययादिति २ पु० । †† प्रत्यक्षादीति २, ३ पु० नास्ति ।

कार्यविषयतया सुतरामसंभवं मन्वानस्य भवति संकर्षपर्यन्ते वेदार्थविचारावसा-नमिति बुद्धिस्तन्निरासार्थं पुनः प्रतिज्ञातमिहापि सर्वेष्वेवात्मज्ञानविधानेषु कार्यनिष्ठतां वर्णयन्ति समाम् । तत्त्वावबोधश्च * कार्यमधिकारिनियोगविषय-तयाऽवगमादिति । ततस्तद्विचारार्थं शास्त्रमारब्धव्यमिति ।

अत्रोच्यते । नारब्धव्यम् गतार्थत्वात् । कथम् । यस्तावत्प्रथम आर-म्भप्रकारः कर्मणि † कृत्यप्रत्ययेन नियोगसंप्रत्यय इति तत्स्वयमेव विधायकत्वं दर्शितम् प्रसिद्धं चैतत् स्वाध्यायो ऽध्येतव्य इत्येवमादीनां विधायकत्वम् । ‡ नचाशङ्काकारणं किञ्चित् । ननु चतुर्विधस्यापि क्रियाफलस्यात्मन्यसंभव उक्तः । यद्येवं सक्तुन्यायो भविष्यति । तदपि न । § आत्मविषयज्ञानस्य नित्यसिद्धत्वादित्युक्तम् । सिद्धस्यैव पुनरभ्यासो विधिनिमित्त उपासनाख्यो भविष्यति अभ्युदयफले हिरण्यधारणवत् । ननु न विधानतो ऽप्यात्मविषय-ज्ञानसन्तानः कर्त्तव्यः । स तु नित्यमात्मनि जाग्रतः सिद्धः । एवं तर्ह्य ‖ र्थो विरुद्धेषु कालेष्वात्मन्येव चेतःसमाधानं भविष्यति । यत्पुनरात्मज्ञानादवि-द्योच्छेदस्तदुच्छेदात्संसारनिवृत्तिः फलमित्युपन्यस्तम् । तदसत् । अहमि-त्यात्मानं नित्यमेव जानाति सर्वो लोकः न च संसारो निवृत्तः । अथ पुनरहं-प्रत्ययावसेयादन्यदेवात्मरूपं पराकृतभोक्तृभोक्तव्यभोगग्रन्थि ज्ञेयत्वेनात्मज्ञा-नविधिना ज्ञाप्यत इति । तदसत् । विधिर्हि सामान्यतःसिद्धस्य क्रिया-त्मनो विशेषसिद्धौ प्रभवति नात्यन्तमसिद्धसद्भावे । तद्यदि नाम ज्ञानं लोके ¶ सिद्धं तथापि निरस्तप्रपञ्चात्म ** विषयमसिद्धम् आकाशमुष्टिहननवन्न विधातुं शक्यम् । अथ तादृगात्मज्ञानं सिद्धं किं विधिना । यदपि मतान्तरं प्रत्य-क्षादेरगोचरत्वाच्छास्त्रस्य च कार्यार्थत्वात्संकर्षपर्यन्त एव विचारे वेदार्थपरि-समाप्तौ प्राप्तायां वेदान्तेष्वपि कार्यनिष्ठता समाना । ब्रह्मतत्त्वावबोधश्च कार्यम् अधिकारिनियोगविषयतया ऽवगमात् । अतस्तद्विचाराय शारीरकारम्भ इति । तदप्युक्तन्यायेन ब्रह्मावगमस्य सिद्धत्वे ऽसिद्धत्वे च कार्यत्वासंभवेन प्रत्यु-

* कार्याधिकारीति २ पु॰ ।
† कृत्यत्ययेनेति १ पु॰, कृत्यप्रत्ययेन न नियोगेति ३ पु॰ शोधितमस्ति ।
‡ नात्र शङ्काकारणमिति २ पु॰ ।
§ आत्मन्यविषय ज्ञानस्येति १ पु॰, आत्मविषयस्य ज्ञानस्येति ३ पु॰ ।
‖ अर्थाविरोधिष्विति ३ पु॰ । ¶ लोकप्रसिद्धमिति २ पु॰, लोके प्रसिद्धमिति ३ पु॰ ।
** आत्मविषयकमिति ३ पु॰ ।

त्वम् । अपरं मतम् । सत्यं कार्यविषयो वेदो न तु तावन्मात्रे । तस्मिन् सति योयो ऽर्थो ऽवगम्यते सस वेदार्थः यथा रूपे सति चक्षुषः प्रवृत्तिः न च रूपमात्रं चक्षुषो विषयः किंतु तस्मिन्सति द्रव्यमपि । एवमिहापि वस्तुतत्त्वमपि * विषयः । † कथम् । तदुच्यते । इदं सर्वं यदयमात्मेति न तावत्सर्वात्मरूपतात्मन उपदिश्यते यदि सर्वरूपता ऽऽत्मन उपदिश्येत ततः सर्वस्याचेतनत्वात् तद्रूपत्वे बोद्धृत्वहानौ बोधकत्वं शब्दस्य हीयेत । अतः सर्वस्यात्मस्वभावता विधीयते ऽनात्मस्वभावविलयेन हि वस्तुनो ऽवगतिर्दृष्टा । नन्वत्र विधिर्न श्रूयते । एवं तर्हि कल्प्यतां विधिः । किं प्रतीते विध्यर्थे विधिः कल्प्यते उताप्रतीत इति । यदि प्रतीते कल्प्यते कल्पनावैयर्थ्यम् । अर्थप्रतीत्यर्थं हि शब्दोमृग्यते प्रतीते ऽर्थे शब्दं कल्पयता किं कृतं स्यात् । अथाप्रतीत एव विध्यर्थे विधिं कल्पयित्वा ततो ऽर्थः प्रतिपत्तव्य इत्यपूर्वं प्रमाणकौशलम् । नन्वश्रूयमाणविधि ‡ स्वपि तस्मात्पूषा प्रपिष्टभागो ऽदन्तको हीत्यादिषु विधिः कल्पितः । सत्यम् । युक्तं तत्र पूष्णः पिष्टद्रव्यसम्बन्धः समासाभिहितो न सिद्धो न वर्तते नापि कुतश्चिद्भविष्यतीति प्रमाणाभावात् । नाऽपि विधिना केनचित्पदैकवाक्यता येन चपोत्खननादिवत्कथंचिदालम्बनं कल्प्येत । अतो निरालम्बनत्वपरिहाराय § कार्यपरता कल्प्यत इति ।

न ‖ न्वत्राप्यात्मपदं चेतनस्य भोक्तुर्वाचकम् सच नियोज्यत्वान्नियोगमाक्षिपति । नैतत्सारम् । नियोगो हि पुरुषविशेषमनाक्षिप्यानुपलब्धो लोके तमाक्षिपेत् विश्वजिदादिषु । पुरुषः ¶ पुनः किं नियोगमन्तरेण नोपलब्धो लोके येन विधिकल्पना भवेत् । अथापि भवतु नाम विधिः नासौ धातुना विना केवलो लभ्यते । धातुनैव सह ** कल्प्यते । कोसौ धातुः । यदि तावत्कर्तव्यमिति तत्रानात्मस्वभावता न निवृत्ता प्रपञ्चस्य । यथा ऽमी पिष्टपिण्डाः सिंहाः क्रियन्तामिति पिष्टस्वभावता †† न निवृत्ता । इतिकर्तव्यता चानिर्दिष्टा तत्र साकाङ्क्षं वचनमनर्थकं स्यात् । अथ ज्ञातव्य इत्यध्याह्रियेत । एवमपि स एव दोषः अनात्मस्वभावता न निवृत्तेति अशक्यार्थोपदेशश्च ।

* तत्त्वमपि वेदस्य विषय इति पाठो २ पुस्तके । † कथं तत् उच्यते-इति १, २ पु॰ ।
‡ विधिकेष्वपीति ३ पु॰ । § कार्यता कल्प्यत इति २, ३ पु॰ । ‖ नन्विहापीति ३ पु॰ ।
¶ पुनरिति नास्ति ३ पु॰ । ** कल्प्यतामिति ३ पु॰ । †† न निवृत्तेति पुनर्नास्ति ३ पु॰ ।

दीदित्यादिपदानां भवत्वानर्थक्यम् ब्रह्मात्मत्वावगतिसमन्वितानां तु परमपुरुषार्थफलानां कथं निष्प्रयोजनत्वम् । स्यादेतत् । यद्यपि प्रवर्त्तकादेव वाक्याद्भूतार्थविषयमपि सामर्थ्यं प्रतीयते तथापि नाप्रतिपन्नभूतार्थावगतेः संभवः । * क्रियार्थतयैव संसर्गावगमात् । न हि गोपदात्तदर्थः सास्नादिमत्पिण्डधर्मत्वेनावगतो व्युत्पत्तिकाले पुनः प्रयोगान्तरेष्वप्रतिष्ठितः केसरादिमत्पिण्डधर्मत्वेन वा प्रतीयते । विषम उपन्यासः । गोपदस्याभिधेयसम्बन्धेन नानाविधसामर्थ्यमुपलब्धम् । अतो युक्तैकरूपैव प्रतीतिः । शब्दान्तरार्थान्वये पुनः प्रतिविभक्ति प्रतिपदार्थान्तरं च प्रयोग † भेदादन्यथान्यथा च सम्बन्धग्रहणकाल एवाऽऽवापो ‡ द्वापनिबन्धनः समन्वयो दृश्यते । तेन द्रव्यगुणक्रियाभिधायिभिः पदैः सम्बन्धयोग्यताभिधायिविभक्तिसंयुक्तैः प्रयोगैदम्पर्यवशादऽनियतः सम्बन्धो व्युत्पत्तिकाले निरूपितः । तथा च वषट्कर्त्तुः प्रथमभक्षः तस्मात्पूषा प्रपिष्टभाग इत्येवमादौ क्रियाशून्यानां समन्वयो दृश्यते । यस्तु कर्तव्य इति क्रियासम्बन्धः § स समन्वयनिमित्तो न तन्निमित्तः समन्वयः । यत्तु तद्भूतानां क्रियार्थेन समाम्नाय इति सूचयामास जैमिनिः । तदपि सिद्धेषु रूपादिष्वऽर्थेषु वर्त्तमानानां सामानाधिकरण्यादार्थत्वेन समाम्नायः समुच्चारणमिति यतो दर्शितः समन्वयो विशेषणविशेष्यत्वेनापि ‖ क्रियार्थेनेति तु धर्म ¶ जिज्ञासोपक्रमात्प्रकृतोपयोगितया ** सूचितम् । तथा च भाष्यकारोऽपि दृष्टो हि तस्यार्थः कर्मावबोधनमित्यर्थसद्भावमात्रे कथनीये कर्मावबोधनमिति प्रकृतोपयोगित्वेनैवोक्तवान् । तदेतदाह भाष्यकारः यदपि शास्त्रतात्पर्यविदामनुक्रमणमित्यादिभाष्येण । अत एव पूर्वेण तन्त्रेणागतार्थत्वाच्छारीरकारम्भः । तत्र हि वेदस्य विवक्षितार्थत्वं स्वतःप्रामाण्यं स्वरूपे च विज्ञानोत्पत्तौ शब्दस्य सामर्थ्यमित्येतत्सर्वमवगतम् । क्रियार्थेन समाम्नाय इति तु धर्मजिज्ञासाप्रतिज्ञानुसारेण सूचितम् । इह पुनस्तत्तु समन्वयादिति विशेषणविशेष्यात्मकमपि गौण †† मपि सामानाधिकरण्यं विहायैकस्मिन्निरंशे ऽधिकरणे तत्त्वमसीति समन्वयो

---

* क्रियाऽर्थसंबंधेति ३ पु॰ ।

† भेदेनान्यथा चान्यथा चेति ३ पु॰ ।

‡ उद्धारनिबन्धन इति ३ पु॰ ।

§ स इति नास्ति १, २ पु॰ ।

‖ क्रियार्थत्वेनेति ३ पु॰ ।

¶ जिज्ञासा प्रक्रमादिति २ पु॰ ।

** सूचितमिति १ पु॰ ।

†† अपिशब्दः पुनर्नास्ति पु॰ ३ ।

मुख्यः प्रदर्शितः । तथा च भगवान् पाणिनिरव्यतिरिक्ते * प्रातिपदिकार्थमात्रे प्रथमां स्मरति नाऽस्ति क्रियाकर्तव्यै † वातिरिक्तेऽर्थे । तेन च कात्यायनस्या-स्तिर्भवन्तिपर इति मतं नानुमन्यते । दृश्यते च फलिता अमी द्रुमा राज्ञो-ऽयं पुरुष इत्यस्तिक्रियाशून्यः समन्वयः । नात्रापि ये फलिता द्रुमास्ते सन्ति यो राज्ञः पुरुषः सोऽस्तीति विवक्षितम् ‡ अपित्वेते द्रुमाः फलिताः अयं पुरुषो राज्ञ इति सम्बन्धमात्रावसितं वाक्यम् । एवं सामान्यतः सिद्धस्य जग-त्कारणस्य सर्वज्ञत्वादिस्वभावत्वे त्वम्पदार्थस्य च ब्रह्मात्मतायां समन्वयो वेदान्तवाक्यानां सिद्धः न तत्रास्तिक्रियाया वस्तुस्वरूपान्तर्वर्तिन्या अप्यनुप्रवेशो § दूरत एव बाह्यायाः ।

किञ्च । ब्राह्मणो न हन्तव्य इतिप्रतिषेधवाक्यसमन्वये न क्रिया क्रियार्थो वाऽवगम्यते किन्तु क्रियानिवृत्तिरेव नियमेन प्रतीयते । व्रतशब्द-समन्वयात्तु प्रजापतिव्रतादिषु नेक्षेतोद्यन्तमादित्यमित्यादिष्वनीक्षणं || मानसी संकल्पक्रिया प्रतीयते अनीक्षणं कुर्यात् ¶ नेक्षेऽहमिति संकल्पयेदिति । न नञः समन्वयमात्रात् तस्य समन्वीयमानार्थाभावकरत्वात् । न च स्वभाव-प्राप्तहन्त्यर्थानुरागेणेत्यादिभाष्यस्यायमर्थः । स्वभावत एव रागादिनिमित्ता-च्छास्त्रमन्तरेणैव हननक्रिया प्राप्ता यदि नञानुरज्यते विशेष्यते तदा भवत्यहननमिति । ततश्चाहननं कुर्यादिति वाक्यार्थः स्यात् न हननं न कुर्या-दिति हननक्रियानिवृत्त्यौदासीन्यम् । अतो न हन्यामिति मानसी संकल्पक्रिया ऽपूर्वा ऽभिहिता स्यात् । न चैतद्युक्तम् नञः सम्बन्ध्युपमर्द**रूपत्वात् । अनी-क्षणे तु व्रत †† शब्दबलात्तथासमन्वयो न नञः सामर्थ्यादित्युक्तम् ।

ननु नञर्थे नियोगः प्रतिषेधेषु । तेन यागाद्यनुष्ठानादिवनञर्थानुष्ठा-नान्नियोगः साध्यः किमुच्यते क्रियानिवृत्त्यौदासीन्यं प्रतीयत इति । वार्तमे-तत् । नञर्थो हि नाम न क्रिया ‡‡ नापि साधनम् अपि तु येन संसृज्यते तस्याभावो न तत्सिद्धिहेतुः । एवं प्रतिषेधस्य विधेरन्यत्वं सिध्यति । अन्यथा

* प्रातिपादिकमात्र इति ३ पु० । † एव ह्यतिरिक्तार्थ इति ३ पु० ।
‡ किन्त्वेते इति ३ पु० । § "दूरत एव अन्यायाः बाह्यायाः"—इति ३ पु० ।
|| नामेत्यत्राधिकं ३ पु० । ¶ नेक्ष इतीति ३ पु० ।
** रूपत्वादनीक्षणेत्विति ३ पु० । †† शब्दसमन्वयात्तथेति ३ पु० ।
‡‡ न साधनमिति ३ पु० ।

विधिरेव * सर्वं स्यात् । तस्मात् संसृज्यमानाभावमात्रे प्रतिषेधवाक्यं पर्यवस्यति । † तत्र न विधिगन्धो ‡ ऽपि विद्यते । तच्च संसृज्यमानं विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नाभ्यनुज्ञानानामऽभावात्प्रतिपाद्यधर्मः प्रतिषिध्यमानक्रिया § फलं प्रार्थनाप्रतिषेधवाक्ये लिङाद्यर्थः । तेन तदभावः प्रतिषेधार्थः स च प्रागभावः स्वभावसिद्धः । ‖ तस्मात्संस्कारोद्बोधनिमित्तसन्निधावपि तत्प्रतिबन्धे प्रयत्न आस्थेयः । स च यद्यपि साध्यः तथाप्यन्वयव्यतिरेकगम्यो न शब्दार्थः तत्प्रतिपादकपदाभावाच्च एकवाक्ये संसृष्टपदार्थव्यतिरेकेणान्यत्र वाक्यार्थत्वाभावाच्च । अतो यश्चार्थादर्थो न स चोदनार्थः । वाक्यन्तु क्रियाशून्यमेवावसितम् न साध्यं किञ्चित्तेन विषयीकृतम् औदासीन्यमात्रावसितत्वात्तस्य ।

अथ पुनर्नञर्थविषयो नियोग एव प्रतिषेधे ऽपि वाक्यार्थ इत्यभिनिवेशः । भवतु तथापि प्रतिषिध्यमानक्रियानिवृत्त्या स सिध्यति क्रियोपादाने च तत्फलप्रार्थनैव हेतुरिति तत्कारणप्रतिबन्धे प्रयत्नास्थानान्नियोगसिद्धिः । तच्चान्वयव्यतिरेकावसेयमिति पूर्वोक्तान्मार्गान्न विशिष्यते । तदेवं वृद्धव्यवहारानुसारेणैव समन्वयानुसरणे सति तद्गम्यं ब्रह्म न धर्मवच्चोदनागम्यम् । दर्शितानि च वेदान्तवाक्यानि कारणसामान्ये सिद्धे तद्विशेषावगमाय समन्वितानि यतो वा इमानि भूतानि जायन्त इत्यादीनि तत्त्वमसीत्यादीनि च ।

यत् पुनरुक्तम् प्रतिपन्नब्रह्मात्मभावस्यापि पूर्ववत्संसारित्वदर्शनान्न रज्जुस्वरूपकथनवदर्थवत्त्वमस्य समन्वयस्य ततो न तन्मात्रे तस्य पर्यवसानमित्यर्थान्तरम् तावगतब्रह्मात्मभावस्येत्यादि । अस्यायमर्थः न कर्मनिमित्तस्तावच्छरीरसम्बन्धः इतरेतराश्रयदोषात्क्रियादिरहितत्वाच्च चैतन्यस्य । अनादित्वे ऽप्यन्धपरम्परावदप्रतिष्ठत्वात् । तन्निमित्तत्वे च पुत्रादिशरीरेष्विव गौणत्वप्रसङ्गात् तथानुभवाभावात् प्रसिद्धगौणत्वप्रकारासम्भवात् पुत्रादिशरीरेणेव स्वशरीरेणापि प्रमातृत्वाभावप्रसङ्गात् । पारिशेष्यादविद्यानिमित्तः शरीरसम्बन्धः । तस्यां च निवृत्तायां तत्सम्बन्धनिवृत्तौ कथं पूर्ववत्त्व ऽनिमित्तः

* सर्वः स्यादिति ३ पु. । † न तत्रेति ३ पु. । ‡ अपिर्नास्ति ३ पु. ।
§ फलप्रार्थनेति ३ पु. । ‖ तस्मात्तत्संस्कारेति ३ पु. ।

सुखदुःखानुभवः। तथा च श्रुतिस्मृतिवादा ब्रह्मविदः सर्वसंसारप्रवृत्त्यभावं दर्शयन्त उदाहृता भाष्ये। तस्मान्न ब्रह्मात्माभिमानिनः पूर्ववत्संसारित्वम् तदभिमानविरोधात्। वैषयिकस्तु साक्षादनुभवाभिमानः संसारविषय आरब्ध-कर्मशेषनिमित्तः तिमिरनिमित्तद्विचन्द्रवत्। मननिदिध्यासनयोर्न ब्रह्मावग-त्युत्तरकालीनता किन्तु श्रवणवदवगत्युपायतया पूर्वकालतैवेत्युक्तम्।

तदेवं सिद्धस्य वस्तुनः स्वरूपसत्तामात्रेणाप्रतिपन्नस्य प्रमाणविषयतया प्रमेयत्वाद्विधीयमानक्रियाकर्मत्वे तु कारकत्वस्य प्रमाणान्तरसिद्ध्यपेक्षत्वात्ततः सिद्ध्यनुपपत्तेर्वाक्यभेदप्रसङ्गात्प्रत्यक्षादिविरोधे देवताधिकरणन्यायासिद्धेर्वा-क्यान्तरसिद्धस्य कर्मकारकत्वे चतुर्विधस्यापि कर्मकार्यस्य तत्रासम्भवात्त् कर्मकोपासनाद्देवताकर्मयागादिवत्स्वर्गोपमो मोक्षः फलं कल्प्येत। तस्य तद्वदेवानित्यत्वप्रसङ्गाद् ब्रह्म वेद ब्रह्मैव भवती* त्यादिभ्यो ब्रह्मवेदन-मोक्षफलयोर्निरन्तरत्वप्रतिपादकेभ्यो वाक्येभ्योऽर्थादन्तराले क्रियानुप्रवेशनिरा-करणात् तरति शोकमात्मविदित्यादिश्रुतिभ्यो मोक्षप्रतिबन्धनिवृत्तिमात्रस्यैवा-त्मज्ञानफलस्य दर्शितत्वात्साध्यान्तराभावे क्रियानुपपत्तेर्ब्रह्मात्मावगमस्य च मुख्यैक्याधिकरणस्य संपदादिद्विकल्पनानुपपत्तेः प्रमाणजन्याया अपि विदिक्रि-यायाः कर्मत्वनिषेधाद्विधीयमानोपास्तिक्रियाविषयत्वस्य दूरनिरस्तत्वाद्वि-दिक्रियाविषयत्वे ऽपि समारोपितनिवर्तनमुखेन नित्यसिद्धचैतन्यस्य ब्रह्म-स्वरूपतासमर्पणाद्वाक्यविषयत्वोपपत्तेः सत्यपि वा विदिक्रियाकर्मत्वे तस्य च विध्यनायत्तत्वाद्विधिच्छायानां संस्तावकत्वेनाहार्यत्वात्संसारनिवृत्तेश्च ज्ञानफलस्य दृष्टत्वात्। अतो विधिनिरपेक्षं स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकम् वेदान्तवाक्यसमन्वयादिति सिद्धम्।

एवं च सति † वेदान्तानां परस्परसमन्वयजनितविज्ञानातिरेकेण चक्षुरादिवत्प्रवर्तकत्वस्याभावा ‡ तद्विषयः शास्त्रारम्भः पृथगुपपद्यते। अन्य-थात्रापि बोधकत्वातिरेकेण प्रवर्तकत्वमपि चेत् अथातो धर्मजिज्ञासेत्येवार-ब्धत्वान्न पृथगारभ्येत। अथाप्यबहिःसाधनत्वात्ततः परिशेषितमिति। तथाप्यथातः परिशिष्टधर्मजिज्ञासेति प्रतिज्ञा स्यात् प्रवर्तकविशेषजिज्ञास-

* इत्यादिश्रुतिभ्यो ब्रह्मेति २ पु०। † पदानां परस्परेति ३ पु०।
‡ तद्विषयपृथक्शास्त्रारम्भ उपपद्यत इति ३ पु०।

नात् । तदेवं ब्रह्मावगमात् प्रागेव विधिविधेयप्रमाणप्रमेयव्यवहारः । परतस्तु प्रमातुर्विधिविषयस्य चाभावान्न तत्सद्भाव इति । अपि चाहुरिति । प्रसिद्धमेतद् ब्रह्मविदामिति पूर्वोक्तं न्यायं संक्षेपतः श्लोकैः संगृह्णाति * गौणमुख्यात्मन इति । गौणोऽहंमानो ममत्वेन सम्बन्धात्पुत्रदारादौ । अतः सः । गौण आत्मा मिथ्या देहादारभ्याहङ्कर्तुरिदमंशपर्यन्तो ऽहंमानो नात्मन्यात्माभिमानात् अतः स मिथ्यात्मा । तस्योभयस्याप्यात्मनो मुख्यपरमार्थब्रह्मात्मावगमेन तदाधारपुत्रदेहादिबाधनाद ऽसत्त्वे तन्निमित्तं शास्त्रीयं नियोज्यत्वं † शारीरं च भोक्तृत्वं निमित्ताभावान्न कथंचिदुद्भवेदित्यर्थः । तदेतद् ‡ द्रढयन्नाह अन्वेष्टव्यात्मेति । सोऽन्वेष्टव्य इत्याद्युपक्रमेणोपदिष्टापास्ताशेषसंसाररूपब्रह्मात्मावगमात्प्रागेव प्रमातृत्वाभिमानः § प्रत्यक्चितेर्यदा ‖ पुनस्तद्रूपं विस्मृतसुवर्णवदवाप्तम् तदा स एव प्रमातृत्वाभिमतो निरस्तसंसारदोषः संपन्नः । कुतस्तस्य कर्तृत्वभोक्तृत्वे भवतः ।

यद्ययमहमुल्लेखप्रमुखप्रमातृत्वादिव्यवहारः कल्पितः कथमिदानीमस्य प्रामाण्यमित्याशङ्क्याह देहात्मप्रत्यय इति । यथा देहे विशिष्टजातीये तद्व्यतिरिक्तस्याहङ्कर्तु ¶ रहंमानसम्बन्धः कल्पितो ऽपि स्वनिबन्धने लोकशास्त्रव्यवहारे यथा ऽवगतितत्त्वहेतुः तथा ऽयं कल्पितो ऽप्यलौकिकात्मस्वरूपप्रतिपत्तेः प्राक् प्रमाणम् निश्चितप्रत्ययोत्पादनाद्बाधानुपलब्धेश्चेति ॥

इति नवमं वर्णकम् ।

** इति श्रीपद्मपादाचार्यविरचितायां पञ्चपादिकायां चतुःसूत्री समाप्ता ॥

## परिसमाप्तश्चायमुपलभ्यमानो ग्रन्थः ॥



* गौणमिथ्यात्मन इति ३ पु० ।

† सांसारिकस्येति २ पु०, सांव्यवहारिकं चेति ३ पु० ।

‡ दर्शयन्नाहेति ३ पु० ।

§ प्रत्यगात्मन इति २ पु० ।

‖ पुनः स्वरूपमिति ३ पु० ।

¶ अहंमानबन्ध इति १ पु० ।

** इति पञ्चपादिकायां नवमो वर्णकः समाप्तः० इति चतुःसूत्री—इति ३ पुस्तके पाठोऽस्ति ।

No. 5.]

THE

# VIZIANAGRAM SANSKRIT SERIES

UNDER THE SUPERINTENDENCE OF

ARTHUR VENIS M. A. OXON.

PRINCIPAL, SANSKRIT COLLEGE, BENARES.

THE

# PAŃCHAPÂDIKÂVIVARAṆA

OF

PRAKÂŚÂTMAN

WITH EXTRACTS FROM THE

TATTVADÎPANA AND BHÂVAPRAKÂŚIKÂ

EDITED BY

RÂMAŚÂSTRÎ BHÂGAVATÂCHÂRYA,

ASSISTANT PROFESSOR, SANSKRIT COLLEGE, BENARES.

VOL. II. PART II.

SANSKRIT TEXT.



PRINTED, PUBLISHED AND SOLD BY

E. J. LAZARUS & Co., BENARES.

MAY BE HAD FROM GANESH DAS AND CO., CHOWK, BENARES:

JAYESTHARAM MUKUNDJI AND CO., BOMBAY:

OTTO HARRASSOWITZ AND M. SPIRGATIS LEIPZIG:

LUZAC AND CO., LONDON.

1892.

॥ श्रीः ॥

# ॥ भूमिका ॥

पञ्चपादिकाविवरणाभिधोऽयं निबन्धोऽनन्यानुभवपूज्यपादशिष्यैः परमहंसपरिव्राजकाचार्यैः प्रकाशानुभवापरनामधेयैः[1] ब्रह्ममीमांसाशास्त्रस्य सारभूतानर्थांश्चतुःसूत्रीव्याख्यान एव प्रतिपादयद्भिः श्रीप्रकाशात्मयतिभिः[2] प्रणीतः। सत्स्वप्यनेकेषु पञ्चपादिकाव्याख्यानेषु[3] अमुमेव निबन्धमुत्तमत्वेनावधार्य वेदान्तिनः स्वनिबन्धेषु[4] प्रमाणयन्ति ॥

सोऽयं निबन्धोत्तमः पठनपाठनादिषु विरलप्रचारत्वेन तथा विलुप्तो यदाधुनिका निबन्धेषु "भाष्यटीकाविवरणं" "पञ्चपादिकाविवरणं" वेति दृष्ट्वा किमिदं विवरणं नाम वेदान्तग्रन्थेष्वेव वान्यत्र वेति विकल्पयन्तीति वेदान्तरत्नमञ्जूषामिव निगूढं सम्पाद्य प्रकाशयितुं प्रवृत्ताः सम्पादकमहाशयाः ॥

यतयः स्वीयनिबन्धेषु स्वदेशकालादिकं प्रायो नैव निरूपितवन्त इति भगवतः श्रीप्रकाशात्मयतेः देशकालौ सम्यङ् न ज्ञायेते तथाप्यनुमीयते यद्विद्यारण्यसमयात्[5] पूर्वं तस्य स्थितिरासीदिति। यतो माधवाचार्येण सर्वदर्शनसंग्रहान्ते प्रतिज्ञातं खलु "इतः परं सर्वदर्शनशिरोमणिभूतं शाङ्करदर्शन-

(१) वाराणसीस्थराजकीयसंस्कृतपाठशालीयवेदान्तपुस्तकेषु ४ संख्यकपुस्तके। "श्रीपरमहंसपरिव्राजकाचार्यानन्दानन्यानुभवपूज्यपादशिष्यप्रकाशानुभवभगवतः कृतौ पञ्चपादिकाविवरणं" इति ॥

(२) विवरणारम्भे। प्रकाशात्मा यतिः सम्यक् प्राप्तविद्यागुरुत्सया। यथाश्रुतं यथाशक्ति व्याख्यास्ये पञ्चपादिकाम् ॥ तत्त्वदीपनेऽप्येवमेव ॥

(३) अमलानन्दकृतं पञ्चपादिकादर्पणं विद्यासागरकृता पञ्चपादिकाटीका च। एकं तद्व्याख्यानपुस्तकमुक्तपाठशालायां वर्तते किन्त्वाद्यन्तहीनत्वाच्च निश्चितं भवति किं तदिति ॥

(४) गोविन्दानन्दो भाष्यरत्नप्रभायां "तदुक्तं प्रकाशात्मश्रीचरणैः" एशियाटिक्सोसाइटीमुद्रितपुस्तके ३ पृ० द्रष्टव्यम् ॥

अप्पयदीक्षिता अपि सिद्धान्तलेशसंग्रहे। "स्वप्रपञ्चविपरीतप्रमात्रादिज्ञानसाधनस्यान्तःकरणस्येत्यादिपञ्चपादिकाविवरणग्रन्थेनापि तथा प्रतिपादनात्" अस्यां काश्यां मुद्रिते पुस्तके ८७ पृ० द्रष्टव्यम्।

(५) तल्लिखिततामपत्रे '१३१३ शककालः। आनन्दाश्रमसंस्कृतसीरीज़ २ संख्या द्रष्टव्या।

विदुषश्च ग्रन्थकरणाधिकारात् परदेवताप्रार्थनमुचितम् । अत्रैषाक्षरयोजना । सते नम इति सम्बन्धः

समाप्तिवाक्यम् ।

ज्ञाने सत्यपि प्रमातृत्वादिकं दृष्टमित्याशङ्क्य तात्पर्यमाह । अद्वितीयेति । सकलशास्त्रव्यवस्थासिद्ध्यर्थं सोपाधिकं निरुपाधिकं च रूपमनूदितमिति द्रष्टव्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याखण्डानुभूतिपूज्यपादशिष्येणाखण्डानन्दमुनिना विरचिते विवरणतत्त्वदीपने समन्वयसूत्रं[२] समाप्तम् । समाप्तं नवमवर्णकम् ॥

## भावप्रकाशिका

यस्मात्त्वचेतनमसुखानुलिप्तं विश्वं हितं सत् स्फुरतीव भाति ।
स मां निरस्ताखिलभेद आत्मा पायादबोधाद्विपदो नृसिंहः ॥ १ ॥
श्रीमद्गुरुपदद्वन्द्वमद्वैतात्मप्रसिद्धये ।
हृदये सदयं भूयान्निगूढात्माञ्जनं परम् ॥ २ ॥
श्रीमद्गुरुकृपालेशादद्वैतब्रह्मगोचरे ।
क्वचित् क्वचिद्विवरणे गूढो भावः प्रकाश्यते ॥ ३ ॥

निर्विशेषब्रह्मप्रतिपादकग्रन्थकरणस्य तत्प्रतिपत्तिं विनायोगात् तस्याश्च यमेवैषं (ष) वृणुते तेन लभ्य इत्यादि शास्त्रा(स्त्रा)त् परमात्मप्रसादाधीनत्वप्रतीतेर्विषयप्रयोजने दर्शयन् परमात्मानं नमस्करोति । पालन इति ॥

नवमवर्णके ।

प्रस्तोष्यमाणवर्णकस्यानन्तरवर्णकादपुनरुक्तमर्थमाह । लोके पदानामित्यादिना । एष च ग्रन्थकारस्याशयोऽतिस्पष्ट इति न किञ्चिल्लिख्यते ॥

(१) सम्बन्ध-इति नास्ति सं· पु·
(२) चतुर्थसूत्रम-पा· सं· पु· ।

॥ श्रीः ॥

# ॥ भूमिका ॥

पञ्चपादिकाविवरणाभिधेोऽयं निबन्धोऽनन्यानुभवपूज्यपादशिष्यैः परमहंसपरिव्राजकाचार्यैः प्रकाशानुभवापरनामधेयैः[1] ब्रह्ममीमांसाशास्त्रस्य सारभूतानर्थांश्चतुःसूत्रीव्याख्यान एव प्रतिपादयद्भिः श्रीप्रकाशात्मयतिभिः[2] प्रणीतः । सत्स्वप्यनेकेषु पञ्चपादिकाव्याख्यानेषु[3] अमुमेव निबन्धमुत्तमत्वेनावधार्य वेदान्तिनः स्वनिबन्धेषु[4] प्रमाणयन्ति ॥

सोऽयं निबन्धोत्तमः पठनपाठनादिषु विरलप्रचारत्वेन तथा विलुप्तो यदाधुनिका निबन्धेषु "भाष्यटीकाविवरणं" "पञ्चपादिकाविवरणं" वेति दृष्ट्वा किमिदं विवरणं नाम वेदान्तग्रन्थेष्वेव वान्यच्च वेति विकल्पयन्तीति वेदान्तरत्नमञ्जूषामिव निगूढं सम्पाद्य प्रकाशयितुं प्रवृत्ताः सम्पादकमहाशयाः ॥

यतयः स्वीयनिबन्धेषु स्वदेशकालादिकं प्रायो नैव निरूपितवन्त इति भगवतः श्रीप्रकाशात्मयतेः देशकालौ सम्यङ् न ज्ञायेते तथाप्यनुमीयते यद्विद्यारण्यसमयात्[5] पूर्वं तस्य स्थितिरासीदिति । यतो माधवाचार्येण सर्वदर्शनसंग्रहान्ते प्रतिज्ञातं खलु "इतः परं सर्वदर्शनशिरोमणिभूतं शाङ्करदर्शन-

(१) वाराणसीस्थराजकीयसंस्कृतपाठशालीयवेदान्तपुस्तकेषु ४ संख्यकपुस्तके । "श्रीपरमहंसपरिव्राजकाचार्यानन्दानन्यानुभवपूज्यपादशिष्यप्रकाशानुभवभगवतः कृता पञ्चपादिकाविवरणं" इति ॥

(२) विवरणारम्भे । प्रकाशात्मा यतिः सम्यक् प्राप्तविद्यागुरुत्सया । यथाश्रुतं यथाशक्ति व्याख्यास्ये पञ्चपादिकाम् ॥ तत्त्वदीपनेऽप्येवमेव ॥

(३) अमलानन्दकृतं पञ्चपादिकादर्पणं विद्यासागरकृता पञ्चपादिकाटीका च । एकं तद्व्याख्यानपुस्तकमुक्तपाठशालायां वर्तते किन्त्वाद्यन्तहीनत्वान्न निश्चितं भवति किं तदिति ॥

(४) गोविन्दानन्दो भाष्यरत्नप्रभायां "तदुक्तं प्रकाशात्मश्रीचरणैः" एशियाटिक्सोसाइटीमुद्रितपुस्तके ३ पृ· द्रष्टव्यम् ॥

अप्पयदीक्षिता अपि सिद्धान्तलेशसंग्रहे । "स्वप्रपञ्चविपरीतप्रमात्रादिज्ञानसाधनस्यान्तःकरणस्येत्यादिपञ्चपादिकाविवरणग्रन्थेनापि तथा प्रतिपादनात्" अस्यां ग्रन्थयां मुद्रिते पुस्तके ९७ पृ·

विदुषश्च ग्रन्थकरणाधिकारात् परदेवताप्रार्थनमुचितम् । अथैषामक्षरयोजना । सते नम इति सम्बन्धः[१] ॥

समाप्तिवाक्यम् ।

ज्ञाने सत्यपि प्रमातृत्वादिकं दृष्टमित्याशङ्क्य तात्पर्यमाह । अद्वितीयेति । सकलशास्त्रव्यवस्थासिद्ध्यर्थं सोपाधिकं निरुपाधिकं च रूपमनूदितमिति द्रष्टव्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याखण्डानुभूतिपूज्यपादशिष्येणाखण्डानन्दमुनिना विरचिते विवरणतत्त्वदीपने समन्वयसूत्रं[२] समाप्तम् । समाप्तं नवमवर्णकम् ॥

# भावप्रकाशिका

यत्सत्त्वचैतन्यसुखानुलिप्तं विश्वं हितं सत् स्फुरतीव भाति ।
स मां निरस्ताखिलभेद आत्मा पायादबोधाद्द्विपदो नृसिंहः ॥ १ ॥
श्रीमद्गुरुपदद्वन्द्वमद्वैतात्मप्रसिद्धये ।
हृदये सदयं भूयान्निगूढात्माञ्जनं परम् ॥ २ ॥
श्रीमद्गुरुकृपालेशादद्वैतब्रह्मगोचरे ।
क्वचित् क्वचिद्विवरणे गूढो भावः प्रकाश्यते ॥ ३ ॥

निर्विशेषब्रह्मप्रतिपादकग्रन्थकरणस्य तत्प्रतिपत्तिं विनायोगात् तस्याश्च यमेवैषं (ष) वृणुते तेन लभ्य इत्यादि शास्त्रा(स्त्रा)त् परमात्मप्रसादाधीनत्वप्रतीतेर्विषयप्रयोजने दर्शयन् परमात्मानं नमस्करोति । पालन 'इति ॥

नवमवर्णके ।

प्रस्तोष्यमाणवर्णकस्यानन्तरवर्णकादपुनरुक्तमर्थमाह । लोके पदानामित्यादिना । अत्र च ग्रन्थकारस्याशयोऽतिस्पष्ट इति न किञ्चिल्लिख्यते ॥

---

(१) सम्बन्ध-इति नास्ति सं० पु० ।
(२) चतुर्थसूत्रम्-पा० सं० पु० ।

अहं कियान् क्वाथमनःश्रुतीनां विहारदूरं परमात्मतत्त्वम् ।
अहो गुरूणां चरणारविन्दप्रसादभाजां सुलभं समस्तम् ॥

कृतिरियमनवद्या नैव वासीन्न जाने
मम हृदयनिविष्टो यस्तमोदूरचारी ।
हितमहितमथान्यत्कारयन्मां य आस्ते
नरमृगवपुरीशो दृग्भिरेनां पुनातु ॥

यदि च विकृतिरल्पीयसी भूयसी वा
कियदपि मम नेनः संस्तवो वा गुणेन ।
अपि तु भवत एतो किं महयस्तलोके
नरमृगवपुषस्ते यत्र वेदाः प्रमाणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीजगन्नाथाश्रमपूज्यपादशिष्यश्री-नृसिंहाश्रममुनिविरचितायां पञ्चपादिकाविवरणभावप्रकाशिकायां समन्वयसूत्रविचारः समाप्तः । समाप्ता विवरणटिप्पणी ॥

वाराणसीस्थराजकीयसंस्कृतपाठशालायाम् — विन्ध्येश्वरीप्रसादशर्मा द्विवेदोपाख्यः ।



# अथ शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६ | १० | दर्शनाचाप्य | दर्शनात् नाप्य |
| १७ | १६ | ऽविद्यासम्भवति | ऽविद्या सम्भवति |
| १८ | २२ | प्रमाणमेवहि | प्रमाणमेव हि |
| २० | १३ | कथा- | कथा |
| २० | १५ | वाद इति । | वाद इति |
| २१ | ६ | रजतमऽयं | रजतमयं |
| २१ | १४ | ज्ञानेपिसंसर्ग | ज्ञानेपि संसर्ग |
| २६ | १६ | स्मरामा | स्मरामी |
| २७ | ७ | दोषो पहिते | दोषोपहिते |
| २७ | १६ | दायमानेषु | दीयमानेषु |
| २८ | ६ | ख्यात्यन्तरा | ख्यात्यन्तर |
| २८ | ८ | कथम् । | कथम् |
| २८ | १२ | हितोपि | वहितोपि |
| २६ | २८ | संयोगादिदं मात्र | संयोगादिदंमात्र |
| ३० | १५ | ज्ञानोत्तरो | ज्ञानान्तरो |
| ३१ | ५ | पारेत्य | पारोत्य |
| ३१ | ६ | कल्पनीयं | कल्पनीयम् |
| ३१ | १७ | मायास्वाश्रय | माया स्वाश्रय |
| ३१ | २८ | अनयो | \|\| अनयो |
| ३२ | ७ | मायायां | मायायाम् |
| ३३ | १७ | दन्यदाप्रवृत्ति | दन्यदा प्रवृत्ति |
| ३४ | १७ | परत्रपरा | परत्र परा |
| ३४ | २१ | परत्रपरा | परत्र परा |
| ३४ | २३ | चैत्यन्य | चैतन्य |
| ३४ | २६ | परत्रपरा | परत्र परा |
| ३६ | ८ | विशिषे | विशेषे |
| ४० | ४ | बाधापेक्षा | बाधापेक्षया |
| ४० | १६ | दृष्टुर्दोषः | दृष्टुर्दोषः |
| ४१ | १३ | प्रदापादो | प्रदोपादो |
| ४१ | २४ | प्रसिद्ध | प्रसिद्धि |
| ४३ | २२ | विरोधात् | ऽविरोधात् |
| ४५ | ६ | प्रतिबिम्ब * | प्रतिबिम्ब |
| ४६ | २६ | मीमांसक | मीमांसकं |
| ४८ | १६ | भासिस्व | भासि स्व |
| ४८ | २० | किं | किं- |
| ४८ | २१ | पि शब्दो | पिशब्दो |
| ४८ | २४ | भास एवावभास एवा | भास एवा |
| ५० | १० | बिम्बपुरत्व | बिम्बपुरस्त्व |
| ५१ | १८ | त्यात्मनात्म | त्यात्मानात्म |
| ५३ | १६ | तन्त्रता न स्यात् | तन्त्रता स्यात् |
| ५३ | २१ | चारादित्या | चारादादित्या |
| ५४ | ६ | ष्टापूर्व | ष्टा पूर्व |
| ५५ | ३ | द्रष्ट | द्रष्टृ |
| ५८ | २४ | मतोतर | मतोतत्तर |
| ५८ | २५ | त व | तत्रैव |
| ५६ | ६ | मयः पिण्ड | मयःपिण्ड |
| " | " | मुखस्याऽथात्र | मुखस्याप्यात्र |
| ६० | हेडिंग | प्रतिबिम्ब | प्रतिबिम्ब |
| ६० | २५ | आद्यो देऽना | आद्यो वेऽना |
| ६१ | १८ | ऽनिन्द | ऽनिद |
| ६१ | २४ | अनिन्द | अनिद |
| ६४ | २१ | प्रात | प्रति |
| ६५ | हेडिंग | प्रतिबिम्बत्वा | प्रतिबिम्बत्वो |
| ६५ | ७ | सर्वज्ञाता | सर्वज्ञता |
| ६६ | ११ | निर्विकल्पं | निर्विकल्प |
| ६७ | १७ | परिहार | परिहारा |
| ७२ | ६ | चैतन्यमपि चैतन्य | चैतन्य |
| ७२ | ११ | परिछिचे | परिच्छिवे |
| ७२ | २२ | प्रदीपप्रभा | प्रदीपप्रभ |
| ७४ | ५ | मपहृयत | मपहूयत |
| ७४ | १४ | आकारमेकं | ऽप्याकारमेकं |
| ७४ | २२ | न स्यात् । | न स्यात् |
| ७५ | १४ | रितिरे | रितरे |
| ७६ | ३ | प्रभावबर्त्त | प्रभावद्वर्त्त |
| ७६ | ७ | संसारास्था- | संसारावस्था- |
| ७७ | १८ | त्मश्रय | त्माश्रय |
| ७७ | १६ | संविदत्तर | संविदन्तर |
| ७८ | १३ | मित्युनु , | मित्यनु |
| ७८ | २२ | सकृत्कर्तुः | सकृत्कर्तुः |
| ७८ | २२ | कतृत्वे ) | कर्तृत्वे |
| ८० | १७ | कारणानि | कारणानि |

*एवमग्रेपि बिम्बस्थाने 'बिम्ब' इति बोध्यम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८० | १७ | निष्पच्च | निष्पच्च |
| ८१ | १७ | शक्तौ | शक्तौ |
| ८२ | १२ | सहकारि सव्य | सहकारिसव्य |
| ८३ | १४ | नापि | नापि |
| ८३ | २३ | त्यद्यन्ते । | त्यद्यन्ते |
| ८३ | २६ | महदेतास्ति | महदेतत्स्ति |
| ८४ | ४ | गमात्म | गमात्म |
| ८४ | १५ | तत्वेनेयं | तत्वे नेयं |
| ८६ | १० | निरवयस्य | निरवयवस्य |
| ८७ | हेडिंग | ज्ञानान | ज्ञानानि |
| ८७ | ७ | क ङ्क्षया | काङ्क्षाया |
| ८७ | ६ | भावात् । | भावात् |
| ८७ | २५ | विद्याव | विद्याव |
| ८८ | २ | संपति | संप्रति |
| ८६ | १६ | चया | चाया |
| ६० | १३ | ष्विपि | ष्वपि |
| ६० | २० | द्विविवेको | द्विवेको |
| ६१ | १६ | शरारा | शरीरा |
| ६४ | ५ | नार्थपत्या | नार्थापत्या |
| ६४ | ११ | नैकान्ति | ऽनैकान्ति |
| ६५ | २१ | कर्त्तुभो | कर्त्तुभो |
| ६५ | २६ | विविरोधा | विरोधा |
| ६६ | २३ | पेत इत्याह | पेतत्याह |
| १०४ | १ | कारिणा | कारणा |
| १०४ | ६ | पारात्य | परात्य |
| १०८ | १६ | विशिष्टानन्व | विशिष्टान्व |
| ११० | १४ | कृतः | कृतः । |
| ११२ | २ | दान्य | दोन्य |
| ११२ | १८ | ज्ञानकर्म | ज्ञानकर्म- |
| ११२ | २६ | गम्यत | गम्यते |
| " | " | ष्ठयं | ष्ठेयं |
| ११६ | २६ | तीति कर्त्तव्य | तीतिकर्त्तव्य |
| ११७ | ६ | विधः | विधिः |
| ११७ | ७ | सिद्धान्ता | सिद्धान्तो |
| ११७ | २१ | देवताविधिं | देवता विधिं |
| ११८ | १२ | इति । | इति |
| ११८ | २८ | प्रत्यक्षादाना | प्रत्यक्षादीना |
| " | " | परोक्षा | परोक्ष |
| ११६ | १५ | विधेः । | विधेः |
| ११६ | २२ | कायस्य | काव्यस्य |
| ११६ | २५ | दृष्ट | दृष्ट |
| १२० | १४ | कल्प्यने | कल्पने |
| १२२ | ८ | साधनत्वात् । | साधनत्वात् |
| १२४ | ४ | न कारः | नकारः |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२५ | २४ | पादय | पादाय |
| १२७ | २३ | किंचो | किंचो |
| १२८ | १६ | नुपपत्तेः । | नुपपत्तेः |
| १२६ | ८ | प्रताय | प्रतीय |
| १३१ | ६ | विवक्षादर्शिता | विवक्षा दर्शिता |
| १३२ | २५ | लाके | लोके |
| १३३ | २ | च्चाभयं | च्चोभयं |
| १३४ | २ | मन्यममस्य | मन्यतमस्य |
| १३५ | २२ | ऽभिधायते | ऽभिधीयते |
| १३६ | २२ | विधाय | विधीय |
| १३६ | २३ | घातानिष्वि | घातादिष्वि |
| १३८ | १६ | श्रवणा | श्रवणा |
| १४० | १६ | पाठे | पीठे |
| १४१ | २० | देतदाह | देतदाह |
| १४१ | २३ | प्रयोजायत् | प्रयोजयितु |
| १४२ | २५ | संस्कार्याह | संस्कार्यहि |
| १४४ | १ | मुपादायते | मुपादीयते |
| १४४ | १० | प्रतिपादिक | प्रतिपादक |
| १४५ | ३ | ऽधापन | ऽध्यापन |
| १४५ | ६ | पायत्वपो | पायत्वेपो |
| १४५ | १६ | संप्राप्त | संपत्ति |
| १४६ | १ | कारणः | कारिणः |
| १४६ | ११ | दधिकार | दधिकारि |
| १४६ | २० | निवर्त्तयितुं | निर्वर्त्तयितुं |
| १४६ | २६ | ध्यापाय | ध्यापयि |
| १४७ | ४ | सत्युपप | सत्युप |
| १४७ | ५ | किंतुग- | किंतूपग- |
| १४७ | ६ | स्यव | स्यैव |
| १४६ | १ | वापनीयो | वापनयो |
| १५१ | ४ | फलभात्तृ | फलभोक्तृ |
| १५१ | २४ | समर्थ्या | सामर्थ्या |
| १५२ | १५ | नुपपत्त | नुपपत्ते |
| १५२ | १८ | ऽप्यस्तो- | ऽप्यभ्यस्ती- |
| १५२ | १६ | दर्शनाभ्यच | दर्शनाच |
| १५३ | ७ | भावात् दव- | भावादव- |
| १५३ | ८ | फलपेक्ष | फलापेक्ष |
| १५३ | १६ | विधि | विधि- |
| १५४ | १ | न तु | ननु |
| १५४ | २१ | कार्याप | कार्याप |
| १५५ | १४ | जिज्ञासायोः | जिज्ञासयोः |
| १५५ | २४ | ऽन्यार्थात्वेन | ऽन्यार्थत्वेन |
| १५६ | ८ | पक्षेति | पेक्षेति |
| " | " | परिशेषपरिशेषात् | परिशेषात् |
| १५६ | १२ | नोत्तरोत्तर | नोत्तरोत्तर |

## शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| १५६ | १४ | प्रामाणा | प्रमाणा | १८७ | १८ | वैदकैः | वैदिकैः |
| १५७ | १४ | संस्कार | संस्कारा | १८६ | २४ | कल्यकं | ल्यकं |
| १५७ | १६ | चत्वारिश | चत्वारिंश | १६१ | १ | साद | सादि |
| १५८ | १६ | मरणता | करणता | १६३ | १५ | चैतेन्य | चैतन्य |
| " | " | नैति कर्त्त | नैतिकर्त्त | १६४ | २२ | क्रमकरि | क्रमकारि |
| १५८ | २३ | मात्रत्वा | मात्रत्वा- | १६५ | २२ | प्रदःपा | प्रदीपा |
| १५८ | २४ | कल्वेशत्वा | कल्वेश्यत्वा | १६६ | २७ | अपत्तन्त | अपेत्तन्त |
| १५६ | २४ | तदुक्तार्थ | तदुक्तार्था | २०० | ७ | गात् मान | गात्मान |
| १६० | १७ | न्यान्यः | नान्यः | २०० | २५ | घटाकाशमिति | घटाकाशमिति । |
| १६१ | ४ | प्रणवता | प्रवणता | २०२ | ६ | नैवताव | नैताव |
| १६२ | ६ | न्यसेत्याद | न्यसेत्याद | २०२ | २८ | यते | र्यते |
| १६२ | १० | विहित्वा | विहितत्वा | २०३ | २४ | कर्तृत्वभावे | कर्तृत्वाभावे |
| १६२ | १४ | कल्मषस्या | कल्मषस्य | २०४ | १७ | प्राक्क्तनः | प्राक्तनः |
| १६४ | १० | विधानत् | विधानात् | २०५ | ४ | धिकारण | धिकरण |
| १६४ | १४ | नान्यर्दवे | नान्यैर्देवे | २०७ | ८ | व्याघो | व्याघोऽ |
| १६४ | १७ | धर्मे | धर्मैः | २०८ | १४ | प्रशान्त | प्रक्रान्त |
| १६४ | १८ | तद्धर्मणां | तद्धर्माणां | २०६ | २३ | सर्वज्ञाता | सर्वज्ञात |
| १६६ | १८ | ऽनुरूपि | निरूपि | २१० | ६ | ऽपरिभाव | परिभाव |
| १६७ | ११ | वृत्तव्यां | वृत्तां | २१२ | २० | आहोस्वि | आहोस्वि |
| १६८ | १६ | सस्त्वि | सत्त्वि | २१४ | ७ | वाना मपि | वानामपि |
| १७० | १४ | इत्यतः | इति । अतः | २१५ | १० | कार्यत्वात्सि | कार्यत्वासि |
| १७१ | २ | च्चातुर्मस्या | च्चातुर्मास्या | २१५ | १६ | एवाह्या | एव ह्या |
| " | " | तत्रव | तत्रैव | २१६ | २६ | द्धस्वत्वं | दृध्रस्वत्वं |
| १७१ | १७ | तस्य | तस्या | २१७ | १३ | द्वि शिष्ट | द्विशिष्ट |
| १७३ | ३ | प्रधान्येन | प्राधान्येन | २१६ | ७ | दात्र ऽद्वि | दात्रऽद्वि |
| १७५ | १६ | केनारम्भः । क्रियते | केनारम्भः क्रियते | २१६ | २४ | रित्यतर्थ | रित्यर्थ |
| १७६ | ७ | जिज्ञासा | जिज्ञासा | २२० | २३ | प्रति | प्रति- |
| १७६ | ६ | व्यर्यास्त्विति | व्यमस्त्विति | २२० | २८ | मुद्रयो परि | मुद्रयोपरि |
| १७७ | २५ | वस्तुकर्म | वस्तु कर्म | २२० | २६ | मुद्रयो परि | मुद्रयोपरि |
| १७६ | ३ | न्याया विष | न्यायविष | २२१ | ८ | स्पटिक | स्फटिक |
| १७६ | ४ | सम्भावाना | सम्भावना | २२१ | १४ | सामार्थ्या | सामर्थ्या |
| १८१ | १० | विरुरोधिषु | विरोधिषु | २२१ | २३ | कर्त्तव्यता ब्रह्मा | कर्त्तव्यताब्रह्मा |
| १८१ | १५ | प्रयोगान्तरेष्व | प्रयोगान्तरेष्व- | २२२ | २२ | तथा- | तथा |
| १८२ | १७ | ममुखेन | नमुखेन | २२२ | २६ | नेका- | नेक- |
| १८४ | ८ | समार्थ्या | सामर्थ्या | २२३ | २६ | सहिष्णु धर्म | सहिष्णुधर्म |
| १८४ | २१ | तत्रोपप | तत्रोपप | २२४ | १६ | तार्हि | तर्हि |
| १८५ | १६ | ऽनुगम्यते । | ऽनुगम्यते | " | " | पैरुषे | पौरुषे |
| १८५ | २३ | वार्थनु | वार्थानु | २२६ | १६ | किमिति त | किमिति त- |
| १८६ | ५ | निर्णात | निर्णीत | २२७ | ३ | लभ्योप | लभ्योप- |
| " | " | जिज्ञास्य | जिज्ञास्य- | २२८ | ११ | सर्व | सर्व- |
| " | २२ | रूपानर्णा | रूपनिर्णा | २२६ | ३ | दस्य | वेदस्य |
| " | २५ | प्राणि | प्रामाणि | २३१ | ३१ | कत्वानिश्चे | कत्वनिश्च |
| " | २६ | जिज्ञासा | जिज्ञासा | २३४ | ५ | प्रामाणा | प्रमाणा |
| १८७ | ४ | समाधत्त | समाधत्ते | २३४ | १७ | कर्मीति | कर्मीति इति |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २३४ | २८ | तच | तत्र |
| २३४ | २९ | किंचित्कन्प | किंचित्कल्प |
| २३५ | २४ | पक्रम | एक्रम |
| २३६ | ११ | विषविषय | विषय |
| २४० | ४ | नावर्हति | नावर्हन्ति |
| २४० | ५ | सर्वप्रामा | सर्वप्रमा |
| २४० | १९ | प्रामाणा | प्रमाणा |
| २४० | २१ | च्चैत्यन्य | च्चैतन्य |
| २४१ | ६ | व्युत्पिनुः | व्युत्पत्तुः |
| २४२ | १६ | नन्वेवमपि । | नन्वेवमपि |
| २४२ | २२ | व्याघृ | व्यावृत्तं |
| २४३ | १० | अपिचा | अपिच |
| २४३ | २४ | नवत | नवगत |
| २४४ | २६ | श्चेतरा | श्चेतरेतरा |
| २४५ | ३० | अयम | अष्टम |
| २४६ | २० | मानिष्ठ | मानिष्ट |
| २४६ | २५ | विलायां | वेलायां |
| २४७ | ८ | त्वादर्थ | त्वादर्थ- |
| २४७ | २८ | नैयोगिक | नैयोगिक |
| २४९ | ११ | त्सर्जातो | त्सजाती |
| २४९ | १६ | । तदपि | तदपि |
| २५० | ६ | प्रति पाद | प्रतिपाद |
| २५१ | २६ | ऽलौकि | ऽलौकि |
| २५३ | १४ | गतमर्विमु | गतम् विमु |
| २५३ | १९ | तम | रीतम |
| २५४ | ६ | नुन | ननु |
| २५४ | १० | त्युपसना | त्युपासना |
| २५४ | १२ | परिणाम | परिमाण |
| २५५ | १४ | पुन रा | पुनरा |
| २५५ | २३ | मुत्त्युपायेग | मुत्त्युपयोग |
| २५६ | १६ | मुच्यते । | मुच्यते |
| २५६ | १९ | श्यनृषि | श्यनृषि |
| २५७ | २१ | प्रष्टा | प्रष्टो |
| २५८ | ११ | दृति । | दृति |
| २५८ | २२ | मित्यत | मित्यतः |
| २५९ | १३ | तत्रावस्था | तत्रावस्था |
| २५९ | १८ | स्यान्यत्म | स्यान्यात्म |
| २५९ | २५ | ऽशांशि | ऽशांशि |
| २६० | ५ | पृथक्कि- | पृथक्कि- |
| २६० | २२ | श्चेतित्यु | श्चेत्यु |
| २६० | २४ | पतिपाद | प्रतिपाद |
| २६० | २५ | वस्तु प्रति | वस्तुप्रति |
| २६२ | २३ | न च स | न च सा |
| २६२ | २७ | नुपायि | नुयायि |
| २६२ | ३० | ऽवछिन्न | ऽवच्छिन्न |
| २६३ | २१ | नन्तरभू | नन्तरभू |
| २६४ | २ | प्राकाशा | प्रकाशा |
| २६४ | ३० | भन्नाभिन्ने | भिन्नाभिन्ने |
| २६६ | २४ | बह्मणो | ब्रह्मणो |
| २६६ | २९ | स्ताद्भाव | स्तद्भाव |
| २६७ | २७ | रेवत्ये | रेवत्ये |
| २६८ | २० | छन्दमाऽऽमा | छन्दऽऽमा |
| ,, | ,, | प्रतीकालम्ब | प्रतीकालम्ब- |
| २६९ | ६ | ऽस्य यस्य | ऽयस्य |
| २६९ | १६ | गायत्री शा | गायत्रीशा |
| २६९ | २५ | फल प्राप्तिः | फलप्राप्तिः |
| २७० | १ | संकल्पे | संकल्प- |
| २७० | १० | चेदुत् क्रा | चेदुत्क्रा |
| २७१ | ५ | इत्यादि प | इत्यादिप |
| २७६ | २४ | दर्येतिति | दर्येति |
| २७७ | ३ | सार्थ्य | सामर्थ्य |
| २७७ | १८ | तस्माद- | तस्माद् |
| २७७ | २२ | द्वितीयो | द्वितीया |
| २७८ | २१ | सामञ्जस | समञ्जस |
| २७८ | २८ | शोधतं | शोधितं |
| २८० | ३ | सम्बध | सम्बन्ध |
| २८३ | ३ | सम्ब | सम्ब- |



# वर्णक्रमानुसारिसूचीपत्त्रम् ।

पृष्ठे पङ्क्तौ

# पञ्चपादिकाविवरणम् ।



पालने विमलसत्त्ववृत्तये जन्मकर्म्मणि रजोजुषे लये ।
तामसाय जगतः पराकृतद्वैतजालवपुषे नमः सते ॥ १ ॥

यस्याः प्रसादमवलम्ब्य जगद्गुरूणामप्यस्खलद्बहुगुणाः प्रसरन्ति वाचः ।
सा वेदशास्त्रपरिनिर्मितवन्द्यदेहा भूयात्समग्रवरदैव सरस्वती नः ॥ २ ॥

विघ्नाभितापमभिहत्य मदीयकृत्यबीजं प्रवृद्धमदनुग्रहवर्षपातैः ।
सम्प्रार्थितः सिततरोपि गणेशमेघः सिञ्चन्नऽभीष्टफलमङ्कुरयत्वऽमोघम् ॥ ३ ॥

श्यामोऽपि श्रुतिकमलावबोधरागः शान्तः सन्नयति तमो विनाशमन्तः ।
नीरूपं प्रथयति योपि गोसहस्रैस्तं व्यासं नमत जगत्यऽपूर्वभानुम् ॥ ४ ॥

उद्धृत्य वेदपयसः कमलामिवाब्धेरालिङ्गिताखिलजगत्प्रभवैकमूर्त्तिम् ।
विद्यामशेषजगतां सुखदाम ऽदाद्यस्तं शङ्करं विमलभाष्यकृतं नमामि ॥ ५ ॥

वन्दे तमात्मसम्बद्धस्फुरद्ब्रह्मावबोधतः ।
अर्थतोपि न नाम्नैव यो ऽनन्यानुभवो गुरुः ॥ ६ ॥

प्रकाशात्मा यतिः सम्यक् प्राप्तविद्याशुशुत्सया ।
यथाश्रुतं यथाशक्ति व्याख्यास्ये पञ्चपादिकाम् ॥ ७ ॥

विदितसकलवेद्यैर्न्न प्रशंसन्ति लोके
ग्रथितमपि महद्भिः किं पुनर्मादृशेन ।
इति विफलसमे ऽस्मिन् वाग्व्यये ऽहं प्रवृत्तः
स्वमतिविमलतायै क्षन्तुमर्हन्ति सन्तः ॥ ८ ॥

प्रारिप्सितग्रन्थस्याविघ्नेन परिसमाप्तिप्रचयगमनाभ्यां शिष्टाचारपरिपालनाय चाभिलषितदेवतापूजानमस्कारः कर्त्तव्यः शास्त्रार्थश्च तत्त्वम्पदार्थविवेकोपायलभ्यः प्रत्यग्ब्रह्मणोरैकत्वलक्षणः सङ्क्षेपतो ,दर्शनीयः कृत्स्नस्य भाष्यस्य तत्र तात्पर्य्यकथनायेति तदुभयं श्रुत्यर्थाभ्यां, सङ्क्षेपतो दर्शयति अनाद्यानन्दकूटस्थ * ज्ञानानन्तसदात्मने । अभूतद्वैतजालाय साक्षिणे ब्रह्मणे

* ज्ञानानन्देति ३ पु० ।

नम इति । कृत्स्नस्य भाष्यस्य ब्रह्मात्मैकत्वे तात्पर्य्यमत्र दर्शितमुत्तरत्र विभज्यतात्पर्य्यदर्शनात् । अत्र देवतागुरु * विषया पूजानमस्काराद्युपबृंहिता † भक्तिर्वक्तुरुक्तप्रयोजनसम्पादिन्यपि श्रोतॄणामपि विद्याङ्गभावं प्रतिपद्यत इति वाङ्मनःकायप्रणिधानैर्गुरूनभिपूजयति नमः श्रुतिशिरःपद्मषण्डमार्त्तण्डमूर्त्तये इत्यादिभिस्त्रिभिः श्लोकैः । यत्कार्यमुद्दिश्य मङ्गलाचरणं सम्पादितं तन्निर्दिशति पदादिवृन्तभारेणेति । ननु नेदं भाष्यं व्याख्यानपदवीमुपारोढुमर्हति भाष्यलक्षणाभावात् । सूत्रार्थो वर्ण्यते यत्र वाक्यैः ‡ सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरिति हि भाष्यलक्षणं वदन्ति । तत्राथातो ब्रह्मजिज्ञासेतिसूत्रे अनुवादपरिहाराय शास्त्रे पुरुषप्रवृत्तिसिद्धये च कर्त्तव्येतिपदमध्याहर्त्तव्यम् । तत्र जिज्ञासापदेनान्त § र्नीतं विचारमुपलक्ष्यानुष्ठानयोग्यतया साधनचतुष्टयसम्पन्नस्य ब्रह्मज्ञानाय विचारः कर्त्तव्य इति सूत्रवाक्यस्य श्रौतो ऽर्थः सम्पद्यते । अर्थादधिकारिविशेषणमोक्षसाधनं ब्रह्मज्ञानमिति सिध्यति । सन्निधानाच्च वेदान्तवाक्यविचार इति श्रुत्यर्थाभ्यां साधनचतुष्टयसम्पन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्त्तव्य इति सूत्रवाक्यस्य तात्पर्य्येण प्रतिपाद्यो ऽर्थो ऽवगतः । तत्रेदं भाष्यं न सूत्रार्थकलामपि प्रतिपादयत्यतो न व्याख्यानार्हमित्येतं शङ्कितं दोषं परिहरन् भाष्यखण्डस्य सूत्रेणार्थादुपात्तविषयप्रयोजनप्रतिपादने तात्पर्य्यं दर्शयति युष्मदस्मत्प्रत्ययगोचरयोरित्याद्यहमिदं ममेदमिति नैसर्गिको ऽयं लोकव्यवहार इत्यन्तं भाष्यमस्यानर्थहेतोः प्रहाणाया ऽऽत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त इत्यनेन भाष्येण पर्यवस्यच्छास्त्रस्य विषयः प्रयोजनं चार्थात् प्रथमसूत्रेण सूचिते इति प्रतिपादयतीति । तत्र नैसर्गिकोयं लोकव्यवहार इत्यन्तं भाष्यमिति ग्रन्थः शास्त्रविषयं प्रयोजनं च प्रतिपादयतीत्युत्तरेण सम्बध्यते । ननु कथं भाष्यद्वयमेव विषयप्रयोजने प्रतिपादयति । शास्त्रारम्भनिमित्तविषयप्रयोजनसिद्धिहेतोरध्यासस्योपस्थापकत्वादिति ब्रूमः । हेतुवचनं हि प्रतिज्ञातार्थमेव साधयति । तथाहि । एतच्छास्त्रमारम्भ-

* विषयपूजेति ३ पु॰ । † उपबृंहिता नाम वर्द्धिता परिपूर्णा संयुक्तेति यावत् ।

‡ सूत्रानुसारिभिरिति क्वचित् पाठः ।

§ अन्तर्नीतमिति पु॰ त्रयेऽप्यस्ति, तथापि अन्तर्णीतेति तु न्याय्यं स्यात् ।

यीयं सम्भावितविषयप्रयोजनत्वात्कृष्याद्यारम्भवत् । शास्त्रं च सम्भावितविषयप्रयोजनम् अविद्यात्मकबन्धप्रत्यनीकत्वात् जाग्रद्बोधवदिति । तदेवं *शास्त्रस्यारम्भनिमित्तविषयप्रयोजनवत्त्वप्रत्यनीकस्य बन्धस्याविद्यात्मकत्वं निर्दिशद्भाष्यद्वयं विषयप्रयोजने प्रतिपादयतीति । ननु बन्धस्याविद्यात्मकत्वलक्षणो हेतुरसिद्धः कथमसिद्धमसिद्धेन साध्यत इत्यत आह । सर्वे वेदान्ता आरभ्यन्त इत्यनेन भाष्येण पर्यवस्यदिति विषयादिसिद्धिहेतोरध्यासस्य सिद्धिहेतुभूतानि लक्षणसम्भावनासद्भावप्रमाणानि प्रतिपादयता भाष्येण सह लक्षणादिभिः स्वार्थमध्यासं साधयित्वा विषयप्रयोजने साधयतीत्यर्थः । अत एव व्यवधानाव्यवधानाभ्यां विषयादेः साधकत्वादेतदन्तमनेन पर्यवस्यदिति भाष्यस्य विभागेनोपादानं कृतम् । ननु तर्हि सर्वलोकप्रत्यक्ष इत्यनेन पर्यवस्यदिति वक्तव्यम् । सत्यम् । अस्यानर्थहेतोरिति भाष्यस्य विषयप्रयोजनयोर्वेदान्तवाक्यसम्बन्धकथनद्वारेण विचारशास्त्रसम्बन्धप्रतिपादनपरत्वात् । विचारशास्त्रीयविषयप्रयोजनसाधने सव्यवधानत्वसाम्येन पूर्वभाष्येण सहोपादानं कृतम् । नन्वेवमप्यसूत्रसम्बन्धिनी विषयप्रयोजने किमिति †प्रतिपाद्येते इत्यत आह विषयः प्रयोजनं चार्थात्प्रथमसूत्रेण सूचिते इतीति । इतिशब्दो हेतौ यस्मात्प्रथमसूत्रेणार्थात्सूचिते तस्मात्प्रतिपादयतीति ॥

कः पुनरस्य सूत्रस्य प्रसङ्ग ‡इति । उच्यते । नित्येनैवाध्ययनविधिना ऽधीतस्वाध्यायो वेदान्तवाक्येष्वापातदर्शनेनेदमवगच्छति । आत्मनस्तु कामाय सर्वं प्रियमित्युपक्रमात्सर्वतो विरक्तस्यात्मप्रेप्सोरात्मनि विज्ञाते सर्वमिदं विज्ञातमेतावदरे खल्वमृतत्वमित्युपसंहारादमृतत्वसाधनमात्मदर्शनं द्रष्टव्य इत्यनूद्य तादर्थ्येन मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नामाऽङ्गि विधीयत इति । स च तत्र कियद्विशेषणपर्यन्तो ऽधिकारी किम्प्रमाणकश्च को वा ऽसौ वेदान्तवाक्यविचारो ऽन्यतः प्राप्तो ऽप्राप्तो वा कथं चात्मज्ञानं मोक्षसाधनं किम्प्रमाणकं च तत्किं वा तदात्मतत्त्वं किम्प्रमाणकं चेति जिज्ञासते । तं च जिज्ञासुं पुरुषार्थकाममुपलभ-

* शास्त्रारम्भेति २ पु० । † प्रतिपद्येते-इति १,२ पु० । ‡ इतिशब्दो नास्ति ३ पु० ।

मानो भगवान् बादरायणः साधनचतुष्टयसम्पन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारं विदधतो विधेरपेक्षिताधिकारिविषयफलानुबन्धत्रयमागमिकमपि न्यायेन निर्णेतुं सूत्रयामास ऽथातो ब्रह्मजिज्ञासेति । *श्रुतिसूत्रयोरैकरूप्यावगमात् । मनननिदिध्यासनयोश्च श्रवणाङ्गत्वमुत्तरत्र वक्ष्यामः । ननु श्रोतव्य इति विधिर्मोक्षसाधनब्रह्मात्मज्ञानाय वेदान्तवाक्यविचारं साधनचतुष्टयसम्पन्नस्य विधातुं न शक्नोति श्रवणादीनां विषयावगमं प्रत्यन्वयव्यतिरेकसिद्धसाधनत्वात् । न चावघातादिवदुभयार्थता सम्भवति । दृष्टादृष्टप्रकारद्वयसाध्यापूर्ववदिहादृष्टसाध्यस्याभावादात्मावगमस्य दृष्टोपायमात्रसाध्यत्वादिति । नैतत्सारम् । आत्मत † त्वापरोक्षस्य सर्वादृष्टसाध्यत्वस्य ‡ वक्ष्यमाणत्वादवघातादिव § दुभयार्थतया विधानोपपत्तेः । ननु विधिपरत्वे वेदान्तानां तन्निष्ठतया ब्रह्मस्वरूपस्यासिद्ध्यादिदोषप्रसङ्गान्नास्ति श्रवणादिविधानमिति भाष्यकारैरेव दर्शितम् । सत्यम् । ज्ञानविधिस्तत्र निराकृतो न श्रवणादिविधिस्तत्रोक्तदोषप्रसङ्गाभावात् । कथम् । दर्शनविधाने हि ब्रह्म ‖ कर्मतया गुणभूतं प्रसज्यते । ब्रह्मदर्शनमुद्दिश्य विचारविधाने तु स्वप्रधानफलभूतद्दर्शनविशेषणतया ब्रह्मापि स्वप्रधानं भवति नतु गुणभूतमिति वेदान्तैर्ब्रह्मणि स्वप्रधाने प्रतिपाद्यमाने तद्दर्शनाय श्रवणादिविधानं ¶ नैव विरुध्यते । नन्वेवमप्युपक्रमोपसंहाराभ्यामेकस्मिन्नात्मप्रतिपादनपरे वाक्ये कथमवान्तरवाक्यैः श्रवणादिविधानं कल्प्यत ** इति । अवान्तरवाक्यभेदेन विविदिषन्तीति यज्ञादीनां ज्ञानसंयोगविधानवदुपरि हि देवेभ्य इत्युपरिधारणविधानवन्मलवद्वाससो व्रतकलापविधानवच्चेति ब्रूमः । अथवा । तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्येत्यादिवाक्यं श्रवणादिविधायकमस्तु तस्य तत्परत्वात् । सूत्रकारेण च वक्ष्यमाणत्वात् । सर्वथा तावन्मनननिदिध्यास-

---

* मुमुक्षोर्ब्रह्मज्ञानाय विचारकर्त्तव्यताप्रतिपादकत्वेन तयोस्तुल्यत्वादिति भावः ।-भावप्रकाशिका । † तत्त्वापरोक्षस्येति २ पु॰ । ‡ सर्वापेक्षा च तद्दर्शनादिति सूत्रे ।

§ न च नियमापूर्वस्योपयोगाभावः कल्मषनिवृत्तेस्तत्साध्यत्वात् । न च यज्ञादिनैव सा सिद्धेति वाच्यम्, जिज्ञासाप्रतिबन्धककल्मषनिवृत्तेस्तत्साध्यत्वे ऽपि ब्रह्मनिर्णयप्रतिबन्धकनिवृत्तेरेतत्साध्यत्वादिति संन्यासापूर्ववत्तस्यार्थवत्त्वादिति भावः-इति भावप्रकाशिका ।

‖ ज्ञानस्येति शेषः-भाव॰ ।

¶ विनैव रुध्यत इति पाठे १ पुस्तके सत्यपि नैव विरुध्यत इति युक्तः पाठः, न विरुध्यत इति तु २,३ पु॰ । ** इत्यावान्तरेति १ पाठः ।

भाष्यामङ्गभूताभ्यां सह श्रवणविधानमस्त्येवा ऽतस्तदपेक्षितानुबन्धचय-* निर्णयाय † सूत्रमारब्धम् । कर्त्तव्ये ‡ चाधिकारिणा मोक्षसाधन § ब्रह्म-ज्ञानाय वेदान्तवाक्यविचारे प्रथमसूत्रेण प्रतिपादिते स च कर्त्तव्यो विचारो जन्मादिसूत्रमारभ्य प्रवर्त्तिष्यत इति तत्र विध्यपेक्षितेष्वधिकारिविषय-फलानुबन्धेषु विषयफलयो ‖ रुपपादनाय बन्धस्य मिथ्यात्वमत्र वर्ण्यत इति सूत्रसङ्गतमेवेदं भाष्यं व्याख्येयमिति ॥

ननु यद्यर्थाद्विषयप्रयोजने सूचिते तर्हि भाष्यकारेण सूत्रस्य तत्र व्यापारं दर्शयित्वा ऽऽक्षेपसमाधानपूर्वकं साक्षादेव प्रतिपादनीये ¶ विषयप्र-योजने अन्यथा सूत्रकारभाष्यकारयोस्तत्र तात्पर्याभावप्रसङ्गादिति । तत्राह एतच्च तस्माद् ब्रह्मजिज्ञासितव्यमित्यादिभाष्ये स्पष्टतरं भाष्यकारेणोक्तमिति । प्रतिपादयिष्याम इत्यध्याहारः । प्रथमग्रन्थोक्तमेवार्थमाक्षेपसमाधानपूर्वकमति-तरां स्पष्टीकर्त्तुं चोदयति अत्राह यद्येवमिति । नन्वस्यानर्थहेतोरिति भाष्यव-त्पूर्वभाष्यमपि विषयादिकमेव प्रतिपादयति कुतस्तत्र पर्यनुयोग इति नेत्याह अहं मनुष्य इति देहेन्द्रियादिष्वित्यादिनात्र विचारकर्त्तव्यताविषयप्रयोज-नाध्यासानामुत्तरोत्तरेण ** पूर्व्वपूर्व्वस्य साध्यत्वस्य सूत्रेणैव सूचितत्वादध्या-ससाधनद्वारेण विषयप्रयोजने साधयित्वा विचारकर्त्तव्यता साधनीयेति क्रम-नियमं विवक्षन्नाह उच्यत इत्यारभ्य वक्ष्यति चेतदित्यतः प्राक्तनेन ग्रन्थेन । ननु †† ब्रह्मज्ञानप्रयोजनां विचारकर्त्तव्यतां ‡‡ सूचयता सूत्रेण कथं बन्धनि-वृत्तिर्विचारविज्ञानयोः प्रयोजनत्वेन सूचितेति । तत्राह । ब्रह्मज्ञानं हि सूचितमनर्थहेतुनिबर्हणमिति । विचारसाध्यज्ञानस्य प्रयोजनमाकाङ्क्षन्विचार-विधिरधिकारिविशेषणं मोक्षं प्रयोजनत्वेन प्रमिमीते इत्यर्थः । नन्वनर्थो नरकपातादिलक्षणो ऽन्य एव शरीरादिप्रतिभासस्य च मिथ्यात्वं साध्यत इति किं केन सङ्गतमिति नेत्याह अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वभोक्तृत्व-

* विनिर्णयायेति २ पु० । † न्यायसूत्रमिति २ पु० ।
‡ अधिकारिणः–इति २ पु० । § ब्रह्मात्मज्ञानायेति २ पु० ।
‖ उपादानायेति १,३ पु० ।
¶ विषयप्रयोजने ऽन्यथेति १,२ पुस्तके सत्यपि विषयप्रयोजने अन्यथेति ३ पुस्तकपाठो युक्तः । ** पूर्वपूर्वसाध्यत्वस्येति २ पु० ।
†† ब्रह्मज्ञानप्रयोजनमिति १,२ पु० । ‡‡ सूत्रयता–इति २ पु० ।

मिति । निवर्त्ततां तर्हि ज्ञानेन वस्तुभूतमेव प्रमातृत्वकर्तृत्वभोक्तृत्वमिति नेत्याह तद्यदि वस्तुकृतमिति । तथाहि । चित्रावयविनि नीलविशिष्टद्रव्यज्ञानं स्वविषयं वा स्वविषयसमवेतं वा रसादिकं विरोधिनं वा पीतिमादिगुणं न निवर्तयति स्वविषयानवबोध एव केवलस्तेन निवर्त्यते । स्वाश्रयगतं वस्तु ज्ञानेन निवर्त्तत इति चेन्न घटादिज्ञानेनात्मगतधर्माधर्मादिगुणानिवृत्तेः । न चाश्रयविषयोभयसम्बन्धि वस्तु ज्ञानेन निवर्त्तते आत्मनः शरीरविषयज्ञानेन देहात्मसम्बन्धाद्यनिवृत्तेरिति । ननु न दृष्टसामर्थ्यात् ज्ञानाद्बन्धनिवृत्तिर्येनाविद्यात्मत्वं वर्ण्येत किन्त्वागम एव ज्ञानाद्बन्धनिवृत्तिं श्रावयति । ननु श्रुतोपपत्त्यर्थमेव बन्धस्यावि* द्यात्मत्वं वर्णनीयमेव । यथाग्नेयादीनां † षण्णां यागानामधिकारापूर्व्वविषयतया ऽपूर्व्वकरणभावे श्रुतेपि कालान्तरभाविप्रधानापूर्व्वसाधनत्वोपपत्त्यर्थं क्रमभावियागकर्म्मजन्यानि मध्यवर्त्तीन्यवान्तरापूर्व्वाणि कल्प्यन्ते । यथा वा श्रुतस्यैव स्वर्गसाधनत्वस्योपपत्तये ऽपूर्व्वं कल्प्यते तद्वत् । ननु तत्र क्षणिकानां कर्म्मणां कालान्तरवर्त्तिफलसाधनत्वाभावव्याप्तिनियमाल्लोके वेदेपि स्वर्गापूर्व्वसि ‡ द्धौ मध्ये § ऽपूर्वाणि कल्प्यन्ते श्रुतोपपत्तय इति । तर्हीहापि व्याप्तिनियतिरस्तीत्याह यतो ज्ञानमज्ञास्यैव निवर्त्तकमिति । अतः सूत्रस्यैव बन्धस्याविद्यात्मकत्वे व्यापारात्सूत्रार्थविचारकर्तव्यतोपपत्त्यर्थंप्रयोजनसाधनायाध्यासो वर्णनीय इत्याह तद्यदीत्यादिना सूत्रार्थोपपत्त्युपयोगितयेत्यन्तेन ग्रन्थेन । ननु सूत्रेण प्रथमप्रतिपन्नं प्रतिपाद्यमर्थमुल्लङ्घ्य किमिति चरमप्रतिपन्नमार्थिकार्थमेव भाष्यकारः प्रथमं वर्णयतीति तत्राह सकलतन्त्रोपोद्घात इति प्रतिपाद्यमर्थं बुद्धौ संगृह्य प्रागेव तदर्थमर्थान्तरवर्णनमुपोद्घातः प्रतिपाद्यं बहिरेव प्रतिज्ञाय पश्चात्तत्सिद्धिहेतूपवर्णनं प्रतिपादनमिति विभागः तन्त्रमिति तन्त्रार्थो ब्रह्मात्मैकत्वमुच्यते । ननु भवतु प्रयोजनसिद्धिहेतुरध्यासः कथं तन्त्रार्थसिद्धिहेतुरित्याशङ्क्य तत्कथनाय तन्त्रार्थं प्रथमं कथयति तथाचास्य शास्त्रस्येति ऐदम्पर्यं प्रतिपादितमित्युत्तरेण सम्बन्धः । तदेवैदम्पर्यं दर्शयति सुखैक-

* अविद्यात्मकत्वमिति २,३ पु० ।
† आग्नेयादिषण्णामिति प्रायः सर्वत्र ।
‡ सिद्धाविति २ पु० ।
§ अपूर्वान्तराणीति २ पु० ।

तानेत्यादिना । अयमर्थः । ब्रह्मात्मैकत्वे वेदान्ताः पर्यवस्यन्तीति यदिदं वेदान्तशास्त्रस्यैदंपर्यं तत् सूत्रभाष्याभ्यां प्रतिपादितमिति । तन्त्रार्थं प्रदर्श्य तस्याध्याससिद्ध्यधीनतया ऽध्यासस्य प्रथमवर्णनीयतां दर्शयति तत्राहं कर्ता सुखी दुःखीति । ननु शास्त्रमेव प्रत्यक्षाभिमतमपि बन्धमाभासीकृत्य ब्रह्मात्मैकत्वं प्रतिपादयिष्यति किं पृथगध्यासवर्णनेनेति । तत्राह तावज्जरद्गवादिवाक्यवदिति । ननु शास्त्रार्थसिद्धिरध्यासपराधीना चेत्स एव तर्ह्यध्यासः सूत्रकारेण मुखतो वर्णनीयः तस्य प्राधान्यादन्यथा तत्रातात्पर्यप्रसङ्गादिति । तत्राह वक्ष्यति चैतदिति । तर्ह्युपोद्घातत्वात्प्रथममेवाध्यासविषयं सू प्रणेतव्यमिति चोदति । यद्येवमिति । अर्थनिर्णयप्रधानत्वाद्वादकथालक्षणायां *प्रतिपादनप्रक्रियायां प्रवृत्तः सूत्रकारो नोपोद्घातप्रक्रियायामिति परिहरति मैवमर्थविशेषोपपत्तेरिति । तर्हि भाष्यकारेणापि यथासूत्रक्रममेव प्रवर्तितव्यं नतु सूत्रक्रममतिलङ्घ्येति । तत्राह भाष्यकारस्त्विति । सुखप्रतिपत्त्यर्थं प्रवृत्त्यङ्गभावायेत्यर्थः । एवमपि न व्याख्येयमिदं भाष्यं शास्त्रादौ मङ्गलाचरणाभावात् । विघ्नोपसंसृष्टतया शास्त्रार्थे ऽप्रतिपत्त्यन्यथाप्रतिपत्तिविप्रतिपत्तिसम्भवात् शिष्टाचारपरिपालनहीनतया चानाप्तप्रणीतत्वप्रसङ्गादिति चोदयति ननु ग्रन्थकरणादिकार्यारम्भ इति । ननु शिष्टानां निष्ठीवनादिप्रवृत्तिः किमन्येनानुसरणीयेति नेत्याह शिष्टाचारश्च नः प्रमाणमिति· आचारो धर्म इत्येवानुष्ठीयमानं कर्म प्रमाणं कर्तव्यमित्यर्थः । ननु प्रयोजनाभावात् किं मङ्गलाचरणेनेति नेत्याह प्रसिद्धं च मङ्गलाचरण †स्येति । नन्वत्र विघ्न एव नास्त्यल्पारम्भत्वादिति नेत्याह महति चेति । ननु सम्भावनामात्रान्न प्रवृत्तिर्विघ्नशान्तये किन्तु निश्चयादित्यत्राह प्रसिद्धं चेति । ननु लोकप्रसिद्धिर्निर्मूला न विघ्ननिश्चयहेतुरित्यत आह विज्ञायते चेति । उपसंहरति तत्कथमिति । सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनं हरिरितिस्मृतेः शिष्टाचारप्रतिपालनाय विघ्नोपशान्तये च विशिष्टदेवतातत्त्वानुस्मरणलक्षणं मङ्गलाचरणं कृतमित्याहात्रोच्यत इति ।

* समासो ऽस्ति २ पु· ।

† मङ्गलाचरणस्यस्येति १ पु· ।

किं तत्र प्रमाणमित्यत आह युष्मदस्मदित्यादीति इत्यन्तमेवभाष्यं प्रमाणमित्यर्थः मङ्गलाचरणमिति वा । कथमिदं विशिष्टदेवतानुस्मरणं गमयतीति । तत्राहास्य चायमर्थ इति । ननु नेह विशुद्धात्मतत्त्वदेवतानुस्मर्यते किन्त्वध्यासाभावो वर्ण्यत इति । सत्यम् । तादर्थ्येन तत्त्वमप्यनुस्मर्यत इत्याह तत्कथंचनेति । नन्वन्यपरत्वाद्देवतानुस्मृतिरविवक्षिता न कार्यकरीति । नेत्याह । तदन्यपरादेवेति । अन्यार्थमपि देवतानुस्मरणं स्वभावादेव विघ्नोपप्लवं धक्ष्यति धूमार्थ इव वह्निस्तृणादिकमित्यभिप्रायः । व्याख्येयत्वं प्रतिपादितमुपसंहरति तस्मादिति । अन्यार्थप्रवृत्तेन युष्मदस्मदित्यादिपदद्वयमर्थाद्व्याख्यातम् उत्तरपदं व्याख्यातुं भाष्यमा * ददाति विषयविषयिणोरित्यादिना तत्र द्विविधो विरोधो द्विविधा चेतरेतरभावानुपपत्तिः । कथम् । द्वयोः पदार्थयोरेकदेशकालावस्थानसामर्थ्याभावः पदार्थधर्मो विरोधः । तन्निमित्तो ऽवस्थानलक्षणकार्याभाव इतरेतरभावानुपपत्तिरित्येकस्कन्धः । अपरस्तु पदार्थयोरितरेतरात्मतासामर्थ्याभावः पदार्थधर्मो विरोधः । तन्निमित्त इतरेतरात्मतालक्षण † कार्याभावानुपपत्तिरित्यतो द्वैविध्यात्पृच्छति कोऽयं विरोध इत्यादिना । तत्र प्रथमं पक्षं दूषयति ‡ तावदित्यादिना सहावस्थान § मुक्तमित्यन्तेन ग्रन्थेन । तत्र तमःप्रकाशशब्दाभ्यां छायातपशीतोष्णग्रहणमङ्गीकृत्य तत्रापि सहावस्थान ‖ मुक्तं वेदितव्यम् । इदानीं द्वितीयं पक्षमवलम्बते उच्यते परस्परात्मतालक्षणो विरोध इत्यादिना । ननु तमो नामाऽऽलोकाभावमात्रमिति केचिद्रूपदर्शनाभावमात्रमित्यन्ये तत्कथं दृग्दृश्ययोर्भावरूपयोरिदं दृष्टान्तत्वेना ¶ द्रियत इति । उच्यते । उपचयापचयाद्यवस्थाभेदविशेषविशिष्टं रूपवत्तया चोपलभ्यमानं तमः कथं द्वयीमभावविधामासीदेत् । बहलालोकविततेपि देशे निमीलितनयनस्य गोलकान्तरवर्त्तितमोदर्शनमन्धकारोपलब्धिः पिहितकर्णपुटस्यान्तरशब्दोपलब्धिवन्न विरुध्यते । आलोकविनाशितस्य च तमसः पुनर्मूलकारणादेव झटिति महाविद्युदादिजन्मवज्जन्म सिद्ध्यति । ननु रूपवतो द्रव्यस्य स्पर्शवत्त्वनियमा-

---

* सर्वेष्वेव पुस्तकेषु आददातीति पाठः, भाष्यं व्याख्यातुं प्रतीकग्रहणमास्यविहरणं विना-ऽनुपपन्नमित्यास्यविहरणस्य विवक्षितत्वाच्चात्मनेपदमिति द्रष्टव्यमिति भावप्रकाशिका च ।

† कार्याभावो ऽनुपपत्तिरिति २ पु० ।

‡ यदि तावदिति २,३ पु० ।

§ उक्तं वेदितव्यमित्यन्तेनेति २ पु० ।

‖ उक्तमिति द्रष्टव्यम् इति २ पु० ।

¶ उपादीयत इति २ पु० ।

तद्रहितं तमः कथं रूपवद् द्रव्यम * वगम्येत। नैष दोषः। वायोरन्यत्र स्पर्शवद्द्रव्यस्य रूपवत्त्वनियमेऽपि रूपरहितस्य स्पर्शवतो वायोरभ्युपगमात्तद्वद्दर्शननियमादेव स्पर्शहीनस्य रूपवत्तमसः सिद्धेः। धूमस्य च रूपवतश्चक्षुःप्रदेशादन्यत्र स्पर्शानुपलब्धिः तद्व † त्सर्व्वस्पर्शहीनं तमः किं न स्यात्। सवितृकिरण ‡ विततेऽपि देशे प्रदीपालोकजन्मविनाशयोः प्रागभावप्रध्वंसाभावेतरेतराभावेषु तमोबुद्ध्यदर्शनान्नालोकाभावमात्रं तमः। सर्व्वालोकाभावश्चेत्सर्वालोकासन्निधाने तर्हि न निवर्त्तेत। बहलान्धकारसंवृतापवरकान्तरवस्थितस्यापि बहीरूपदर्शनेन सहापवरकान्तस्तमोदर्शनान्न रूपदर्शनाभावमात्रं तम इत्यलमतिप्रसङ्गेन।

ननु दृग्दृश्ययोरितरेतराभावानुपपत्तिस्तयोर्विभ्रमनिमित्तं तादात्म्यावभासं न निरुणद्धि। शुक्तिकारजतयोरपि हि तादात्म्यहीनयोरेव विभ्रमनिमित्तमैकाधिकरण्यमवभासते तद्वदिहापि स्यादिति चोदयति कथमिति। सत्यमिदमंशमात्रस्याधिष्ठानस्य § रजतस्य चाध्यस्यमानस्य क्वचित्तादात्म्यमस्त्येव। ततश्चाधिष्ठानसामान्यांशस्याध्यस्यमानविशेषांशस्य च क्वचित्सामान्यविशेषभावेन वा गुणगुणिभावेन वा समानाधिकृतस्यान्यत्रान्यतरांशवतः पदार्थस्य दर्शनादन्यतरांशाद्भासो विभ्रमो दृष्टः तद्वदिहाधिष्ठानस्य चितोऽध्यस्यमानस्य चानात्मनो नास्तीत्याह स्वतस्तावद्विषयिणश्चिदेकरसत्वान्न युष्मदंशसम्भव इत्यादिना। अयमाशयः। द्रष्टुरचिदंशः स्वाभाविको वा स्यादागन्तुको वेति। न स्वाभाविक इत्याह स्वत इति। चेत्यं हि जडं चैतन्यस्य कर्मकारकतयावभासते। तत्कथमेकस्यां क्रियायां कर्त्तुर्विपरीतस्थानगतं कर्मकारकमात्मा स्यादित्यभिप्रायः। आगन्तुकश्चेत्सहेतुरहेतुर्वा। निर्हेतुश्चेत्तत्राह अपरिणामित्वादिति। नहि निरवयवं वस्तु स्वतः सावयवाकारेण परिणममानं दृष्टमित्यभिप्रायः। न सहेतुरित्याह निरञ्जनत्वादिति। नहि निरवयवमाकाशं हेतूपरागात्परिणममानं दृष्टमित्यर्थः। तर्ह्यनात्मैवाधिष्ठानमात्मांशात्मकं क्वचिद्दृष्टमिति। नेत्याह विषयस्यापीति। समत्वादित्ययमर्थः। यथा द्रष्टुर्द्रष्ट्रन्तरं न प्रत्यक्षगोचरोऽनुमेयमेव तत् एवं विषयोऽपि स्यादिति। परतोऽपि

* अवगम्यते–इति १, ३ पु॰। † सर्वं स्पर्शहीनमिति १ पु०।
‡ संवृतेऽपीति २ पु॰। § रजतस्याध्यस्यमानस्य चेति २ पु॰।

नानात्मनश्चिदाकारपरिणामो जडोपादानस्यापि कार्यस्य जडत्वात् । तर्ह्यात्मचैतन्यमेवानात्मा स्वांशत्वेन स्वीकरोतीति चेत् तत्राह चितेरप्रतिसंक्रमत्वादिति । तस्मात्क्वचिदपि तादात्म्यादर्शनादन्यत्रान्यतरांशदर्शने नान्यतरांशाध्यासो नो * पपद्यत इति । तद्धर्म्माणाम † पि सुतरामित्यारभ्याभाव एवाध्यासस्य युक्त इत्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः ।

नन्वहङ्कारादिषु शरीरान्तेष्वहमित्येव प्रत्ययो नत्विदमिति कथमेषां युष्मत्प्रत्ययगोचरत्वमिति तत्राह तद्बलनि ‡ र्भासिततयेति । तस्यात्मप्रत्ययगोचरस्य चैतन्यस्य बलेन निर्भास्यत्वादहङ्कारादेः प्रतिभासतो युष्मदर्थत्वाभावेप्यपरोक्षतयावभास्यत्वेन लक्षणेन युष्मदर्थभावो युज्यत इत्यर्थः । अपृथक्त्वेपि चैतन्यात्पृथगिवावभासन्त इति । अन्तःकरणवृत्त्युपाधौ नानेवावभासन्त इत्यर्थः ।

भूयोवयवसामान्यसादृश्याभावादात्मनि कर्तृत्वादेरहङ्काराद्युपाधिनिमित्तभ्रमत्वेपि शरीराद्यध्यासस्य सोपाधिकभ्रमत्वाभावाद दुर्घटहङ्कारादिशरीरान्तपदार्थाध्यासस्या ऽसम्भवं प्राप्तमङ्गीकरोति यद्यप्येवमिति । निरुपाधिकभ्रमकार्यदर्शनमेव गुणावयवसामान्याभावेपि केतकीगन्धसदृशः सर्पगन्ध इतिवत्सादृश्यं वा शङ्खपीतिमादाविव कारणान्तरं वा कल्पयतीत्याह तथापीत्यादिना एवमध्यासस्यापीत्यभिप्राय इत्यन्तेन § ग्रन्थेन । नैसर्गिकशब्दार्थमाह प्रत्यक्चैतन्यसत्तामात्रानुबन्धीति । कथम् । आत्मनि कर्तृत्वभोक्तृत्वदोषसंयोग एवाध्यासः । तत्रभोक्तृत्वाध्यासः कर्तृत्वाध्यासमपेक्षते अकर्तुर्भोगाभावात् कर्तृत्वं च रागद्वेषसंयोगाध्यासमपेक्षते तद्रहितस्य कर्तृत्वाभावात् दोषसंयोगश्च भोक्तृत्वमपेक्षते अनुपभुक्ते ऽतज्जातीये वा रागाद्यनुपपत्तेः । एवं बीजाङ्कुरवद्धेतुपरम्परया ऽनादित्वादध्यासस्य नैसर्गिकत्वमिति । लोकव्यवहारशब्दोध्यासाभिधायीति दर्शयति लोक इति मनुष्योहमित्यादिना । व्यवहारोभिज्ञाभिवदनमुपादानमर्थक्रियेति चतुर्विधः अतो मनुष्योहमिति ज्ञानाभिधाने व्यवहारशब्दमर्हत इति भावः ।

अन्यस्यान्यात्मतावभासो ऽविद्येत्युक्ते शुक्लः पट इत्यादिप्रत्ययाना-

* नैवोपपद्यते—इति २ पु॰ ।
† अपिकारो"नास्ति २ पु॰ ।
‡ निर्भासितयेति १ पु॰ ।
§ ग्रन्थेनेति नास्ति २ पु॰ ।

मविद्यात्वप्रसङ्गो मा भूदिति सत्यस्य वस्तुनो मिथ्यावस्तुसम्भेदावभासो ऽवि-द्येति स्वसिद्धान्तमङ्गीकृत्य सत्यानृते मिथुनीकृत्येत्युक्तं तद्व्याचष्टे सत्यमनिदं-चैतन्यमित्यादिना । ननु क्त्वाप्रत्ययोपादानादर्थतः क्रियाभेदः * पूर्व्वापरभाव-श्चाङ्गीकर्तव्यः । तत्कथमध्यासमिथुनीकरणलोकव्यवहाराणामेकार्थत्वमिति । नेत्याह अध्यस्य मिथुनीकृत्येत्यादिना । ननु किमिति स्वरूपमात्रपर्यवसानम् । क्रियाभेद एव क्त्वाप्रत्ययसामर्थ्यादुपादीयतामिति नेत्याह उपसंहारे चेति । नहि पदमात्रवैयर्थ्यभयाद्वाक्यार्थो नैसर्गिकत्वगुणविशिष्टो विशेष्यपदार्थोऽध्यास उपक्रमोपसंहारयोर्भेत्तुं युक्त इत्यभिप्रायः । किं तर्हि क्त्वाप्रत्ययावलम्बनमिति । प्रतिपत्तितः क्रियाभेदपूर्व्वापरीभावावित्याह अतश्चैतन्यं पुरुषस्य स्वरूपमिति । तद्व्यपदेशमात्रमुपचारमात्रमित्यर्थः । कथमेकोऽप्यध्यासोऽन्योन्यात्मता सत्या-नृते अ † हमिदं ममेदमिति च विशेषणभेदाद्द्विशिष्टो ऽध्यासः परोपाधौ भि-द्यते वि ‡ शिष्टाश्च प्रत्ययाः क्रमेण वक्तुर्भवन्तीति प्रतिपत्तितः पूर्वापरीभावं विशेषणभेदाच्च विशिष्टक्रियाभेदं चाङ्गीकृत्य क्त्वाप्रत्यय इति । तत्राज्ञानमित्युक्ते ज्ञानाभावमात्रमुक्तं स्यात् मिथ्येत्युक्ते भ्रान्तिज्ञानमिति स्यात् तदुभयव्यावृत्त्यर्थं निरुच्य पदार्थौ दर्शयति । मिथ्या च तदज्ञानं चेत्यादिना ।

ननु कथं मिथ्याज्ञानमध्यासस्योपादानम् । तस्मिन्सत्यध्यासस्योदया-दसति चानुदयादिति ब्रूमः । नन्वध्यासस्य प्रतिबन्धकं तत्त्वज्ञानं तदभावश्चा-ज्ञानमिति प्रतिबन्धकाभावविषयतया ऽज्ञानस्याध्यासेनान्वयव्यतिरेकावन्यथा-सिद्धौ । नैतत्सारम् । पुष्कलकारणे हि सति कार्योत्पादविरोधि प्रतिबन्धकम् । नचाध्यासपुष्कलकारणे सति तत्त्वज्ञानं कार्यप्रतिबन्धकतया ज्ञायते किंत्वसत्ये-वाध्यासकारणे तत्त्वज्ञानोदयः । तस्मान्नाज्ञानान्वयव्यतिरेकौ प्रतिबन्धकाभाव-विषयौ । तथापि विरोधिसंसर्गाभाव इति चेन्न । कार्यस्य कारणपेक्षा हि प्रथममुत्प-द्यते न विरोधिसंसर्गाभावापेक्षा । तस्मात्प्रथमापेक्षितकारणकॢप्तिमेवान्वयव्यति-रेकौ न्यायसहितौ कुर्व्वाते । ननु कॢप्तं विषयेन्द्रियादिदोषः कारणमिति । सत्यम् । निमित्तं तु तत् उपादानापेक्षायामज्ञानमनुप्रविशति । सर्वं च कार्यं सोपादानं §

---

* पूर्वापरीभाव इति २ पु० । † सत्यानृतेऽहमिदमित्येवं पुस्तकत्रये ऽपि पाठः ।
‡ विशिष्टार्थप्रत्ययाश्च क्रमेणेति २ पु० । § भावेतिनास्ति १ पु० ।

त्वाच्च । सत्यम् । तथाप्यविद्यातन्त्रो विभागो ऽनादित्वेपीति ब्रूमः । * यथा-हि । स्वात्माऽविद्यासम्बन्धो ऽविद्यातन्त्रो नाविद्योपादानः । सम्बन्धजननात् प्राक् स्वातन्त्र्येणावस्थानानुपपत्तेरज्ञानस्यानादित्वाच्चात्माविद्यासम्बन्धस्य नाविद्योपादानता ।

ननु जीवब्रह्माश्रयो विभागः कथमविद्यातन्त्रः स्यात् । उच्यते । अनाद्यविद्याविशिष्टं चैतन्यमनादिजीवभावेन काल्पनिकानादिभेदस्याश्रयो न स्वरूपेण तस्यैकत्वात् अतो विशिष्टाश्रयो विभागः † स्वरूपेणाप्युपरज्यमानो विशेषणाविद्यातन्त्रो विशिष्ट इत्यविद्याकृतो विभाग उच्यते । अविद्यातन्त्राणां चानिर्वचनीयत्वमनादित्वं चाविद्यासम्बन्धवन्न विरुध्यते । लोके च दर्पणघटादिविशिष्टयोरेव मुखाकाशयोर्मिथ्याभेदावभासो न स्वरूपेणेत्युपाधितन्त्रता भेदस्योच्यते । तस्मादनाद्यविद्याप्रतिबिम्बकृतविभागस्यैव जीवस्य तदुत्पन्नाहंकारादिविशेषेषु स्थूलप्रतिबिम्बापेक्षया सर्वेषामुपाधित्वं न विरुध्यते ।

अत्र सर्वसङ्करवादी प्रतिबिम्बस्यावस्तुत्वाभ्युपगमान्न जीवः प्रतिबिम्बमिति जल्पति । तत्र मुखचित्स्वरूपयोः प्रतिबिम्बेषु नावस्तुत्वमिष्यते । भेदविपर्यासादीनामऽवस्तुत्वाभ्युपगमेपि न मुखचैतन्ययोः काचित् क्षतिः । मुखचित्स्वरूपयोश्च बिम्बात्मतां प्रमिमीमहे मिथ्यांशपर्युदासेन । नच मिथ्यांशस्य बन्धमोक्षौ किंतु स्वरूपस्यैव स्वरूपगतस्यापि साङ्कर्यपरिहारयोपाधिभेदो दर्शितः । तस्मात्परसिद्धान्ताऽपरिज्ञानविलसितोऽयं सर्वसङ्करवादिनो विभ्रमः ।

‡ अवस्तुत्वाभ्युपगमादिति । अहंकारोपाधिनिमित्तो जीवब्रह्मविभागो ऽनात्माध्यासश्च दृष्टान्तद्वयेन सिद्धः । तत्र किं रज्जुसर्पोदाहरणेन वेदान्तविहितेनेति चोदिते तस्य प्रयोजनमाशङ्कान्तरनिवृत्तिरित्याह ननु तत्र विभ्राम्यत इति । निरुपाधिकाध्यासपरिनिष्पन्नाहंकारोपाधिकः कर्तृत्वाद्यध्यास इति कथयितुमित्यर्थः । ननु सर्वत्राधिष्ठानाध्यस्यमानव्यतिरिक्तोपाधिनिमित्त एवाध्यासो न निरुपाधिक इति चोदयति ननु तत्रापि यदि नामेति । पूर्वानुभवसंस्कारमात्रोपाधिमात्रमिहापि विद्यते स्वतन्त्रोपाधिरेव निराक्रियत इति २३ १९

* यथा ह्यात्मेति २ पु॰ ।

† स्वरूपेणापरज्यमानो॰ विशेषणाविद्येति २ पु॰, स्वरूपतोप्युपरज्यमानविशेषणेति ३ पु॰ ।

‡ मिथ्यात्वापगमद्वाते हि मूले मिलति पाठः ।

परिहरति बाढमिहापीति । न पूर्वानुभवसंस्कार एव भ्रमहेतुर्न पूर्वभ्रान्तिसंस्कार इति नियमोस्तीति भावः ।

नन्वात्मनि सोपाधिकस्य निरुपाधिकस्य * चाध्यासस्योदाहरणद्वयेनैव सिद्धत्वान्न घटाकाशोदाहरणेन वेदान्तविहितेन कृत्यमस्तीत्याशङ्क्य

२४ १ चोद्यान्तरनिराकरणेनासङ्गत्वसिद्धिः प्रयोजनमित्याह तत्र यद्यप्यनिर्वचनीयतयैवेति । अरुणादिना स्फटिकादेर्गुणगुणित्वेन सम्भेदे योग्यस्याप्यनिर्वचनीयतया ऽरुणादेरसम्भेदावभासः सिद्ध इत्यन्वयः । कथं पुनर्घटाकाशोदाहरणेनासङ्गत्वसिद्धिरिति तदाह तत्र हीति । ननूदाहरणैरेवात्मनो ऽविकारित्वैकत्वासङ्गत्वानां सिद्धत्वान्नागमेन कृत्यमिति नेत्याह एतच्च सर्वमुदाहरणजातमिति । प्रमाणमन्तरेणोदाहरणमात्रादर्थसिद्ध्ययोगात्प्रत्युदाहरणसम्भवादिति भावः ।

अस्मत्प्रत्ययविषयत्वादिति भाष्यमात्मन्यध्यासोपपत्त्यर्थं तत्रास्मत्प्रत्ययस्तन्निमित्ताध्यासश्च दर्शितो विषयशब्दार्थमिदानीमाह तदेवं यद्यपीति । गौण्या वृत्त्या विषयशब्दप्रयोगे किं गुणसाम्यमिति तदाह प्रमेयस्य चेति । ननु † सविकल्पकाध्यासस्य सविकल्पकमेवाधिष्ठानं वक्तव्यम् तथादर्शनात् न ‡ निर्विकल्पकचिन्मात्रम् । तत्र कथमहंकाराद्यध्यासेन § सविकल्पके ऽहंकाराध्यास इति चोदयति ननु व्यवहारयोग्यत्व इति । निर्विकल्पेपि सविकल्पाध्यासदर्शनादज्ञानाध्यासेन सविकल्पे पूर्वाहंकाराध्यासेन वा सविकल्पके

,, १२ चिदवभासे सम्भवत्येवोत्तराहंकाराध्यास इत्याह नाऽनादित्वेनेति ।

नन्वविकारिचैतन्यैकतानस्य निष्कलङ्कस्वभावानन्दस्यासङ्गस्यात्मनो न प्रमातृत्वमुपपद्यते प्रमाणक्रियापरिणामाभावात् । नच प्रमातृत्वहीनस्य कर्तृत्वभोक्तृत्वे सम्भवत इति प्रमातृप्रमाणप्रमेयकर्तृकर्म्मकार्यभोक्तृभोगभोक्तव्यसंसर्गलक्षणस्य व्यवहारस्यात्मन्यसम्भवादऽहंकारस्य चाचेतनतया तदाश्रयत्वायोगादुच्छिन्नव्यवहारमिदं जगदापद्येतेति प्राप्तम् ।

अथ स्वभावसिद्धचैतन्यप्रकाशेनैव विषयं प्रकाशयेत् तर्ह्यविशेषात्सर्वगतत्वाच्च सर्वं प्रकाशयेदित्यव्यवस्थैव । तस्माद्विकारसमर्थ एवात्मेत्यत्रापर

* चस्थाने वाकारः १ पु· । † सविकल्पाध्यासस्येति १, २ पु· ।
‡ निर्विकल्पं चिन्मात्रमिति १, ३ पु· । § सविकल्पे- इति १, २ पु· ।

आह न तावत्सर्वगतात्मवादिनामिदं चोद्यं सम्भवति । कथम् । यदि तावदात्मविषयेन्द्रियमनश्चतुष्टयसंनिकर्षादिनोत्पद्यमानं विज्ञानं क्रिया वा गुणो वा यावदात्मसमवाय्येवोत्पद्येत निरवयवे प्रदेशाश्रयत्वानुपपत्तेस्तदा युगपत्सर्वमूर्त्तद्रव्यसंयोगलक्षणत्वात्सर्वगतत्वस्य स्वाश्रयात्मसंयुक्तवस्तुनः सर्वस्यावभासिविज्ञानं स्यात् प्रदीपादिषु क्रियाप्रकाशगुणयोः स्वाश्रयसंयुक्ते वस्तुन्यनुरूपप्रकाशाद्यतिशयहेतुत्वात् । अदृष्टेन क्वचिदेव विषये ज्ञानं नियम्यत इति चेत् । न । प्रदीपादिषु यावत्संयुक्तवस्त्ववभासिष्वदृष्टेन वस्तुसामर्थ्यमतिक्रम्य नियमादर्शनात्सुखदुःखाद्यनिमित्ततृणाद्युपेक्षणीयसर्वविषयावभासेन चादृष्टनियमानुपपत्तेः । जनकमेव ज्ञानं प्रकाशयति न सर्वमिति चेत् न । चक्षुरादिषु प्रकाशप्रसङ्गात् । विषयस्य निरूप्यमाणत्वाद्विषयतया जनकमिति विशेषणायोगात् प्रदीपादिषु च प्रकाशगुणस्य स्वाश्रयसंयुक्ताजनकविषयस्यापि प्रकाशकत्वदर्शनात् । क्रियारूपे विज्ञाने समानमेतदिष्वादिव्यापाराणामनुद्दिष्टेऽपि विषये स्वाश्रयसंयोगे सत्यतिशयहेतुत्वदर्शनात् । निरवयवत्वादात्मनो न सर्वसंयोग इति चेत् । न किंचिदपि प्रकाशेत । क्रियागुणयोः स्वाश्रयमतिलङ्घ्यान्यत्र संसर्गायोगादसंसर्गादसंस्पृष्टे चातिशयायोगात् ।

अथ शरीरावच्छिन्नात्मप्रदेशसमवाय्येव ज्ञानं न यावदात्मसमवायीति मतम् । तर्हि सावयवत्वमात्मनः न व्यवहितविषयावभासश्च स्यात् आत्माश्रयप्रकाशस्य विषयेणासंसर्गात् न चाश्रयातिलङ्घनं क्रियादेरित्युक्तम् । नचानाश्रयात्मप्रदेशसंबन्धादवभासः सर्वस्यावभासप्रसङ्गात् । नन्वभिचारकर्म्म स्वाश्रयात्मप्रदेशासंयुक्ते पुरुषान्तरे ऽनर्थं जनयति तद्वदिहापि स्यात् । नैतत्सारम् । दृष्टक्रियासामर्थ्यादेवादृष्टेप्युभयात्मप्रदेशसंयुक्तस्य देवतात्मनो वेश्वरस्य वा हेत्वन्तरस्य वा ऽनुमीयमानत्वात् । नचात्मसंयुक्तमनःसंस्पृष्टेन्द्रियसंयुक्तविषये ऽतिशयः पुरुषाश्रयज्ञानादुपपद्यते । विषयसंयुक्तेपि वस्त्वन्तरे प्रकाशत इतिव्यवहारातिशयप्रसङ्गात् । पूर्वभावित्वाच्च संयोगप्रवाहस्य ज्ञानवता विषयस्य वर्त्तमानसंयोगप्रवाहाभावादेवमणुदेह * परिमाणात्मवादेपि तुल्यो दोषः । तस्मान्नसर्ववादिनां प्रमाणादिव्यवहारसम्भव इति ।

* परिणामेति तु १ पु·

२४ २४ सत्यमस्मत्पक्षे तु कथंचित्सम्भवं प्रदर्शयिष्यामीत्याह तच्चैवंभूतस्याहंकर्त्तु-रिति । इदमंशस्यान्तःकरणस्येत्यर्थः । व्यापार इति परिणामोभिधीयते । प्रकाशस्वभावं सावयवमन्तःकरणमदृष्टेन्द्रियादिसहकृतं ध्रुवादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणमते । तेजसः शीघ्राति * दूरगमनदर्शनात्परिणामद्वारेण कर्तृकर्म्मसम्बन्धोऽवस्थाविशेष इत्याह स च प्राप्नोतिक्रियाहित इति ।

स्यादन्तःकरणस्य स्वपरिणामद्वारेण विषयसंबन्धः आत्मनस्तु विषय-विशेषावभासः कथमिति तदाह तेन विषयविशेषसंबद्धमिति । सर्वेचाविद्यावृ-ततया अनभिव्यक्तस्वभावमपि चैतन्यमन्तःकरणं येनयेनावस्थाविशेषेण विव-र्त्तते तेनतेनाकारेण व्यज्यते ऽयःपिण्डेनेव चतुष्कोणत्वाद्यवस्थाविशेषमापाद्य-मानेन कृशानुरितिविषयसंसृष्टान्तःकरणावच्छिन्नं चैतन्यं तदाकारमवभासत इति भावः । ननु प्रमातृरूपावच्छिन्नं चैतन्यं तद्रूपेण भासतां कथं चैतन्यस्य विषयावच्छेद इति तदाह कर्म्मकारकमपीति । स्वव्यापाराविष्टमिति परिणा-मसंसर्गादापन्नजाड्याभिभवलक्षणयोग्यत्वमुच्यते । अन्तःकरणं हि स्वस्मि-न्निव स्वसंसर्गिण्यपि चैतन्याभिव्यक्तियोग्यतामापादयतीति भावः ।

नन्ववच्छेदकभेदे चित्प्रकाशभेदात्कथं विषयावच्छिन्नानुभवस्य प्रमातृ-रूपावभाससंसर्गः असंसर्गे वा कथं मयेदमवगतमिति प्रमातृप्रमेयसंसर्गावभा-सिसंवेदनं स्यात् अनुभवभेदात् । एकस्मिन्संबन्धावगमे पदार्थयोरवभासायो-गादिति तच्चाह प्रधानक्रियाहितप्रमाचवस्थाविशेषावच्छिन्नाप † रोक्षतैकरूपा-मति । एकामित्यर्थः । परिणामस्योभयसंसर्गाद्व्यञ्जकाभेदेन व्यङ्ग्याविच्छेद इति भावः । ननूभयत्र चैतन्याभिव्यक्त्यविशेषे घटावच्छिन्नानुभवः प्रमाता किं वा ऽन्तःकरणावच्छिन्न इति न विशेषः स्यादिति नेत्याह ततश्चात्मनो ऽन्तःकरणावस्थाविशेषोपाधिजनितो विशेष इति । प्रमातेति वाक्यशेषः । कर्त्तुर्हि प्रमातृता न कर्मणः । तच्चान्तःकरणस्य कर्तृत्वात्तदवच्छिन्नः प्रमाते-त्यर्थः । ननु चैतन्यस्यैकत्वे प्रमातैव फलमिति विरुद्धमापन्नमिति तच्चाह विषयानुभवसंशब्दितो ‡ विषयस्यापरोक्ष्यैकरसः फलमित्यन्तःकरणावच्छि-

„ „ न्नतया प्रमाता विषयावच्छिन्नतया फलमिति भावः ।

* अतिदूरं गमनेति २ पु° । † आपरोक्ष्यतैकरूपामिति १ पु° ।
‡ विषयस्यापारोक्ष्यैकरस इति ३ पु° ।

ननु क्रियाफलयोरन्तःकरणात्मसमवायिनोर्भिन्नाश्रयत्वं घटान्तःकरणविषयतया च भिन्नविषयत्वमिति क्रियाफलयोरेकाश्रयत्वैकविषयत्वनियमविरोध इति नेत्याह इति क्रियैकविषयता फलस्येति ।* विषयतेत्याश्रयस्याप्युपलक्षणम् अन्तःकरणात्मनोरैक्याध्यासेनैकाश्रयत्वम् चैतन्यस्यापि घटावच्छेदादे†कविषयत्वमिति । ननु बुद्धिस्थमर्थं पुरुषश्चेतयत इति सांख्याः । तद्विरुद्धमात्मा स्वचैतन्योपरक्तं चेतयत इति तत्राह एवं चाहं कर्त्तेति । प्रथमं बुद्धिस्थमर्थं तदात्मतामापन्नः पश्चाच्चेतयत इत्यर्थः । उक्तं तावत्सर्वगतस्याप्यात्मनोऽविद्यावृतप्रकाशस्य परिच्छिन्नान्तःकरणपरिणामोपाध्यभिव्यक्त्यपेक्षया विषयविशेषं प्रति प्रमातृत्वम् । २४ २०

ननु केयमभिव्यक्तिः । आवरणाभिभव एव न स्वरूपातिशयः । ननूक्तोपाधिः किंप्रमाणकः उक्तं ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति । धीशब्दवाच्यज्ञानपरिणामवन्मनो विज्ञानं बुद्धिरिति । तदेवमुपाधिवशान्नियमेपि तदज्ञानात् यच्चोदितं चैतन्यस्य सर्वविषयाविशेषित्वात्सर्वमस्य युगपदवभासेतेति तत्परिहरति तत्र च प्रमातुः स्वयंज्योतिष इति । परिणामसंसृष्टकर्म्मोपाधिनियमान्नासंसृष्टेषु चैतन्याभिव्यक्तिरिति नैकस्य प्रमातुः सर्वविषयावभास इति भावः । ननु कर्म्मकारकेपि चैतन्यमभिव्यक्तं चेत् सर्वप्रमातृसाधारणतया सर्वेषामवभासतामिति नेत्याह कर्मकारकमपीति । एतत् प्रमातृचैतन्याभिन्नतयैवाभिव्यक्तं तद्विषयचैतन्यं न प्रमात्रन्तरचैतन्याभेदेनाभिव्यक्तमतो न सर्वेषामवभास्यत्वमित्यर्थः । ,, २४

ननु स्वयंप्रकाशमानस्य प्रदीपादिवत्स्वसंसर्ग्यशेषवस्तुप्रकाशित्वे प्राप्ते कथमहंकारोपाधिनियमः कल्प्यते । न चान्तःकरणपरिणामसंसृष्टविषयादन्यत्र चैतन्यमुपरक्तमपि न प्रकाशयतीति युक्तम् । प्रकाशसंसर्गस्यैव प्रकाशमानताभिधानाद्विषयान्तरेषु चैतन्यस्यासंगितया नोपराग इति चेत् अन्तःकरणेपि तर्ह्यसंगितया नोपराग इति तदुपाधिनापि न किंचिदपि प्रकाशेत । स्यादेतत् । अन्तःकरणावच्छिन्नो हि जीवः प्रतिविम्बस्थानीयः परिच्छिन्नस्तत्संसृष्टमेव विषयं प्रकाशयेद् ब्रह्म तु विम्बस्थानीयं सर्व्वगतत्वात्सर्वमव-

* विषयइति आश्रयस्याप्युपलक्षणमिति ३ पु॰ ।

† एकाभिन्नविषयत्वमिति ३ पु॰ ।

२४ २४ भासयिष्यति । नच ब्रह्मणि *सर्वदर्शित्वं मुखावदातत्ववत् जीवमनुगच्छति । जीवगतं वा किञ्चिज्ज्ञत्वं मुखश्यामत्वादिवन्न ब्रह्मानुगच्छतीति सर्वमुपपन्नमिति । नैतत्सारम् । तथा सति विषयावच्छिन्नचैतन्यस्य ब्रह्मचैतन्यतया ऽहङ्कारावच्छिन्नजीवानुषङ्गाभावात्सर्वज्ञत्वमिव विषयावभासेऽपि जीवस्य न स्यात् । ननु जीवोपाधेरन्तःकरणस्य विषयस्य परस्परान्वयादुभयावच्छिन्नमपि चैतन्यमपि चैतन्यमन्योन्यसंसृष्टमिति युक्तो जीवस्य विषयावभास इति । नैतद्युक्तम् । तथा सति सर्वगतेन ब्रह्मणा नित्यसंसृष्टमन्तःकरणमिति तदुपाधौ जीवब्रह्मचैतन्याभेदाभिव्यक्तेर्ब्रह्मसार्वज्ञ्यं जीवस्य नित्यवत्प्रकाशेत ।

अथ मतम् । सर्वगतमपि चैतन्यमविद्यावृतत्वात् स्वयमपि तावन्न प्रकाशेत । नच स्वयमप्रकाशमानश्चैतन्यप्रकाशः प्रदीपवत् प्रकाश्यमवभासयितुं क्षमः । अङ्गुलिमात्रेणादित्यवत् परिछिन्नेनाप्यज्ञानेन सर्वगतमपि चैतन्यं तिरोधीयते तत्रान्तःकरणोपरागेणावरणाभिभवात्तत्रैवाभिव्यक्तम् चैतन्यं किंचिदेव प्रकाशयतीति । तदपि न युक्तम् । कार्यभूतेनान्तःकरणेन स्वोपादानाज्ञानाभिभवायोगात् । तस्मान्न युक्तं किंचिदज्ञत्वे ऽहंकारोपाधिवर्णनमिति । अत्रोच्यते । युक्त एवायमुपाधिः सर्वगतस्यापि जीवस्यासङ्गितया सर्वेणासंयोगात्प्रकाशस्य च संयुक्तवस्त्ववभासित्ववद् ब्रह्म तु सर्वोपादानतया स्वात्माभिन्नं जगदात्मानमिवावभासयति नतु जीवो ऽनुपादानत्वात् । कथं पुनः सर्ववस्तुदेशाव्यवहिततया सर्वगतस्य विषयान्तरेष्वसङ्गितयाऽसंसृष्टस्यान्तःकरणसंसर्गिता संभवेत् ।

उच्यते । यथा गोत्वादयो जातिविशेषाः केसरादिमद्व्यक्त्यन्तरप्रदेशसंनिहिता अपि स्वभावविशेषादश्वादिव्यक्त्यऽसङ्गितया तैरनभिव्यक्ता अपि सास्नादिमत्पिण्डसङ्गितया ऽभिव्यज्यन्ते । यथा वा प्रदीपप्रभावाय्वाकाशरसगन्धादिप्रदेशव्यापिन्यपि स्वभावविशेषात्तानि न† प्रकाशयन्ती रूपसंसर्गितया तदेव प्रकाशयति एवं चैतन्यमपि स्वभावविशेषादन्तःकरणे संसृज्यते नान्यत्रेति युक्तम् । यथा च केवलेन वह्निना न दाह्यमपि तृणादि अयःपिण्डसमारूढेन दह्यते तथाऽहंकारसमारूढेनात्मना केवलेनाप्रकाश्या अपि विषयाः प्रकाश्यन्त इति युक्तमहंकारोपाधिवर्णनम् ॥

---

* सर्वदर्शितत्वमिति १ पु· । † प्रकाशयति-इति ३ पु· ।

अथवा सोपाधिकत्वाज्जीवः परिच्छिन्नो न सर्वमवभासयति । जीवावच्छेदनिमित्तान्तःकरणपरिणामसंसर्गकृताभिव्यक्तित्वाद्विषयावच्छिन्नचैतन्यस्य जीवचैतन्यता च न विरुध्यते । ब्रह्माकारपरिणतान्तःकरणसंसर्गाभावाच्च न नित्यवद् ब्रह्मणः प्रकाशप्रसङ्गः । नचान्तःकरणस्वरूपमात्रसंसर्गिणोऽभिव्यक्तिरङ्गीकृता तद्गतधर्मादीनामपि प्रसङ्गात् । जीवाकाराहंवृत्तिपरिणतान्तःकरणेन च जीवोऽभिव्यज्यते । *अन्यथाऽसुषुप्तेः । अतः परिच्छिन्नत्वा† न्न सर्वविषयावभासिता । अथवाऽज्ञानावृतःस्वयमप्रकाशमानतया विविधविषयानऽनवभासयन्नन्तःकरणोपरागादावरणतिरोधाने तत्रैवा‡भिव्यक्तस्तत्संसृष्टमेव विषयमवभासयति । दृष्टं च वृश्चिकवृत्तादिकार्यस्य गोमयमृदादिकारणस्वभावतिरोधायकत्वमिति सिद्धैवात्मनि प्रमातृत्वादिव्यवस्थेति ।

विषयस्य चैतन्यविवर्तत्वात्तदभिन्नमपि चैतन्यमहमवभासैकरूपमुक्तम् । तत्रापसिद्धान्तप्रसङ्गं चोदयति ननु नीलादिविषयोऽपि चेदिति । यत्किंचित्साम्यादपसिद्धान्ते सर्वसिद्धान्तसंकरः स्यात् । अस्ति चात्र महान्सिद्धान्तभेदः । क्षणिकाद्विज्ञानादभेदेनार्थक्रियासामर्थ्यसत्त्वशून्यं विषयमाहुर्विज्ञानवादिनः । तत्त्वदर्शिनस्त्वद्वितीयात्संवेदनादभेदेऽपि विषयस्य भेदेनाप्यर्थक्रियासामर्थ्यसत्त्वं स्थायित्वं चाबाधितमस्तीति वदन्ति । तत्र कथं सिद्धान्तसंकर इति वदितुं संवेदनैक्यं दर्शयति मैवम्|| परस्परव्यावृत्ताविति । अस्त्वेकरूपता प्रत्यभिज्ञानाद्भेदोऽपि घटसंवित्पटसंविदित्यवभासत इति तत्राह विच्छेदावभासेऽपीति । स्वरूपप्रत्यभिज्ञा परोपाधिविच्छेदेन न बाध्यत इति भावः । नन्वेकत्वेऽपि संविदां विषयाभेदः किं न स्यादिति तत्राह यदि स्यादिति । अनुवृत्तस्य व्यावृत्तान्नाभेदोऽनुवृत्तत्वादाकाशवटादिवदित्यनुमानमुक्तम् । इदानीं प्रत्यक्षोऽपि विषयसंविद्भेद इत्याह किंच तैरपीति । नीलात्मकसंविदिति नीलमेवोच्यते । युगपद्विषयविषयिसंविद्द्वयानभ्युपगमात् । प्रत्यगवभास इति । अहं संवेदनमात्रमहं नीलं पश्यामीति कर्तृकर्मतया भेदः प्रत्यक्ष इत्यर्थः । अत्र विज्ञानवादी चोदयति नैतद् द्वयोरपीति । अयं भावः । ,,

(margin: २५ १ ... ८)

* अन्यथा जीवस्य सुषुप्तेरिति २ पु० । † न जीवस्य सर्वविषयेति २ पु० ।
‡ अभिव्यक्तं तत्संसृष्टेति १ पु०, अभिव्यक्तस्तत्संसृष्टेति २ पु० ।
§ सामर्थ्यमस्त्वीति ३ पु० । || परस्पराव्यावृत्ताविति १ पु० ।

संविदोन्यच्चेन्नीलं न तत्संवेदने ऽवभासेत । भासते चेत्सर्वं किमिति नाव-
भासते विशेषसंबन्धाभावात् । नीलस्य संविदो जनकता विशेषसंबन्ध इति
चेन्न इन्द्रियस्यापि विषयताप्रसङ्गात् । तस्मात्स्वाभाविकासाधारणाभेदसंबन्धा-
देव विज्ञाने नीलमवभासत इति । सिद्धान्ती तु भेदावभासेपि प्रत्यक्षो युक्त्या
२५ ८ कथमपहूयत इत्याह कथं पुनरिदमहं जानामीति । विज्ञानवादी तु नैत-
त्त्रयमेकसंवित्प्रतिभासि किंतु संवित्त्रयमेतत्क्रमवर्तीति परिहरति नायं तद-
वभास इति । क्रमवर्तित्वे अन्यसंवित्काले अन्यन्नावभासेत इदं तु त्रितयं
युगपत्प्रत्यक्षमेवावभासते ततः प्रत्यक्षविरुद्धः क्रम इत्याह सिद्धान्ती
कथं पुनस्तेष्विति । आह विज्ञानवादी तद्वासनासमेतसमनन्तरप्रत्ययसंमुत्थ-
मिति । अहमित्यहंकल्पनोपारूढं कदाचिद्विज्ञानं भवत्यनन्तरं चेदमिति *
विषयविकल्पितं विज्ञानं भवति । ते एव विज्ञाने वासनासजातीयज्ञानस्य
पूर्ववृत्तसजातीयज्ञानमेव वासना नान्यः संस्कार इत्युक्तम् । तच्च वासनाद्व-
यसमेताज्जानामीति क्रियाविकल्पप्रत्ययात्कारणत्रितयानुरूपेणाहमिदं जाना-
मीति विषयक्रियाहंकल्पनाविकल्पितं आकारमेकं विज्ञानमुत्पद्यत इत्याह
सिद्धान्ती किं पुनरेवमिति । नहि केवलमहमिति चेदमिति वा जाना-
मीति वा प्रत्यया दृष्टाः । किंतु प्रथमत एव प्रत्ययोहमिदं जानामीति कर्तृ-
कर्म्मानुभवात्मको दृष्टः । तस्माद्यथाप्रतिभासमेवाहमिति विज्ञानाद्भिन्नमर्थ-
क्रियासमर्थं नीलवस्त्वनुमन्तव्यमिति भावः । सत्यम् नानुभावमाश्रित्य संवेद-
नादभिन्नं नीलं ब्रूमः किंतु † विज्ञानेन नीलस्य प्रतिभासान्यथानुपपत्त्या ।
कथम् । स्थायित्वे हि विज्ञानविषययोः क्रियानिमित्तासाधारणपरस्परसंबन्धा-
दसाधारणो विषयावभासः स्यात् । क्षणिकस्य त्वागन्तुकसंबन्धाभावे यदि
स्वाभाविकाभेदसंबन्धोपि न स्यात् । तच्च चैतन्येनासंसृष्टस्य प्रतिभास एव
न स्यात् । अतः प्रतिभासानुपपत्तिरभेदं साधयतीति विज्ञानवादी वर्ण-
,, १३ यति क्षणविध्वंसिनः क्रियानुपपत्तेरिति । तच्च प्रत्यक्षेण विज्ञानानां क्षणि-
कत्वमुच्यते किंवा ऽनुमानेन । ननु प्रत्यक्षेण तथा हि । वर्त्तमानाव-
भासिज्ञानं स्वात्मनो ऽवर्त्तमानाद्व्यावृत्तिमपि गमयति । नीलज्ञानमिवानी-

---

* विषयकल्पितमिति २ पु० । † विज्ञाने नीलस्येति २ पु० ।

लव्यावृत्तं नीलमतो वर्तमानक्षणमात्रं विज्ञानं * प्रत्यक्षमिति । न तावत्प्रत्यक्षेण विज्ञानभेदावभास इत्याह यद्येवमहमिति संविद इति । २५ १५

ननु सत्यपि भेदावभासे ऽतिसादृश्यान्न स्पष्टमवभासत इति शङ्कते अथात्यन्तसादृश्यादिति । कोऽयमभिप्राय: । यदि तावत्संविदोऽन्यो भेदो ज्ञानान्तरगम्यश्च सादृश्यदोषात् स्पष्टं नावभासत इत्यभिप्राय: । तदा धर्मिप्रतियोगिसंविदो: संविदन्तराविषयत्वात् न तयोर्भेदग्रहणं स्यात् विषयत्वे वा धर्म्मिप्रतियोगिभेदाख्यत्रितयमपि भेदसंवेदने कल्पितं तदभिन्नं वा स्यात् । अथ संवित्स्वरूपमेव भेद: संवेदनमेव तत् ज्ञानमिति तत्राह संविदोऽपि चेदिति । अपि च ऐक्यप्रतिभासे सादृश्यकल्पनं प्रमाणविरुद्धं भिन्नयोरैक्यभ्रमश्च सादृश्यकल्पनायां प्रमाणं तदभावाच्च न सादृश्यसिद्धिरित्याह अपि च तद्रूपप्रतिभास इति । नन्वैक्यावभासस्य व्यामोहत्वान्न सादृश्यकल्पना प्रमाणविरुद्धा ऐक्यभ्रमश्च भिन्नेषु सादृश्यमन्तरेणानुपपन्न इत्यर्थापत्तिमूला च सादृश्यकल्पना अत: सिद्धं सादृश्यमित्याह पूर्ववादी तद्रूपप्रतीतेर्व्यामोहत्वादिति । मैवम् ऐक्यभ्रमसादृश्यसिद्ध्योरितिरेतराश्रयत्वादिति परिहरति नेतरेतराश्रयत्वादिति । नन्वैक्यप्रतिभासप्रामाण्यं न स्वत: सिद्ध्यति किंतु सादृश्यस्य निर्मूलत्वप्रमाणविरुद्धत्वापेक्षया सादृश्यस्य च निर्मूलत्वप्रमाणविरुद्धत्वमैक्यप्रतिभासस्य प्रामाण्यापेक्षयेति तुल्यं तवापीतरेतराश्रयत्वमिति चोदयति स्यादेतत् अव्यामोहेऽपीति । ऐक्यप्रतिभासो न सादृश्याभावापेक्ष: किंतु स्वत एव २६ २ प्रमाणमिति परिहरति नैतत्स्वारसिकमिति । ननु सादृश्यमपि स्वत एव सिद्धमित्याशङ्क्याह न तु सादृश्यकल्पना स्वत इति । कुतस्तर्हि सादृश्यसिद्धिरित्यत आह अप्रामाण्यपूर्विकेति । ऐक्यभ्रमो हि भिन्नेषु सादृश्यं कल्पयतीति भाव: । ,, ८

ननु केयं प्रत्यभिज्ञा नाम । यत्सामर्थ्यबलात्संविदैक्यं प्रतीयते । पूर्वानुभवसंस्कारसहितादिदानींतनवस्तुप्रमितिकारणाज्जातमेकस्य कालद्वयसंबन्ध † विषयकं प्रत्यक्षज्ञानं प्रत्यभिज्ञेति चेत् । न तर्ह्यात्मनि सा संभवति । कथम् । विज्ञानस्वभावस्य ह्यात्मन: स्थायित्वे स्वयंप्रकाशस्य ज्ञानान्तरागम्यत्वात्तद्विनाशसंस्काराभावात्स्वरूपस्य चाविनाशादविनाशिन: संस्काराभा-

---

* प्रत्यक्षमित्यर्थ इति ३ पु० । † कप्रत्ययो नास्ति २, ३ पु० ।

चात्स्वयंप्रकाशस्येदानींतनस्वरूपव्यतिरिक्तप्रमाणकारणाभावाच्च न प्रत्यभिज्ञा-कारणं तावदात्मनि संभवति । नच स्वरूपज्ञानमेव प्रत्यभिज्ञा । तस्य प्रदीपप्रभावद्वर्त्तमानप्रकाशिनः पूर्वापरपरामर्शात्मकतायोगात् । सोहमिति च विषयाकाराभ्युपगमे स इत्यहमिति *चाकारभेदेन विषयभेदाज्ज्ञानभेद-सिद्धेः । तस्मान्नात्मनि प्रत्यभिज्ञेति युक्त्या व्यामोहत्वसिद्धिरिति ।

अत्रोच्यते । अन्तःकरणविशिष्टे तावदात्मनि प्रत्यभिज्ञानं ब्रूमः न निष्कलङ्कात्मस्वरूपमात्रे तस्य मोक्षावस्थायिनः शास्त्रैकगम्यत्वात् संसारास्था-यामन्तःकरणविशिष्टरूपानपायात् तस्यैव प्रत्यभिज्ञया स्थायित्वाभिधानात् तत्र चान्तःकरणजन्याहंप्रत्ययाधीनत्वाद्विशिष्टात्माभिव्यक्तेः । पूर्वकालविशिष्टात्मा-नुभवनिमित्ताहंवृत्तिसंस्कारसहित†मन्तःकरणमेवेदानींतनात्माभिव्यक्तिनिमित्तं सत् पूर्वापरकालविशिष्टात्मविषयं प्रत्यभिज्ञानमुत्पादयति । ननु पूर्वापराभि-ज्ञयोरविषयतयाभिव्यक्तस्यात्मनः कथं प्रत्यभिज्ञाविषयत्वमिति । नैष दोषः । यथा संवेदनस्य स्वसंविदितरूपस्यापि कालान्तरे स्वसंस्कारजनितस्मृतिवि-षयत्वं तद्वदिहाप्यभिज्ञायामविषयस्यापि प्रत्यभिज्ञाविषयत्वं न विरुध्यते ।

ननु स्वयंप्रकाशस्य विषयतैवानुपपन्ना । मैवम् । देशकालान्तःकरण-विशिष्टतया विषयतोपपत्तेः । यथा धर्म्मस्यागमैक‡समधिगम्यस्यापीदानीं फलदानायोन्मुखीभावादिलक्षणधर्म्मविशिष्टतया वर्त्तमानफलोदयलिङ्गादिगम्य-त्वम् तद्वत् । नन्वेकस्यैवात्मनः प्रत्यभिज्ञायां कथं कर्तृकर्म्मतया युगपद्विरुद्ध-रूपद्वयान्वयः । ननु सर्ववादिनां देहव्यतिरिक्ताद्यनुमानविषयतया कर्तृकर्म्म-भावः संप्रतिपन्नः । तन्न । अनुमानादौ विषयस्य कारकताऽभावात् आकार-मात्रतया विषयत्वात् तत्र कर्तृतैवात्मनो न कर्म्मता । प्रत्यक्षे तु पुनर्विष-यस्यापि स्वविषयज्ञानजनकतया कर्म्मकारकत्वात्प्राप्तैवात्मनो युगपदेकस्यां क्रियायां विरुद्धरूपद्वयापत्तिरिति ।

उच्यते । अन्तःकरणविशिष्टतयात्मनो ज्ञातृत्वं पूर्वापरकालविशिष्ट-तया च ज्ञेयत्वमित्युपाधिभेदादविरोध इति । सोहमिति च प्रत्यभिज्ञायाः स्वानुभवसिद्धत्वाद्यथाकथंचिन्निमित्तं कल्पयितव्यम् । व्यवहाराविसंवादाद्वा-

* चकारस्थाने वाकारो २ पु॰ । † अन्तष्करणेति १ पु॰ । ‡ समाधिगम्यस्येति १ पु॰ ।

न्तित्वायोगात्। नच सोऽहमित्याकारभेदादर्थभेदेन ज्ञानभेदो युक्तः। विज्ञानं क्षणिकमित्याकारभेदेनार्थभेदाद्विज्ञानस्य क्षणिकताभावप्रसङ्गात्। सत्यम्। विज्ञाने क्षणिकत्वादिधर्म्मोपरागो विकल्पव्यवहारमात्रं न सत्यतोऽस्तीति चेत्तथा स्थायित्वादिव्यवहाराश्च कालादिधर्मोपाधित्वाद्विज्ञाने विकल्पव्यवहारा इत्यविशेषः। इयांस्तु विशेषः। सति काले स्थायित्वादिविकल्पप्रत्ययाः सोऽहमित्याद्यनुभवसिद्धा व्यवहाराऽविसंवादिनोर्थक्रियासामर्थ्याश्च दृश्यन्ते न तथा क्षणिकत्वादिव्यवहारा इति।

अत्र प्राभाकरा मन्यन्ते। नैवम्प्रत्यभिज्ञायां विषयत्वेनायमात्मा सिद्ध्यति किंत्वाश्रयत्वेनेति। तदयुक्तम्। पूर्वापरकालविशिष्टस्य आत्मनः क्षणमात्रवृत्तिप्रत्यभिज्ञानाश्रयत्वायोगात्तदाश्रयतया स्थायित्वसिद्ध्यभावात्। ननु पूर्वकालसंवेदनमिदानीमनुस्मर्य्यमाणं स्वाश्रयं तदानीन्तनमात्मानं साधयति स्मृतिश्च स्वाश्रयतयेदानींतनमात्मानं साधयतीति कालद्वयविशिष्टात्मसिद्धिरिति। नैतत्सारम्। स्मृतिपूर्वानुभावौ हि तत्तत्कालमात्मानं साधयतः अभिज्ञाप्रत्यक्षद्वयवदेकस्य कालद्वयसंबन्धः केन सिद्ध्यतीति वक्तव्यम्। पूर्वापरसंविद्द्वयमेव साधयतीति चेत्। न। घटादिष्वभिज्ञाद्वयव्यतिरेकेण प्रत्य*भिज्ञापादनात्। किंच। न तावत्स्वयमेव संविद्द्वयं साधयत्येकैकस्य कालद्वयवदात्माश्रयत्वाभावात्। न च संभूय पूर्वापरसंविद्द्वयं तद्वन्तमात्मानं साधयत्यन्योन्यस्यान्योन्यसंविद्विशिष्टात्मश्रयत्वाभावात् अथ संविद्द्वयमेव पूर्वापरसंविद्द्वयाश्रयात्मैक†त्वविषयसंविदन्तरमुत्पादयति सिद्धं तर्हि प्रत्यभिज्ञानमात्मविषयम्। किंच। अनुभूतं मयेत्याश्रयविशिष्टपूर्वसंविदनुस्मृतेः स्वानुभवसिद्धत्वात्स्मर्यमाणतयैवेदानीं पूर्वानुभूतात्मसिद्धिर्न्न पूर्वसंवेदनाश्रयतया तस्याऽविद्यमानस्येदानीमसाधकत्वात्। स्वयंप्रकाशमानं हि संवेदनमात्माश्रयं साधयति न स्मृतिविषयतया परप्रकाश्यम् अन्यथा धर्मादीनामपि परतःसिद्धानां स्वाश्रयात्मसाधकत्वप्रसङ्गात्। तस्मात्सिद्धमात्मनि प्रत्यभिज्ञानमिति।

स्यात्तर्ह्यनुमानात्क्षणिकत्वमिति घटादौ साधयति अथान्ते क्षयदर्शनादिति। घटस्य विनाशान्तरपूर्वक्षणविशिष्टसत्त्वमन्त इत्युच्यते। तस्य स्वस- २६ ०

* प्रत्यभिज्ञोपपादनादिति प्रागभूत्तत्र प्रत्यभिज्ञापादानादिति शोधितं २ पु०।

† त्वप्रत्ययो नास्ति ३ पु०।

त्तात्क्षणादुत्तरक्षणे विनाशो दृष्टः । तत्रान्त्यक्षणावच्छिन्नघटसत्त्वात्पूर्वपूर्वक्षणावच्छिन्नघटसत्त्वान्याऽऽदिरित्युच्यन्ते । तान्यपि स्वसत्ताक्षणादुत्तरक्षणे विनाशव्याप्तानि घटसत्त्वादन्त्यक्षणावच्छिन्नघटसत्त्ववदित्यनुमानम् । ततश्च सतोऽनन्तरं विनाशात्क्षणिकत्वसिद्धिरिति । क्षणिकेष्वैक्यं सादृश्यनिबन्धनमिति ।

२६ ८ तत्र प्रत्यनुमानमाह आदौ सत्तादर्शनादित्यादि । घटसत्तावच्छेदकाः* क्षणा उच्यन्ते । अन्त इति । विनाशावच्छेदकत्वेनाभिमताः क्षणास्तत्रान्त्यक्षणाः सर्वे घटसत्तया व्याप्ता इति साध्यते कालत्वात्सत्तावच्छेदककालवदिति प्रत्यनुमानम् । अभावानुभवविरुद्धमन्ते सत्तानुमानमिति चोदयति क्षयानुभवेति । तर्ह्यन्त्यक्षणात्पूर्वक्षणावच्छिन्नघटसत्त्वानामनन्तरक्षयानुमानमपि प्रत्यभिज्ञाविरुद्धमिति परिहरतीहापीति । क्षयानुभवो ऽभिज्ञानुमानं बाधते न प्रत्यभिज्ञानुमानाद् दुर्बलेति नेत्याह नह्युभयोरिति ।

सर्वे भावाः क्षणिका अर्थक्रियाकारित्वात् । यदक्षणिकं न तदर्थक्रियाकारि यथा शशविषाणमित्युनुमानान्तरं दर्शयितुं स्थायिनो ऽर्थक्रियानुपपत्तिमाह अथ मन्येत योसौ स्थिरत्वाभिमत इत्यादिना । ननु स्थिरस्यैव निमित्तसंयोगादन्यथाभूतस्य क्रियापूर्वकं कार्य्यमुत्पादयितुं सामर्थ्यं न क्षणिकस्येति सिद्धान्ती चोदयति कथमयोग इति । इत्थमयोग इत्यादिः परिहारः । क्रमेणेति । अनेकानि कार्याणि सातत्येन कुर्यादित्यर्थः । एकं वाऽनेकं वा कार्यं सकृत्कृत्वो† परमत इत्याह यौगपद्येनेति । क्रमपक्षं दूषयति न तावदिति । अनेकानि कार्याणि कर्तुं समर्थश्चेत्पुष्कलकारणस्य भावादेकस्यानेककार्यदर्शनाच्च सकृदेव कुर्यादिति भावः । द्वितीयं पक्षं दूषयति नापि यौगपद्येनेति । अर्थक्रियाकारित्वलक्षणत्वात्सत्त्वस्येति भावः । अतः सकृत्कर्तुः कालान्तरे पुनः कर्तृत्वे निमित्ताभावादकर्तृत्वे वा सत्त्वात्सकृदेव सत्त्वमित्युपसंहरति अतोर्थक्रियाकारित्वादेवेति ।

सिद्धान्ती तु स्थायिनः सकृदेव कार्यं कृत्वा तूष्णींभूतस्यापि नासत्त्वप्राप्तिः सत्त्वस्यार्थक्रियाकारित्वलक्षणत्वाभावादित्युपपादयति अथ केयमित्यादिना । तत्राह स्वविषयज्ञानजननमिति । युक्तं बाह्यार्थानामेतादृशं सत्त्वं

,, १८

---

* क्षणादुच्यन्ते—इति २ पु॰, क्षणा उच्यन्त इति उपकल्पितमस्ति ३ पु॰ ।

† उपरमत इति १, २ पुस्तकेष्वस्ति, उपरमतीति तु न्याय्यम्॰ उपरमते इत्याहेत्युपकल्पितं ३ पु॰ ।

विज्ञानानां तु स्वविषयविज्ञानाजनकत्वान्न सत्त्वलक्षणमिति दूषयति प्राप्तं २६ १८
तर्हि सर्वासामिति । नन्वेकसन्तानज्ञानानामन्योन्यविषयविषयिताभावेपि
पुरुषान्तरज्ञानस्य विषयतया पुरुषान्तरज्ञानं जनकमित्यर्थक्रियालाभः संवि-
दामिति नेत्याह न सन्तानान्तरेपीति । पुरुषान्तरज्ञानं प्रति पुरुषान्तरज्ञान-
स्याप्रत्यक्षत्वादनुमेयत्वादिति भावः । अनुमानज्ञानविषयत्वात्तर्हि सन्ताना-
न्तरज्ञानस्य सन्तानान्तरज्ञानं जनकमिति नेत्याह अनुमानेपीति । प्रत्यक्ष-
मेवार्थजन्यं नानुमानादीति ते मतमित्यर्थः । ननु सर्वं संवेदनजातं सर्वज्ञ-
ज्ञानस्य विषयतया जनकं भवति तस्य सर्वविषयप्रत्यक्षत्वादित्यत आह * न
सार्वज्ञेपीति । साक्षादिति । सहविज्ञानोपप्लवैरव्यवधानेन सर्वज्ञज्ञानो-
परक्ततया तदभेदेनेत्यर्थः । † तत्र हेतुः । संसारसंविदेकरूपत्वप्रसङ्गादिति ।
संविद्विषययोरभेदोपगमात्सांसारिकज्ञानैः सोपप्लवैः सर्वज्ञज्ञानं दूषितं स्यादि-
ति भावः । ननु सर्वोपप्लवोपरक्तमपि तत्त्वज्ञानेन बाधितत्वान्न दोषमावहति ।
न तावत्तदेव ज्ञानं सोपप्लवं बाधते । प्राप्तिबाधयोरेकस्मिन् क्षणे ऽनुपपत्तेः ।
ज्ञानान्तरस्य तु न पूर्वज्ञानोपप्लवो विषयो येन तदनुवादेन बाधः स्याद्विषयत्वे
च बाधकज्ञानेप्युपप्लवानामभेदः स्यात् । तर्हि विनैवोपप्लवैः ‡ सार्वज्ञे
ज्ञाने विज्ञानान्युपरज्यन्त इति नेत्याह अतद्रूपत्व इति । सर्वज्ञस्य लौकिको-
पप्लवा § नवभासनादुपदेशायोग इति भावः ।

अथ न स्वविषयज्ञानजननमर्थक्रिया किंतु सजातीयलक्षणान्तरोत्पाद
इति चोदयति अथेति । उत्तरमाह चरमक्षणस्यासल्लक्षणत्वप्रसङ्ग इति ।
अयमर्थः । अहमिति संतानपतितानि विज्ञानानि स्थायित्वानुसंधानकल्प- ,, २४
नाभ्यां रागादिदोषैर्विषयैश्चोपप्लुतानि पूर्वपूर्वसजातीयविषयविज्ञानलक्षणसं-
स्कारेभ्य उत्तरोत्तराण्युत्पद्यन्ते । तत्र सर्वमिदं क्षणिकमिति भावनया ऽना-
दित्वकल्पना निवर्तते । स्वलक्षणभावनया द्रव्यगुणशब्दकर्मविशेषणविशे-
ष्यकल्पना विनश्यति । दुःखमिति भावनया रागादिदोषप्रवृत्तिसुखदुःखो-
पप्लवाः क्षीयन्ते । शून्यमिति भावनया विषयोपप्लवविगमः । ततश्च भाव-
नाभेदैश्चतुर्भिश्चतुर्विधसंस्कारविरोधिभिश्चतुर्विधोपप्लवे क्रमेण मन्दीकृते

---

* न सर्वज्ञेऽपीति २ पु॰, न सर्वज्ञज्ञाने—इति ३ पु॰ । † अत्र हेतुरिति ३ पु॰ ।
‡ ज्ञाने—इति नास्ति २ पु॰ । § अनवभासत्वादिति ३ पु॰ ।

भावनाप्रकर्षपर्य्यन्तात्समनन्तरप्रत्ययात्सर्वोपप्लवविरहिविज्ञानमुत्पद्यते । तत्संसारसन्तानस्यान्त्यत्वाच्चरममिति तस्य कार्यान्तराभावादऽसत्त्वप्रसङ्गात्क्रमेण सर्वमसदेव पूर्वं स्यादिति । ननु चरमक्षणोऽपि स्वसन्तानज्ञानान्त-

२६ २४ राभावेऽपि सर्वज्ञज्ञानं विषयतया जनयतीति नेत्याह नच * सार्वज्ञज्ञानजननेति । तुल्यस्वभावयोः कार्यकारणभाव एकैकसन्तानता नाम चरमक्षणसर्वज्ञज्ञानयोर्विशुद्धतया तुल्यस्वभावयोः । कार्यकारणभावादवि-

२७ १ च्छिन्नः संतान इति भावः । मा भूत्संतानविच्छेद इति नेत्याह मुक्त्यभावप्रसङ्गादिति । संतानविच्छेदो हि मुक्तिरभिप्रेतेति भावः । अथ सर्वज्ञसंतानस्य तुल्यसंतानस्य तुल्यस्वभावतया जनकत्वात्तत्संतानैक्यमेव मुक्तिरिति । तर्हि विषयतया जनकत्वमेव नास्तीत्याह नच संवित्संविदो विषय इति । प्रत्यक्षत्वं विषयशब्देनोच्यते पुरुषान्तरसंवेदनस्यानुमेयत्वात् । अथवा । प्रत्यक्षस्यैव संवेदनस्य देहान्तरसंबन्ध एवानुमीयत इति सर्वप्रमाणाविषयः संविदिति । अथवा संविदात्मना भेदाभावादित्ययमर्थः । संवित्संविदन्तरान्न संविदाकारेण भिद्यते प्रतियोगिनो ऽसंवित्त्वप्रसङ्गादेका संवित्स्यात् । असंविदाकारेण भेदेऽपि संविदेकैव स्यादिति न संविदां विषयविषयिभाव इति ।

किंचेति । अर्थक्रिया नाम कारणसत्त्वे हेतुः प्रतीतिनिमित्तं वेति विकल्प्य हेतुत्वे दूषणमाह स्वकारणान्निष्पन्नस्येति । कार्यात्प्रागेव कारणस्य निष्पन्नत्वादित्यर्थः । नच निष्पन्नमप्यर्थक्रियातः पूर्वमसदिति शक्यं वक्तुम् । शशविषाणतुल्यत्वेनाकरणत्वप्रसङ्गात् । प्रतीतिपक्षे अनवस्थादूषणमाह तच तस्या अन्यत इति । ननु कार्यमर्थक्रिया नाम ज्ञानानि च पूर्वेषामुत्तरोत्तराणि कार्य्याणि स्वयंसिद्धानीति न प्रतीत्यनवस्थेति चोदयति ननु स्वज्ञानार्थक्रियाया इति । तर्हि कार्यकारणभूतानां ज्ञानानां स्वयंसिद्धत्वान्नार्थक्रियासत्तावगतिनिमित्तमित्याह न तर्ह्यर्थक्रियात इति । मा भूत्कारणभूतं ज्ञानं कार्यभूतज्ञानाधीनप्रकाशं स्वयंप्रभत्वात् तथापि स्वयं स्वेनैवावभासत इति

„ ६ स्वयमेव स्वस्यार्थक्रियेति नेत्याह नहि स्वरूपमेवेति । तस्मान्नार्थक्रियाकारित्वलक्षणं सत्त्वं किंतु स्वाभाविकमिति सकृत्कार्यं कृत्वा तूष्णींभूतस्यापि स्थायिनः सत्त्वं न विरुध्यत इति ।

---

* सर्वज्ञज्ञानेति ३ पु० ।

इदानीं क्रमेणापि कार्य्यं कृत्वा सत्त्वं न विरुध्यत इत्याह यत्पुनः २१ ६
क्रमेणेति । शक्तस्यापि सहकारिसन्निधानविशेषक्रमापेक्षया कार्यक्रमो युज्यत
इत्याह स्थायिनोपीति । शक्तस्य सहकारिकारणापेक्षामपलपति अथ कारण-
स्येति । गूढाभिसन्धिरुत्तरमाह अकारणस्यापि नतरामिति । मा भूत्तर्हि
शक्तस्याशक्तस्य च सहकार्यपेक्षेति तत्राह असहकारि विश्वं स्यादिति ।
शक्तस्यैव सहकार्यपेक्षया कार्यकरत्वानुभवविरोध इति भावः । अशक्ता एव
पदार्थाः सामग्रीलक्षणकारणोत्पत्तौ परस्परमपेक्षन्त इति नानुभवविरोध
इत्याशङ्कते अथाकारणं कारणोत्पत्तय इति । कार्ये प्रत्यऽशक्ता अपि पदार्थाः
सामग्रीकारणं प्रति शक्ता वा न वेति * विकल्पयति अथ तत्कारणस्येति । उभ-
यत्र दूषणं कारणं † चेदिति अथ नापेक्षेत्युक्तार्थम् । ननु शक्ताऽशक्तयोरपेक्षा-
भावे कथं ‡ सहकार्यनुभवः कथ्यते । ननु कार्यस्याप्यसत्त्वाविशेषात्सर्वस्मा-
ज्जन्म किं न स्यात् । कारणस्य वा विशेषसंबन्धहीनस्य सर्वस्य जनकता किं न
स्यादित्यव्यवस्थायां कथं कार्यकारणभावमात्रं त्वया व्यवस्थाप्यते । § अथा-
ऽन्वयव्यतिरेकसामर्थ्यात्कार्यकारणनियम इति । सहकारिणोपि तथेत्याह
तस्माद्यथैव हेतोरिति । क्व तर्हि सहकार्युपयोग इति तत्र मतान्तरमुपन्यस्य
पूर्वत्रादिनं दूषयति यस्तु मन्यते सहकारिजनितविशेष इति । यः सहकारि-
णमपेक्षते स स्वात्मनि विशेषोत्पत्तौ शक्तो वा न वेति विकल्प्याऽहेतुत्वे दूष-
णमाह विशेषोत्पत्ताविति । नह्यशक्तं सहकारिसहस्रसन्निधानेपि किंचित्कुर्वद्दृ-
ष्टमित्यर्थः । हेतुत्वे दूषणमाह अथ हेतुरिति । तत्र प्रथमविशेषस्य विशेषा-
न्तरापेक्षया ऽनवस्थाप्रसङ्गदोषपरिहाराय किंचिदेव सहकारिभिः कारणे विशेषो
जन्यते कार्य्यजननाय । क्वचित्तु कारणे विशेषजन्मानपेक्षमेव सहकारिभिः
कार्य्यं जन्यत इत्यव्यवस्थां स्वयमेव दर्शयति अथ मतं न सर्वं कार्यमिति ।
तावत्येवाभवदुच्छूनता विशेषे सत्येवेत्यर्थः । तर्हि शक्तिमता कारणेन
स्वात्मन्यनुपकुर्वन्नपि सहकार्यपेक्ष्यत इति त्वयैव स्वपक्षो निरस्त इति
परिहरत्यनुपकुर्वन्नपि तर्हीति । आह साक्षात्क्षणिकवादी नानुपकुर्वन्निति । ,, २३
सर्वस्य सहकारित्वप्रसङ्गादित्यर्थः । क्व तर्ह्युपकरोति तदाह स्वरूपे तु

* विकल्पयति इत्यर्थेति १ पु० ।
† चेदित्यादि । अर्थेति ३ पु० ।
‡ सहकार्यानुभाव इति १ पु० ।
§ यथान्वयेति १ पु० ।

२८ १ नोपकरोतीति । कार्यं हि सहकारिणा जायमानमुपक्रियत इत्यर्थः । तर्हि क्षणिकस्येव नित्यस्यापि कार्यस्योपकाराय सहकार्यपेक्षा न विरुध्यत इति परिहरति नित्योपि तर्ह्यनाधेयातिशय इति । तदेव प्रपञ्चयति * यथैव क्षणिको भाव इति । सामग्रीसाध्यत्वादिति बहुकारकव्यापारसाध्यत्वादित्यर्थः । † पुनश्चोपकार्य्यमेवोपकारकं सहकारिणमपेक्षते नानुपकार्यं कारणमित्याशङ्कते अथ मतं क्षणिकोपि नैवापेक्षत इति । यदन्यसंनिधौ भवति तदपेक्षत इति सम्बन्धः । नित्येपि तर्हि कारणे कार्यमेव सहकारिणमपेक्ष्य क्रमेण भविष्यतीति नेत्याह नित्यस्य तु जनकस्येति । सहकारिणां कारणस्य च सर्वदा भावात्सर्वदाकार्य्यजननादित्यर्थः । ननु सहकारिणामपि संनिधानमपेक्षत इति नेत्याह को हेतुरिति । कारणसहकारिणोरपि सम्बन्धः कार्यं चेत्सोपि कारणसहकारिभ्यां सदा भवतीति कार्यजन्म सदा भवेदित्यर्थः । ननु क्षणिकादपि सहकारि सव्यपेक्षात्किमिति सदा कार्यं न जायते विशेषवति सत्ताक्षणे कार्यजन्माभावात् पूर्वोत्तरकालयोर्विशेषाभावादिति तत्राह ‡ क्षणिकस्तु यो जनक इति ।

,, १० इदमयुक्तं वर्त्तत इति । अयमर्थः । न तावदग्निस्वलक्षणस्यैव धूमस्वलक्षणं प्रति कारणत्वमवगन्तुं शक्यम् । क्षणमात्रापवर्गिणोरन्वयव्यतिरेकबुद्धिद्वयकालावस्थानायोगात् । किंत्वग्निधूमसन्तानयोरन्वयव्यतिरेकाभ्यामग्निस्वलक्षणानि धूमस्वलक्षणानां कारणानीति सामान्योपाधौ प्रमातव्यम् । तत्राग्निस्वलक्षणानां विशेषाभावादङ्गारगतादप्यग्निस्वलक्षणाद् धूमजन्म किं न स्यात् । § काष्ठस्वलक्षणाभावादिति चेत् न । तस्यापि स्वसंताने विद्यमानत्वात् । अग्निकाष्ठस्वलक्षणसंसर्गापेक्षा विद्यत इति चेन्न । संतानद्वयनित्यत्वे तन्निमित्तसंनिधानस्यापि सदा प्रसङ्गात् । तत्राप्यन्यापेक्षेति चेदिहापि ‖ नित्येऽपि सहकारिसंनिधानस्य कदाचिद्भावान्नित्यवत्कार्यजननप्रसङ्गो न युक्तो वर्त्तत इति । ननु सहकारिसन्निधानादेव कार्योदयनियमेपि धूमकाष्ठसन्तानयोर्नोपकार्योपकारकसम्बन्ध इत्याह किमत्रायुक्तमिति । परिहरति सति नियम इति । सहकारिणां कार्येणान्वयव्यतिरेकनियमेपि नोप-

* तथैवेति क्वचित् । † पुनश्चोपकार्यं कार्यमेवेति २, ३ पु॰ ।
‡ क्षणिकास्तु-इति १, २ पु॰ । § काष्ठलक्षणेति १ पु॰ । ‖ अपिशब्दो नास्ति २ पु॰ ।

कार्य्योपकारकसम्बन्ध इत्युक्तिर्विरुद्धेत्यर्थः। नन्वन्वयव्यतिरेकनियमस्योपकार्य्योपकसम्बन्धव्याप्तिः क्व दृष्टेति दृष्टा कार्यकारणयोरित्याह तथाहि यः २८ ११ कश्चिदिति। उपकार्योपकारकसम्बन्धाभावे जलधूमयोरिवान्वयव्यतिरेकनियमानुपपत्तेरिति भावः।

ननु ययोरेवाग्निधूमस्वलक्षणयोः कार्यकारणभावो दृष्टस्तयोरेवान्वयव्यतिरेकनियमो नाग्निधूमसंतानयोः येनाविशेषात्सर्ववह्निस्वलक्षणेषु धूमस्वलक्षणकारणेषु काष्ठसंयोगासंयोगाभ्यां धूमभावाभावदर्शनेन सहकारिकारणेष्वन्वयव्यतिरेकनियमो ऽपेक्षालक्षणोपकार्य्योपकारकसम्बन्धश्च स्यात् तस्मान्न कार्यकारणस्वलक्षणादन्यत्र सामान्योपाधौ कार्यकारणयोग्यताप्राप्तिरिति तत्राह एवं हि कार्यकारणभावसिद्धिरि* त्यादिना। सामान्योपाधौ हि व्यवहारो दृश्यत इति भावः। अस्तु सामान्योपाधौ जन्यजनकयोग्यतानियमस्ततः किमिति तत्राह तच्च न † यदि क्षणिकं कारणमिति। तदेव साधयति तथाहि हेतुपरम्पराप्रतिबन्धादिति। कारणस्य स्वयंशक्तित्वादित्यर्थः। नापि कार्य्यं सहकारिणमपेक्षते इति। कारणादेव जननादित्यर्थः। ननु वह्निस्वलक्षणाद्धूमजन्मनि काष्ठसंसर्गस्यापि संनिधानात्तदपि सहकारि कल्प्यत इति। तन्न। प्रागपि हि कृशानुस्वलक्षणस्य धूमजननयोग्यस्य काष्ठसंसर्गाभावात्तदहेतुत्वलक्षणस्य व्यतिरेकस्य दर्शनमन्तरेणान्वयमात्रान्न सहकारित्वसिद्धिरित्याह काकतालीयमुच्यत इति। तर्हि मा भूत्सहकार्यपेक्षेति कारणमपि मा भूदित्याह तथाच कार्यकारणव्यवहारा इति। तस्मात्क्षणिकनित्ययोः सहकारिसन्निधानक्रमस्याविशेषात्कारणत्वमविशिष्टमित्युपसंहरति तस्मात्क्षणिकस्यापीति। अयमर्थः। यथैकस्मादग्नि- ,, १८ स्वलक्षणात्समानदेशे वह्निरुपरिष्टाद्धूमो ऽधस्ताद्भस्म पुरुषे विज्ञानमिति सहकारिभेदाद्देशभेदेनैकस्मादनेकानि कार्याण्युत्पद्यन्ते। तथैकस्मात्कारणात्कालभेदेन सहकारिभेदात्कार्यभेदा इति।

तस्मात्सत्यपि ‡ विषयाभेदे ऽहंसंवेदनस्य तथाप्रतिभासमद्वितीया §-त्संवेदनाद्भेदेनाप्यर्थक्रियासमर्थतया ‖ ऽवस्थायित्वमस्तीति महदेतात्सद्धान्त-

---

* इत्यादीति ३ पु०। † न यदक्षणिकमिति १ पु० तत्र यदि नेति ३ पु०।
‡ विषयभेदे-इति १ पु०। § संवेदनादिति नास्ति १ पु०।
‖ अवशब्दो नास्ति २ पु०।

८२ २१ वैलक्षण्यमस्तीत्युपसंहरति तदेवमहङ्कर्तुः सदैकरूपावगमादिति । यत्किञ्चित्साम्येन च सिद्धान्तसाङ्कर्ये मन्त्रार्थवादेतिहासपुराणप्रामाण्यानभ्युपगमाद्देवतास्वर्गेश्वरमोक्षानभ्युपगमात्क्षणिकप्रमाणसंबन्धस्य क्षणिकस्यैव सत्त्वाभ्युपगमाल्लोकायतबौद्धांशद्वयपरिणतः प्राभाकरो भेदाभेदाभ्युपगमात्मन्त्राद्यप्रामाण्याच्च लोकायतक्षपणकांशद्वयपरिणतो वार्तिककारः । यस्तु कश्चित् क्षपणकपादावनतशिरोबिम्बस्तत्त्वदर्शनतन्निष्ठपरमहसंप्रद्वेषतीव्रवायुविक्षिप्तविवेकविज्ञानलवः स्वपरपक्षगुणदोषविभागदूरीकृतविज्ञानो भेदाभेदाभ्यां बन्धमोक्षादिसङ्करमिव कुर्वन् दुर्ज्जनरमणीयां वाचं जल्पति सुगतविज्ञानवादसमानो ऽयं वेदान्तवाद इति स सम्प्रदायश्रवणपरिचयशून्यतया दर्शनविवेकमनवबुद्ध्यमानो नापवाद्यः किन्तु शोचनीय इत्युपेक्षणीयो विद्वद्भिः ।

ननु विज्ञाने प्रपञ्चस्य कल्पितत्वं तव तस्य च तुल्यम् । सत्यम् । विज्ञाने * प्रतिभास्यमानत्वं च तव तस्य च तुल्यमिति विज्ञानवादस्त्वदीयं दर्शनं किं न स्यात् । सत्यपि प्रतिभास्यत्वे सत्यमिथ्याविभागो ऽस्तीति चेत् । इहापि सत्यपि मिथ्यात्वे अर्थक्रिया † समर्थसत्त्वासत्त्वविभागोस्त्येव । कल्पितत्वेनेयं विभागसिद्धिरिति चेत् । प्रतिभास्यत्वेपि न सत्यमिथ्याविभागसिद्धिः । दृश्यते विभाग इति चेत् । तदेव विभागदर्शनं मम किं न स्यात् । घटादेर्मिथ्यात्वमप्रसिद्धमिति चेत् न । प्रतिभास्यसत्यत्वस्याप्यसिद्धत्वाच्छुक्तिरजतघटयोरर्थक्रियाभावाभावसत्त्वासत्त्वविभागदर्शनाच्च । दृश्यते च माया प्रीतिद्वेषादिकारणम् श्रूयते च देवासुरसंग्रामादिषु मायाविनिर्मितशस्त्रभेदानां दाहच्छेदभेदादिहेतुत्वमित्यलमतिप्रसङ्गेन ।

ननु विषयस्यापि चैतन्यव्यञ्जकतया परोक्षत्वे ऽनुमानादिष्वपि तथा

" २४ स्यान्न तथा दृश्यत इति चोदयति ननु नानुमेयादिष्विति । अन्तःकरणपरिणामसंसर्गकृतयोग्यत्वापत्त्या विषयस्य चैतन्यं प्रति व्यञ्जकत्वं तदनुमेयादिष्ववर्तमानत्वसम्भवात्तेषु वर्तमानधर्मद्वयोत्पत्त्ययोगान्नापरोक्षतेति परिहरति नानुमेयादिष्वपरोक्षत्वमिति । ‡ अव्यापृतत्वादिति । कारकत्वव्यञ्जकत्वधर्मद्वयानुपपत्तेरित्यर्थः । नहि विनष्टे घटे ऽग्निसंयोगाल्लौहित्यमुत्पद्यते ।

---

* प्रतिसमानत्वमिति ३ पु॰ । † सामर्थ्येति १ पु॰ । ‡ अव्यावृतत्वादिति १ पु॰ ।

नन्वतीतानागताकारेण वृष्ट्यादेर्वर्त्तमानत्वमपि दृश्यते। न। वृष्टेर्युगपदतीतत्ववर्त्तमानत्वायोगात्। अतीततधर्मस्यापि वर्त्तमानकालो घटादेरिव नान्वयितया ऽवच्छेदकः किन्तु प्रतियोगितयेति घटादिवन्न वर्त्तमानतासिद्धिः। किंच। अतीताकारेण वर्त्तमानस्य नेदानींतनक्रियागुणाश्रयत्वमतीताकारतया वर्त्तमानस्य घटस्य वर्त्तमानलौहित्यगमनाश्रयत्वादर्शनात् अतो नानुमेयादिषु काकरत्वव्यञ्जकत्वे युक्ते। प्रत्यक्षे पुनरिन्द्रियसंयोगस्य गुणस्य गुणिव्यापारमन्तरेणाऽव्यापाराद्युक्तो विषयस्य सामग्र्यन्तर्भाव इति। कथं तर्हि विषयव्यापाराभावे ऽनुमेयादिषु विषयाकारता विज्ञानस्येति। तदाह लिङ्गादीनामेवेति। २९ १

नन्वतीते वर्त्तमानविषयत्वजन्मवत्कारकत्वमपि स्यादिति नेत्याह प्रमेयस्य चेति। विषयत्वं नामानुमेयेषु सुषुप्तिव्यावृत्तिः। सा चाभाव * स्तद्धर्म्मो न भवति। विज्ञानाकारतापि न विषयव्यापारः किंतु ज्ञानस्यैवेति नातीतेर्थे क्रियाकारित्वम्। जानातेश्चानुमेयादिषु फलापेक्षया सकर्मकत्वं न कर्मकारकापेक्षयेति। सकर्मकत्वे च प्रत्यक्षवदपरोक्षतापि स्यादिति॥

अर्थमुपवर्ण्येदानीमस्मत्प्रत्ययविषयत्वादिति भाष्यं योजयति तदेवमहंकारग्रन्थिरिति। ननु शारीरः क्षेत्रज्ञ इत्यादिबहुविधोपाधिसंसृष्टमात्मानं वर्णयति श्रुतिस्तत्र कथमहंकारस्यैवोपाधितेति चोदिते अहंकारतत्संस्कारोपरक्ताज्ञानोपाधिकस्यैवात्मनोऽवस्थात्रयेपि बाह्यबहुविधोपाध्यन्तरनिमित्तोयं व्यपदेश इत्याह स पुनरेवंभूतो जाग्रत्स्वप्नयोरिति। गतागतमाचरन्नित्यनेकोपाध्युपराग उच्यते। सविकल्पके ऽधिष्ठाने सविकल्पाध्यास † इति वदतो ऽस्मत्प्रत्ययविषयत्वादिति परिहार उक्तः इदानीं निर्विकल्पकेपि सविकल्पाध्यासः संभवतीत्याह किंच न केवलमिति। ननु नित्यानुमेय आत्मा कथमपरोक्षतया सिद्ध इति नेत्याह नह्यात्मन्यप्रसिद्ध इति। स्वपरयोर्मयेदं ,, १३ विदितमिति कर्तृकर्मसंबन्धावगमशून्यत्वाविशेषात्। अनुभवनिमित्तज्ञानाश्रयत्वमन्यतरस्य विशेष इति चेत् न। आत्मपदार्थानुभवाभावे संबन्धावगमायोगादनुभवसंबन्धाभावाऽविशेषे ऽन्यतराश्रयज्ञानानुमानायोगादिति भावः। अस्तु तर्हि विषयानुभवाश्रयतया सिद्धिरिति नेत्याह नत्र संवेद्याज्ञानेनेति।

* तद्वर्त्तमानं भवतीति १ पु॰। † इतिवादत इति १ पु॰।

८६ स्वयंप्रकाशतया ऽपरोक्षत्वमात्मनः । आकाशस्याप्रत्यक्षप्रत्यक्षत्वमतानि ।

ननु संवित्स्वोपाधिं साधयति न कर्मकारकमिति । न तावदाश्रयत्व-मुपाधिः विषये ऽभावात् । आश्रयविषयत्वमुपाधिरिति चेत् । किं विषयत्वं नाम । संवित्प्रयुक्तव्यवहारयोग्यत्वमिति चेन्न । आत्मापि तर्हि विषयः स्यात् । आश्रयव्यतिरिक्तत्वे सति संविद्भावनेकत्वमिति चेच्चक्षुषेपि प्रसङ्गः । न चा-श्रयव्यतिरिक्तत्वे सति तत्प्रयुक्तव्यवहारयोग्यो विषयः । संवित्तदाश्रयसंबन्ध-स्यापि विषयत्वप्रसङ्गात् । नच संबन्धो नास्ति न वक्तुम् । तस्मात्संप्रयोक्ता-दिवस्त्वेवावभास्यत इत्यस्तु तर्ह्यात्मविषयज्ञानान्तरादिति नेत्याह नच

२९ १४ ज्ञानान्तरेणेति । कुतः तच्च ज्ञानान्तरं विषयानुभवसमकालं वा भिन्नकालं वा । विभिन्नकालत्वे दूषणमाह भिन्नकालत्व इति । एककालत्वमिति चेत्तत्राह नह्येककालमिति । निरवयस्य युगपदेकदेशे वा भिन्नदेशे वा परिणामद्वया-योगादित्यर्थः । एकस्य युगपत्सामस्त्येन परिस्पन्दद्वयमनुपपन्नं परिणामस्तु संभवतीत्याह मा भूदिति । परिणामद्वयमपि कार्त्स्न्येन युगपन्न संभवतीत्याह मैवमिति । यौवनस्थाविरयोः कृत्स्नशरीरवर्तित्वादिति । * नच भागेन परि-णामो निरवयवत्वादिति भावः । तस्मादिति परिशेषात्स्वयंप्रकाशतया ऽपरोक्ष-त्वोपसंहारः । अध्यस्यमानेनैकेन्द्रियग्राह्यत्वमधिष्ठानस्य वक्तव्यं नापरोक्षतामा-त्रेण कृत्यमित्याशङ्क्याकाशदृष्टान्त इति भाष्यतात्पर्य्यमाह ननु न क्वचिदिति ।

अत्र शब्दस्य बाह्यैकेन्द्रियग्राह्यत्वाद्गन्धवद् द्रव्यव्यतिरेकेणोपलब्धेः संभवाद्विशेषगुणत्वे वक्तव्ये स्पर्शादिगुणचतुष्टयसहवृत्तित्वाभावाद्बाह्येन्द्रिय-ग्राह्यत्वाद्दिक्कालमनसां विशेषगुणशून्यत्वाद्भूतचतुष्टयात्मदिगादिव्यतिरिक्तद्र-व्यस्यैव विशेषगुणः शब्दः तद्गुणश्चाकाश इति वैशेषिकादयो ऽनुमि-मते । † बौद्धलौकायताश्चानुपलब्धिलिङ्गकं मूर्त्तद्रव्याभावमात्रमाकाशमनु-मिमते । प्राभाकराणां त्वस्त्येवाकाशोनुपलब्धिलिङ्गो मूर्त्तद्रव्याभावमात्रत्वा-द्भा ‡ वान्तरस्यैव चाभावत्वात् । क्षपणकवार्त्तिककारीयास्तु चाक्षुषमाकाश-मिच्छन्ति । तथा सति स्पर्शित्वमपि स्यात् । अस्त्विति चेन्न । रूपस्पर्शवत्येव द्रव्ये चक्षुरादिप्रवृत्तिनियमात् । चक्षुःप्रसारणस्य चाकाशानुमानलिङ्गदर्शनेन्य-

,, २४ थासिद्धत्वात् । तस्मादप्रत्यक्षेपि ह्याकाश इत्युक्तम् । § अथवेति साक्षिवेद्यतया

* न च भोगेनेति २, ३ पु॰ ।

† बौद्धलोकायताश्चेति ३ पु॰ ।

‡ भावान्तरस्य चाभावत्वादिति ३ पु॰ ।

§ अथ चेति १ पु॰ ।

मनोमात्रगम्यतया वा अपरोक्ष इत्यर्थः । इन्द्रनीलमिव नीलमित्यर्थः । एवमविरुद्ध इत्यादिः स्पष्टार्थः । प्रतिपन्नोपाधौ निरस्यमानमर्थमविद्यान्वय- ३० २ व्यतिरेकाभ्यामविद्यां मन्यन्त इत्यर्थः ।

न केवलमविद्यान्वयव्यतिरेकसामर्थ्यादविद्योपादानतया ऽविद्यात्वं किंतु विद्याविपरीतत्वाच्चेत्याह तद्विवेकेनेति । नन्वविद्यामुपवर्ण्य तस्याज्ञाननिवर्त्यत्वप्रदर्शनेनाध्यासनिवृत्तिसिद्धेः किमध्यासोपवर्णनेनेति चोदयति यद्येवमध्यास इति प्रक्रम्येति । पुरुषाकाङ्क्षया ऽनर्थनिवृत्तिविषयत्वादनर्थस्यैवाविद्यात्वेन ज्ञाननिवर्त्यत्वं वक्तव्यमिति परिहरति नैतत्सारमिति । अनर्थस्यैवाविद्यात्मकत्वे तदाश्रये विषये वा वस्तुतस्तन्निमित्तगुणदोषाभावात् । ज्ञानेन सर्वानर्थनिवृत्तिः फलिष्यति तत्फलवचनमुत्तरभाष्यमित्याह तदेतदाह यत्र यदध्यास इति । अविद्याध्यासविषयत्वप्रयुक्तस्तावद्गुणदोषाभावः सिद्धः अत्राध्यासपरिणामितयाश्रयत्वप्रयुक्तदोषगुणाभावः कथ्यते । कथम् अनाद्यविद्याध्यासस्य नित्यचैतन्यावभासत्वान्न तत्राध्यासपरिणामः । कादाचित्काध्यासपरिणामस्याविद्योपादानत्वादविद्यासंभेदादात्माश्रयत्वादसिद्धिरिति । प्रतिज्ञेति । सूत्रकारस्य ज्ञानेन बन्धनिवृत्तेरर्था * त्सूत्रणमुच्यते ।

वृत्तसंकीर्तनपूर्वकमुत्तरभाष्यस्य तात्पर्यमाह एवं तावद्युष्मदस्मदित्यादिनेति । प्रमातृप्रमाणप्रमेयकर्तृकर्मकार्यभोक्तृभोगभोग्यस्वलक्षणस्य व्यवहारत्रयस्य शरीरेन्द्रियादिष्वहंममाध्यासपुरःसरत्वं प्रत्यक्षमिति प्रत्यक्षोपन्यासः कृतः । ननु विधिप्रतिषेधपराणि शास्त्राणीत्येव वक्तव्यम् तन्निष्ठत्वात्सकलशास्त्रस्य किमिदं मोक्षपराणीति तत्राह मोक्षपरत्वं चेति । कथं पुनरित्यादिभाष्यस्याध्यासोपादानं व्यवहारत्रितयमित्यत्र प्रमाणान्तरप्रश्नविषयत्वं दर्शयति बाढमुक्तलक्षणाविद्येति । आदिना कथं पुनरित्याक्षेपार्थं दर्शयति ३१ ३ प्रमातारमाश्रयन्तीति । अविद्याध्यासपरिनिष्पन्नाहंकारात्मसंपिण्डितोपादानत्वे प्रमाणानां प्रामाण्यमेव न सिद्ध्यतीत्यस्मिन्नर्थे भाष्यं योजयति अथवा कथमविद्यावद्विषयाणीति । अविद्यावदुपादानत्वे का प्रामाण्यानुपपत्तिरिति तदाह † अविद्यावद्विषयत्व इति । उच्यते देहेन्द्रियादिष्वित्यादिपरिहारभाष्यम- ,, ६

* सूत्रमुच्यते इति १ पु० । † मतुब्नास्ति २ पु० ।

३१ ९ वतारयति वस्तुसंग्रहवाक्यमस्यैव प्रपञ्च इति । व्यवहारत्रितयमध्यासोपादानमित्यत्रार्थापत्तिव्यतिरेक्यनुमानप्रदर्शनाय * यत्र यत्राध्यासाभावः संपतिपन्नस्तत्र व्यवहाराभावो दृष्ट इति व्यतिरेकव्याप्तिं भाष्यार्थं दर्शयति नहि देहेन्द्रियादिष्विति । देहादिशब्दार्थं विभागेनाध्यासं च कथयति यतो देहे ऽहमभिमान इत्यादिना । प्रमाणान्तरप्रदर्शनाय व्यवहारत्रयमूलाध्यासे प्रत्यक्षमुक्तमनुवदति सर्वो हि मनुष्यो ऽहमिति । अत्रायं प्रयोगः देवदत्तस्य जाग्रत्स्वप्नकालौ तस्यैव कर्तुः करणभूतदेहेन्द्रियादिष्वहंममाध्यासपुरःसरप्रमातृत्वादिव्यवहारवन्तौ तस्यैव सुषुप्तिकालादन्यकालत्वात् । यः कालस्तथाविधव्यवहारवान्न भवति न स तस्यैव सुषुप्तिकालादन्यकालो यथा तस्यैव सुषुप्तिकाल इति । व्यवहारत्रितयं वा दर्शिताध्यासोपादानमन्तरेणानुपपन्नमध्यासाभावे व्यवहारादर्शनात्सुषुप्त इत्यर्थापत्तिः ।

ननु कर्तृकरणयोः संबन्धमात्रं व्यवहारे ऽपेक्ष्यते न तादात्म्यसंबन्ध इति तत्र परिशेषानुमानार्थापत्तिसिद्धये संबन्धान्तराणि व्यावर्त्तयति न तावत्स्वस्वामिसंबन्ध इति । आह न स्वत्वेन संबन्धेनेति । सुषुप्तेपि तस्य भावादित्यभ्युच्चयः । इच्छानुविधायित्वमेव व्यवहारनिमित्तं तदभावात्सुषुप्ते व्यवहारविपर्यय इति चोदयति अपर आहात्मेच्छानुविधायित्वमिति । अस्त्विच्छामात्रेण विनियोज्यविनियोजकसंबन्धस्ततः किमिति तत्राह तत आत्मन इति । नन्वेतत्संबन्धमूलो व्यवहार इति किमत्र प्रमाणमित्यत आह तथाचोत्तिष्ठामीति । ननु भृत्यादयोपि तदिच्छानुविधायिनस्तच्छरीरेणापि व्यवहारः स्यादिति नेत्याह न च भृत्यादिषु तदस्तीति । उच्यते । यदीच्छानुविधानयोग्यतामात्रं संबन्धः सुषुप्तेपि तदस्तीति तत्रापि व्यवहारः स्यात् । अथेच्छयानुविधीयमानत्वं संबन्धः अर्थान्तरे तदभावात्प्रमातृत्वादिव्यवहारो न स्यात् अथ दृश्यते अयं संबन्धो व्यवहारमूलमिति नेत्याह नैतत्संविदि बहुमानवतो युक्तमिति । नच गौणत्वं मुख्यानुभवविरोधादित्याह गौणीत्यादिना । इच्छाप्यध्यासमूलैवेत्याह अपि चेच्छापि परिणामविशेष इति अन्तःकरणाध्यासमूलैवेच्छेति प्रत्यक्षमाह तथा चानुभव इति । नचात्मा-

२ १ नात्मनोः संयोगसमवायौ व्यवहारनिमित्तम् सुषुप्तेपि भावात् । भोक्तृभोग्यान्वय-

* यत्रपदं सकृदेव १, ३ पु० ।

स्वकर्म्मारभ्यत्वस्वेन्द्रियाधिष्ठितत्वादीनां भोगाद्यध्याससापेक्षत्वाद्भृत्यादिशरीरे च भावात् । अव्यवधानेन भोग्यत्वं मूलसंबन्ध इति चेत् । यदि भोगयोग्यता संबन्धः । सुषुप्तेप्यस्ति । यद्यव्यवधानेन भुज्यमानसंबन्धः । तन्नात्मनः सर्वशरीरदेशकालाव्यवधाने सत्यपेव भोगान्वयस्य मूलसंबन्धान्वेषणा । तस्माद्यत्किंचिदेतत्संबन्धान्तरम् । अतः परिशेषादर्थापत्त्यनुमानाभ्यामध्यास एव व्यवहारमूलं सिद्ध इत्युपसंहरति अतः स्वयमसङ्गस्यापीति । ३२

ननु सर्वशरीरसंनिधानाविशेषे सति आत्मनः कथमस्मिन्नेव शरीरेऽध्यासनियम इति । अनादिस्तावदविद्याध्यासस्तत्परिणामत्वाल्लिङ्गशरीरे तत्कार्य्यभूतसूक्ष्मशरीरारब्धत्वात्तत्संश्लेषाद्वा स्थूलशरीरेध्यासनियमो न विरुध्यते । ननु प्रमातैव व्यवहाराश्रयो नाध्यास इति न प्रमातृत्वमेवाध्यासपरिनिष्पन्नमित्याह तेन यद्यपीति । यत्त्वध्यासपरिनिष्पन्नाहंकारात्मसंपिण्डितोपादानत्वे कारणदोषादप्रामाण्यं प्रमाणानामिति । तच यदि प्रतिपन्नोपाधौ केनापि प्रमाणेनाबाध्यत्वलक्षणतत्त्वावेदनप्रामाण्यं हानिरुच्यते तदङ्गीकृतमेव । अथा * गमेन परमार्थसत्यत्वांशे बाध्यमानेपि व्यवहारसमर्थवस्त्वङ्गता प्रामाण्यहानिरुच्यते न तच बाधाभावादित्याह तथा निरपेक्षणामिति । विधिमुखोपदर्शितमिति । व्यवहाराङ्गतायां प्रत्यक्षेणाध्यासमूलतायां प्रत्यक्षानुमानार्थापत्तिभिः प्रदर्शितमुभयमित्यर्थः । अर्थक्रियासमर्थत्वाच्च शब्दादिप्रत्यक्षाणामविद्यानिवृत्तिब्रह्मावगतिलक्षणार्थक्रियाहेतुत्वं मिथ्यात्वेपि शब्दादीनां न विरुध्यते ।

नन्वर्थक्रियासंवादात्प्रामाण्यप्रसङ्गः । न । ज्ञानादेवार्थतथात्ववदर्थावगमादेवार्थक्रियासामर्थ्यनिश्चयात् अन्यथा तत्रापि तथात्वज्ञानात्प्रामाण्यप्रसङ्गः । ननु ब्रह्मज्ञानस्याप्यध्यासोपादानत्वान्मिथ्यात्वमापन्नम् । यदि तावत्स्वरूपमिथ्यात्वमुच्यते अङ्गीकृतमेव तत् । अर्थविषयमिथ्यात्वन्न ब्रह्मणि भावात् । प्रपञ्चस्यापि बाधादेव मिथ्यात्वं नाध्यासोपादानज्ञानगम्यत्वात् । ननु दुष्टकारणजन्यस्य विषयतोपि मिथ्यात्वं दृष्टमिति नेत्याह दोषस्त्वागन्तुक इति । प्रमाणकारणेषु सत्सु पश्चाद्भवन् दोषो दोष इत्युच्यते ,,

* अथानुगमेनेति ३ पु॰ ।

स आगन्तुक इत्युक्तः । प्रमाणकारणत्वेनैव यो दोषो व्यवतिष्ठते स न दोषः कारणत्वादविद्याध्यासस्तु चैतन्यस्याद्वितीयावभासं प्रत्येव दोषो न द्वैतावभासं प्रति तस्य कारणत्वाद्यथा काचादिः * चक्षुरादिदोषस्तथाविधपापादृष्टोदयमनुमापयंस्तत्र प्रमाणत्वान्न दोषस्तद्वदित्यर्थः । चैतन्यदोषत्वादेव तत्प्रकाश्याव्यवहार्य्यब्रह्मविपरीतं व्यवहारयोग्यं वस्तु प्रदर्शयति । दोषत्वं चाविद्यायाश्चैतन्यस्य तथावभासविरोधितयान्यथाप्रतिभासनिमित्तत्वात् । कथमागन्तुके दोषबुद्धिर्न नैसर्गिक इत्येतावन्मात्रे

३२ ८ दृष्टान्तमाह नच सर्वसाधारण इति । ननु भाष्यकारेण दोषमात्रमेव विषयतोपि ज्ञानमिथ्यात्वे हेतुरुक्त इति नेत्याह अनैसर्गिकं च दोषमिति ।

नन्वविवेकिव्यवहारोऽध्यासमूलो भविष्यति न विवेकिव्यवहार इति नेत्याह इतश्चैतदेवं पश्वादिभिश्चेति । † पश्वादिदृष्टान्तेऽध्यासमूलतां व्यवहारस्य दर्शयति तथा च पश्वादय इति । अध्यासानुमाने हेतुभूतव्यवहारस्य विवेकिष्विपि पक्षधर्मतामाह तदेकरूपयोगक्षेमा इति । तत्र हेतुदर्शनात् हेतुमन्तमध्यासमनुमिमीते अतस्तदेकरूपकार्यदर्शनादिति । पश्वादिदृष्टान्तेप्यध्याससद्भावे प्रमाणं चोदयति ननु पश्वादीनामिति । पदार्थद्वयदर्शने सति प्रत्यक्षानुमानागमैर्भेदाप्रतिपत्तावध्यासः परिशिष्यत इत्याह प्रौढमतिभ्य इति । स्वाभाविकप्रत्यक्षेण विवेकदर्शने दोषमाह एवमेवेति । नन्वनुमानागमविचारहीनानामप्यदृष्टार्थं व्यवहारदर्शनात्प्रत्यक्षेणैव विवेको गृह्यते इति चोदयति ननु गोपालाङ्गनादय इति । न प्रत्यक्षेण विवेकग्रहः किन्त्वाप्तवचनादित्याह न तदभिज्ञव्यवहार इति । प्रत्यक्षश्चेद्विविवेको विशेषतः प्रत्यगात्मानं प्रतिपद्येरन्नित्याह तथा च ते पृष्टा इति । अतो निगमनवाक्यमुपपन्नमित्याह तस्मा-

३३ १ द्युक्तमुक्तमिति । तस्य व्यवहारस्य काल एव कालो यस्याध्यासस्य सोध्यासस्तत्कालः स च पश्वादिभिर्विवेकिनामपि समान इति ।

३ एवं तावत्प्रत्यक्षादीनीत्युक्तानुवादः । न तेनानध्यस्तात्मभावेनेति भाष्यं पूर्वं न व्याख्यातं तदनुवादग्रन्थे व्याचष्टे तत्रेयमाशङ्का । भवत्वध्यासस्य व्यवहारनिमित्तता तथापि रजतादिवन्निमित्तकारणमेवाध्यासो व्यवहारस्य आत्मैव

---

* चक्षुरादिदोषोऽपि संस्थाविधापापेति २ पु० । † पश्वादिदृष्टान्ताध्यास इति १ पु० ।

केवलस्तूपादानमिति तत्राह न तेनानध्यस्तात्मभावेनासङ्गस्येति। अयमर्थः। ३३ ५
रजताद्यध्यासानां व्यवहाराश्रयकोटिनिक्षिप्तत्वाभावात्तदन्तरेण चात्मनि प्रमातृत्वादिव्यवहारदर्शनान्निमित्तकारणतैव युक्ता। इह तु पुनराश्रयकोटिनिक्षिप्तत्वात्केवलात्मनि सुषुप्ते व्यवहारादर्शनादुपादानकारणस्याभ्यर्हितत्वादन्वयव्यतिरेकवतोऽध्यासस्योपादानकारणत्वमेव व्यवहारं प्रति कल्पयितुं युक्तमिति। शास्त्रं पुनरित्युत्तरभाष्यस्याशङ्का तस्यापीति। तात्पर्याभिधानम् शास्त्रीयेत्विति। अदृष्टार्थप्रवृत्तौ व्यतिरेकज्ञानमभ्यनुजानाति अभ्यनुज्ञामाक्षिपति ननु फलनैयमिकेति। फलचोदना तावत् पश्वादीनामस्मिन्नेव जन्मनि लब्धुं शक्यत्वात्तज्जन्यसुखस्य च स्वर्गस्य पश्वादिचोदनाफलत्वाभावात् ज्योतिष्टोमादिफलत्वोपपत्तेर्निरतिशयप्रीतेरप्यत्रैव सम्भवान्न देहान्तरसम्बन्धिनमात्मानमापादयति। नैयमिकनैमित्तिकचोदना तु सुतराम् फलशून्यत्वात् फलवत्त्वे वा दृष्टेनैवोपभोक्तुं शक्यत्वात्। प्रायश्चित्तस्य तु दोषनिबर्हणफलत्वात्। दोषफलस्यास्मिञ्जन्मनि भोक्तुं शक्यत्वात्। जन्मान्तरस्य * चैतादृशत्वात् फलादर्शने च कारीर्यादिवदङ्गवैकल्य † प्रतिबद्धतया सहकार्य्यभावकल्पनोपपत्तेर्मन्त्रौषधादिसिद्धेनानेनापि शरीरेण स्वर्गादिभोगसम्भवान्न देहव्यतिरेकज्ञानोपयोग इति। तत्र देवताधिकरणन्यायेन मन्त्रादिप्रामाण्याद्विशिष्टदेशकालशरारादिभोग्यं स्वर्गादिफलमङ्गीकृत्येदमुक्तमिति परिहरति सत्यमेवं तथापीति।

ननु मन्त्रादिसमन्वयप्रामाण्यमनपेक्ष्यैव चोदनाभिरेव व्यतिरिक्तात्माक्षेप्यते कर्ममात्रनिर्णयप्रवृत्तेन भाष्यकारेणात्मनो निरूपितत्वादिति तत्राह तथाच विधिश्रुतेति। विधिभिरेवापेक्षितश्चेत्सूत्रेणापि भवितव्यमित्यर्थः। नन्वनपेक्षितस्याऽसूचितस्य च भाष्यकारेण प्रतिपादनमयुक्तमित्याक्षिपति तत्कस्य हेतोरिति। तत्प्रमाणं बादरायणस्या ‡ नपेक्षत्वादितिसूत्रावयवेन मन्त्रादिप्रामाण्यद्वारेण परम्परया सूचित एवात्मेति परिहरति धर्मजिज्ञासेति कार्यार्थविचारं प्रतिज्ञायेति। एवं सूत्रार्थपरम्परया भूतेप्यर्थे प्रामाण्यमाश्रित्य भाष्यकारेणात्मविचारः कृतः न चोदनासामर्थ्यमाश्रित्येति कथमवगम्यत इति तत्राह तथा चोदना हि भूतमिति। तर्हि चोदनापेक्षितत्वात्समन्वयोप्यत्रैव ,, १८

* चस्थाने वाकारः २ पु०। † प्रतिबन्धतयेति १ पु०, प्रतिबद्धतपःसहेति ३ पु०।
‡ अनपेक्षित्वादिति १ पु०।

३३ २० वर्णनीय इति नेत्याह स च स्वरूपावगम इति । ननु धर्मे प्रयतमानेनाप्य-पेक्षितत्वात्कर्त्तव्य एवात्मविचार इति नेत्याह उपयोगाभावादिति । नहि धर्ममात्रं व्यतिरिक्तात्मानमपेक्षते किन्तु फलमपेक्षते फले च न प्रयतते जैमिनिरित्यर्थः । ननु फलमप्यपेक्षते चेत्तत्रापि प्रयत्नो युक्त इति न अन्यथा-सिद्धत्वादित्याह भगवांस्तु पुनरिति । ननु ब्रह्मैव तत्र विचारितं न चोद-नाफलमिति तत्राह तत्र च देहान्तरोपभोग्य इति । तच्च सर्वमिति स्पष्टार्थः ।

ननु समन्वयसामर्थ्यादेव व्यतिरिक्तात्मसिद्धेरात्मविचारः पिष्टपे-षणमिति नेत्याह तत्सिद्धिश्चेति । ननु प्रमाणान्तरयोग्यस्य तदभावविरो-

३४ १ धयोः शब्दस्याप्रामाण्यान्नात्मसिद्धिरिति तत्राह अतस्तत्सिद्धौ पराक्रान्तवां-स्तेनेति । विरोधपरिहारफलेन विचारेणेत्यर्थः । सत्यम् विनापि तेन सिध्येदित्यादिनोक्तमर्थं संक्षेपतो दर्शयत्यस्ति तु तदिति । भूतेर्थे प्रामाण्यम् स्वर्गादावित्यर्थः । न तेन विनेति । व्यतिरिक्तात्मना विनेत्यर्थः । ननु सूत्रकारभाष्यकाराभ्यां देवताधिकरणे मुखत एव देवतादिषु मन्त्रादिप्रामाण्यं नास्तीत्युक्तं तत्कथं सूत्रावयवसामर्थ्यात्प्रामाण्यमनुमतमिति मन्यते । नैष दोषः । तत्र देवताया विग्रहवत्त्वे सन्निपत्योपकारकत्वप्रसङ्गाद्योग्यानुपलब्धि-विरोधात् कर्मणि विरोधप्रसङ्गाभिप्रायेणोक्तत्वात् न प्रामाण्याभिप्रायेण अर्थवा-दलिङ्गानामपि तत्र तत्र द्वादशलक्षण्यां प्रमाणत्वेनोदाह्रियमाणत्वादिति । तथापि न वेदान्तवेद्यमित्यादिभाष्यव्याख्यानं * स्पष्टार्थम् । तत्राशनायाद्यती-तमित्यादिना † कर्त्रन्वयाधिकारान्वयभोक्त्रन्वयाः क्रमेण निरस्यन्ते । प्राक् चे-त्यादिभाष्यव्याख्यानं तत्त्वमसीतिवाक्यार्थावगमादित्यादि ।

कथं पुनर्व्यतिरेकज्ञानेनाध्यासस्य सहवृत्तिः । परोक्षापरोक्षविभागाच्च-न्द्रद्वित्वज्ञानवदविरोध इति केचित् । सूक्ष्मशरीरस्यात्माऽविद्याकार्य्यत्वा-त्कार्यकारणयोर्भेदाभेदभावात् स्थूलशरीरस्याग्न्ययःपिण्डवत्सूक्ष्मशरीरेण संश्ले-षाद्भेदज्ञानेप्यध्यास इत्यपरे । सर्वथापि यावदपरोक्षज्ञानमध्यासो न निवर्त्तत इति भावः । तस्मादित्यध्यासप्रमाणोपसंहारः । नच केवलं प्रत्यक्षानुमाना-

, १३ र्थापत्तिभिरेवाध्याससिद्धिः किन्त्वागमोपि विधेर्बोद्धारमधिकारिणं ब्राह्मणादि-

---

* स्पष्टार्थः-इति १ पु० । † कार्यान्वयेत्यस्य स्थाने कर्त्रन्वयेति ३ पु० कल्पितम् ।

तथाह अतो विषयभोगान्न नियमेन विराग इति ।* ततो न ब्रह्मणि प्रव- ६३ १९
र्तत इत्यर्थ: । विरज्य चान्न चातुर्मास्यादिव्यतिरिक्तविषयाद् विरक्तस्तत्र प्रव-
र्तत इति मा भूद् ब्रह्मण्येव प्रवृत्तिनियमस्तथापि ब्रह्मण्यपि विकल्पेन
प्रवृत्ति: स्यादिति नेत्याह नापि कूटस्थनित्यवस्त्वब्रह्मभेनेति । ननु वि-
रुद्धपदार्थतादात्म्याभावेपि संयोगलक्षणाद् ब्रह्मप्राप्ति: स्यादिति नेत्याह
तदवाप्तिरिति । ननु ब्रह्मानन्दोपभोगो विद्यते । न । स्वाश्रयसुखोपलब्धेरु-
पभोगत्वात् । न च ब्रह्मधर्मस्य सुखस्य जीवाश्रयतयोपलब्धि: संभवति । ननु †
सुखापरोक्षत्वमात्रमुपभोगो न स्वाश्रयसुखापरोक्षत्वम् विशेषणायोगात् तथापि भेदे-
नावस्थाने जीवब्रह्मणो ‡ लौके पुरुषान्तरसुखस्य पुरुषान्तरं प्रत्याऽऽपरोक्ष्याद-
र्शनान्नोपभोग: । नन्वात्मैव सुखसंवित्स्वभावस्तद्रूपावस्थानं च मोक्ष इति ।
न । योग्यानुपलब्धिविरोधात् । नच देवाद्यानन्दपरित्यागेन निरानन्दात्म-
नावस्थानं मोक्षं कश्चित्प्रार्थयते । तस्मान्न § साधनचतुष्टयसंपन्नस्य ब्रह्मणि
प्रवृत्ति: किंतु कर्मफल इत्युपसंहरति अतो ऽजीर्णभयादित्यादिना । तत्रोक्ताश-
ङ्कानिराकरणहेतुवचनं भाष्यमवतारयितुमत:शब्देन साधनचतुष्टयस्य हेतुत्वा-
भिधायिना कथमाशङ्कानिराकरणहेतुभूतं प्रमाणं सूचितमिति पृच्छति कथ-
मिति । तदाह यस्माद्वेद एवाग्निहोत्रादीनामिति । ब्रह्मव्यतिरिक्तपुरुषार्थजा-
तस्य नित्यतां दर्शयतीत्यर्थ: । ननु तद्यथेह ‖ कर्म्मचितो लोक इति सा-
मान्यश्रुतिश्चातुर्मास्यादिविशेषादन्यत्रैव वर्ततामिति चोदयति ¶ ननु पुण्ये-
ति । तत्र तावच्चातुर्मास्यश्रुति: सुकृतस्याक्षय्यत्वमाह न तत्फलस्य । सत्यपि
सुकृते फलस्यानुपभोगवत् क्षयोपपत्ते: । तत्र वाक्यस्य श्रुतार्थं परित्यज्य फला-
क्षयविषयत्वकल्पना प्रमाणविरुद्धेत्याह न तस्य वस्तुबलप्रवृत्तेति । व्याप्तिबल- ६४
प्रवृत्तेत्यर्थ: । अनुमानानुगृहीतश्रुतिविरोध इति योजयितव्यम् । हिरण्यदा
अमृतत्वं भजन्त इति श्रुतिर्वर्तमानापदेशाद् योग्यानुपलब्धिविरुद्धा भवति ।
** भजिष्यन्त इति कल्पना पूर्ववत्प्रमाणविरुद्धा अनुमानानुगृहीतदेवसर्गप्रल-
यश्रुतिविरुद्धा । अपाम सोममिति श्रुति: स य आत्मानमेव लोकमुपास्ते न हा

---

* तत:स्थाने अत: १ पु० । + सुखापरोक्षमात्रं भोग इति १ पु० ।
‡ लौकिकपुरुषान्तरेति १ पु० । § साधनचतुष्टयाद् ब्रह्मणीति ३ पु० ।
‖ कर्मार्जितो लोक इति १ पु० । ¶ ननु पुण्यस्येति १ पु० ।
** भजिष्यन्तीतीति १ पु०, भजन्त इति तु न्याय्यं स्यात्, परं न क्वाप्यस्ति ।

ऽस्य कर्म क्षीयत * इति श्रुतिः न फलस्य नित्यतां दर्शयति। वाक्यस्य फलविषयत्वकल्पना तु पूर्ववत् प्रमाणविरुद्धा अविरोधापेक्षत्वात्कल्पनायाः । किञ्च । यदि † ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धा ऽस्यान्ततः क्षीयत इत्युपक्रम्य ‡ स य आत्मानमेव लोकमुपास्ते न हा ऽस्य कर्म क्षीयत इति वचना § दात्मोपासनात्कर्मण एवापरोक्षानुभवद्वारेणाक्षयाविद्यानिवृत्तिफलत्वान्न। कर्म क्षीयत इत्युपासनाकर्मप्रशंसामात्रमेतदुपादीयते। अनेवंविदः ‖ कर्मक्षयस्य श्रवणादेवंविदानुष्ठितस्याग्निहोत्रादेरेव मोक्षफलतया ऽक्षयो विधीयत इति चेत् । न । लिङ्गस्य नान्यः पन्था विद्यते क्षीयन्ते चास्य कर्माणीत्यादिनिषेधश्रुतिविरोधात् । तस्माद् ब्रह्मव्यतिरिक्त ¶ पुरुषार्थे ऽनित्यतया वैराग्यमुपपन्नमिति । ननु दोषस्य तुल्यत्वान्न ब्रह्मण्यपि प्रवृत्तिकारणमेतदित्युक्तम् तत्राह यत्पुनर्मुमुक्षुत्वाभाव इति । विरुद्धपदार्थतादात्म्यमनुपपन्नमित्यनुमानं ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतिविरुद्धम् । बिम्बप्रतिबिम्बयोरिव तादात्म्यमुक्तम् । नच सुखानुभवाभावादपुरुषार्थ इति युक्तम् । ब्रह्मानन्दानुभावात् । ननु तादात्म्ये ऽहं सुखमित्यनुभवः स्यान्नाहं सुखीति चानुभवो लोके पुरुषार्थ इति । नैष दोषः । सुखापरोक्ष्यमात्रस्य पुरुषार्थत्वात् । ननु स्वाश्रयं सुखमेव पुरुषार्थो न सुखापरोक्ष्यमिति । ** न । उपलब्धानामेव सुखसाधनानां पुरुषार्थत्वादिष्टत्वाविशेषात्सुखमप्युपलभ्यमानमेव पुरुषार्थ इति गम्यते। तत्र साधनपारतन्त्र्यानित्यत्वादिवद्विषयसुखस्यात्मनो भेदोऽप्यानुषङ्गिको †† न भासते ऽहं सुखीति न पुरुषार्थतयेष्यते। ब्रह्मानन्दोऽप्यपरोक्षावभासः पुरुषार्थ इति । ननु नास्ति नित्यं सुखमिति नैयायिकादयः । सत्यम् । नास्त्येव जन्यमपि सुखम् । ननु साधनोपादानाज्जन्यतावगम्यते । न । सिद्धस्यैव सुखस्याभिव्यक्तिहेतुत्वादन्यथा ‡‡ सुखसन्तानजन्मप्रतिभासयोग्यत्वयोः साधनाधीनताकल्पनागौरवात्साध्यान्तराऽशेषतया वा अव्यभिचारित्वेन वा §§ निरुपाधिकप्रेमास्प-

* इति श्रुतिः फलस्य नित्यताव दर्शयतीति १ पु० । † हवाप्यनेवंविदिति ३ पु० ।
‡ स य-इति नास्ति १ पु० । § आत्मोपासनाकर्मण इति १ पु० ।
‖ कर्मक्षयश्रवणादिति १ पु० । ¶ पुरुषार्थेष्विति १ पु० । ** ननूपलब्धानामिति १ पु० ।
†† अयंत्युपसृष्टश्चास्ति २ पु०, अवभासत इत्यस्य स्थाने 'भाषते'-इति पाठः २, ३ पु० ।
‡‡ सुखसत्ताजन्मेति १ पु० । §§ वास्थाने चः ३ पु० ।

दत्वेन * वा सुखदुःखावस्थयोरविशेषेण † सुखस्वरूप आत्मा प्रत्यक्षेणावभासते। यस्मादतःशब्देन शङ्कानिराकरणहेतुसूचनद्वारेण साधनकलापस्य हेतुत्वं समर्थितम्। तस्माद्यथोक्तसाधनेत्युपसंहारः। तत्रेच्छाप्राधान्येन ६४ सूत्रवाक्यार्थो दर्शितः। साधनचतुष्टयस्यावश्यारम्भकत्वं व्यतिरेकमुखेन दर्शितमिदानीमन्वयमुखेन तदेव प्रतिपादयति यतो द्वैतानुषङ्गादित्यादिना। ननु साधनकलापवद्धर्मजिज्ञासापि नियमेनारम्भिकेति नेत्याह एवं सत्यऽर्थादिति। आगमार्थापत्तिभ्यामेव धर्मकलापस्यावश्यारम्भकत्वे ऽसिद्धे तदुभयप्रमाणविकलस्य धर्मविचारस्य न हेतुतेत्यर्थः॥

ब्रह्मणो जिज्ञासेति भाष्यम्। ननु धर्माय जिज्ञासेतिवच्चतुर्थीसमासः किं न स्यादि ‡ त्यत्राह अन्तर्णीतविचारार्थान्वये हीति। इच्छाप्राधान्ये हीच्छायाः कर्मप्रयोजनयोरैक्यात् प्राधान्यात्कर्मणि षष्ठीसमासः स्याद्विचारप्राधान्ये तु कर्मप्रयोजनभेदात्। प्रयोजनविवक्षया तु चतुर्थीसमासोपि स्यादिति। ननु किं तद् ब्रह्म यदिच्छायाः § प्रयोजनतया कर्मत्वेन वर्त्तत इति तदाह ब्रह्मशब्दस्यार्थनिर्देशावसर इति। तत्र यदन्येरित्यारभ्य ब्रह्मण इति ६४ १ः कर्मणि षष्ठीत्यतः प्राक्तनेन ग्रन्थेन जातिजीवकमलासनशब्दराशीनां ब्रह्मशब्दाभिधेयतया जिज्ञासां प्रति कर्तृत्वेन कर्मत्वेन वा प्रतिपादनानुपपत्ते॥ रस्मिन् प्रयोगे न ब्रह्मशब्दस्य जात्याद्यर्थतेति दर्शितम्। तत्र ब्रह्मण इति कर्मणि षष्ठीत्यारभ्य किञ्च शास्त्रप्रवृत्तिरेवेत्यतः प्राक्तनेन ग्रन्थेन अप्रधानविचारान् शब्देन मुख्यया वृत्त्योपादाय प्रधानस्यार्थाक्षेपकल्पनाद्वरं मुखतः प्रधानविचारमेवोपादायाऽप्रधानविचाराणामर्थाक्षेपकल्पनमिति कर्मणि षष्ठी दर्शिता। शेष इति संबन्धसामान्यमुच्यते न कारकषट्कव्यतिरिक्ताः संबन्धविशेषा उच्यन्ते। तत्र यथा देवदत्तस्य स्वमिति षष्ठी विशेषसंबन्धे- • [ प्यन्विताभिधानमर्हत्येवं देवदत्तस्य गच्छति देवदत्तस्य गम्यत इत्यादिकारकसंबन्धविशेषेष्वन्विताभिधानं नार्हति किन्त्वभिहितसंबन्ध ] सामा-

* वाख्याने चः ३ पु०। † सुखरूप इति २ पु०। ‡ इत्यत आहेति १, ३ पु०। § प्रयोजनं तयेति १ पु०। ‖ अप्रयोगे नेति १ पु०। • [ ] चिह्नान्तर्गतः पाठः १ पु० नास्ति।

न्यार्थ * सामर्थ्यात् क्वचित् कारकसंबन्धविशेषाश्चार्थतोऽवगम्यन्त इत्येता-वति षष्ठी शेष इत्युक्तम् नार्थादपि कारकसंबन्धाप्रतिभास इत्युक्तमिति पूर्वपक्षवादिनो मतम् । किंच शास्त्रप्रवृत्तिरेवेत्यारभ्य ज्ञातुमिच्छा जिज्ञासे-त्यतः प्राक्तनेन ग्रन्थेन साधिकारविषयस्य विचारविधेः † प्रतिपादके वाक्ये ब्रह्मणः कर्मकारकत्वं निर्दिष्टं सूत्रस्य च तदेकार्थत्वात्तत्रापि ब्रह्मणः कर्मत्वमेव शब्देन वक्तव्यमिति दर्शितम् ॥

६६ १८ ज्ञातुमिच्छेत्यादि भाष्यम् । तत्रावगतविषयत्वादिच्छाया ‡ ब्रह्मण्य-वगते तज्ज्ञानेच्छानुपपत्तेरनवगते सुतरामिति कथं ब्रह्मज्ञानेच्छेत्यत आह ततश्चेच्छायाः फलविषयत्वादिति । का चेयमिष्यमाणावगतिरिति तदाह साक्षादनुभव इति । ननु प्रथममेवावगतिरुत्पद्यते तत्राह ज्ञानं तु परोक्ष इति । शब्दात्परोक्षतया§ वगते अपरोक्षज्ञानमिष्यत इत्यर्थः । यदा पुनः

६६ १६ शब्दादपरोक्षज्ञानमुत्पद्यते तत्राह सन्निहितेपीति । प्रमाणेनावगन्तुमिति अप-रोक्षनिश्चयानुभवेनेत्यर्थः ॥

ननु किमिह ज्ञानमित्युच्यते । संवेदनमेव प्रमाणफलं विज्ञानमिति सुगतप्रभाकरवैशेषिकनैयायिकाः । नच संवेदनफलचतुष्टयसन्निकर्षादि ‖ सामग्र्यं चान्तरेण प्रमातृव्यापारो नाम ज्ञानमस्तीति । वार्त्तिककारीयाणां तु प्रमातृव्यापारः संविज्जनको ज्ञानमिति । क्षपणकलोकायतिकानां ¶ चात्म-चैतन्यमेव ज्ञानम् । साङ्ख्यवेदान्तिनां करणव्युत्पत्त्या बुद्धिवृत्तिर्ज्ञानं भाव-व्युत्पत्त्या संवेदनमिति । तत्र न तावत्स्थायिन्यात्मनि संवित्फलोदयः कर्तृ-व्यापारमन्तरेणोपपद्यते । ननु यतः कारणात्कर्तृव्यापारजन्म तत एवानुभ-वजन्म स्यात् आत्मनः परिस्पन्दव्यापारानुपपत्तेरिति । अयमत्र वक्तव्यः । किं लोके कर्तृव्यापारात्फलजन्म प्रत्यक्षेणावगतं न वेति । नचेद्व्याप्तिग्रहणाभावा-दप्रत्यक्षत्वाच्च न सर्वत्र कर्तृव्यापारावगमः स्यात् अवगम्यते च लोके कर्तृ-व्यापारः । अथ लोके फलहेतुतया प्रत्यक्षसिद्धः कर्तृव्यापारः । तर्ह्यात्म-न्यपि तदनुमीयते व्याप्तिनियमात् । ननु न परिणामो नाम व्यापारो

* सामर्थ्यात् कारकेति २, ३ पु० । † प्रतिपादकवाक्यमिति १ पु० ।
‡ ब्रह्मण्यवगतत्वाज्ज्ञानेति १ पु० । § अवगतपारोक्ष्यमिति १ पु० ।
‖ सामग्र्यवान्तरेणेति १ पु० । ¶ चो नास्ति १ पु०

ऽस्त्यारम्भाभ्युपगमादिति वैशेषिकादयः । तर्हि प्रयत्नव्यापारजन्यं फलमस्तु कर्तृव्यापारव्याप्तिनियमात्फलस्य । ननु मनःसंयोगादेवासमवायिकारणाद्व्यापारमन्तरेण ज्ञानमुत्पद्यते न करणसंयोगव्यतिरेकेण फलजन्मनि * कर्तृव्यापारदर्शनात् । अत्र सर्वसङ्करवादी विलपति पाकादिषु फलस्य कर्तृव्यापाराधीनतादर्शनात्तथावगम्यतामिह तु † तद्दर्शनाभावान्न कर्तृव्यापार इति । स चानुमानप्रक्रियायाम ‡ नभिज्ञ इत्युपेक्ष्यते । सुगतानामपि नित्यात्मसाधनादेव § संविदां कर्तृव्यापारापेक्षा ऽनुमीयते । क्षपणकानामपि स्वरूपचैतन्यस्य निरुपाधिकस्य विषयावभासित्वे सर्वदा सर्वविषयावभासः स्यात् । लोकायतस्य च जन्यसंवेदनत्वा ‖ त्तद्व्यापारानुमानम् । ननु सर्वगतस्य निरवयवस्यात्मनो न परिस्पन्दपरिणामौ युक्तौ । सत्यम् । अध्यासपरिनिष्पन्नान्तःकरणसम्पिण्डितस्यात्मनो ज्ञानाकारपरिणामात् । नच संवेदनाकारेण परिणामः । तस्य नित्यसिद्धत्वात् । अतोन्तःकरणपरिणामविशेषश्चैतन्यस्य विषयावच्छेदोपाधिः करणव्युत्पत्त्या ज्ञानं भावव्युत्पत्त्या तु संवेदनमेवार्थप्रकाशो ज्ञप्तिर्ज्ञानमित्युच्यते । तत्रार्थोपाध्यपरोक्षसंविदवच्छेदकं ज्ञानम ¶ परोक्षमित्यत्रावयवार्थव्युत्पादनेनापरोक्षावगमेच्छाया वाक्यार्थत्वमुक्तमिष्यमाणज्ञानफलोपदेशमुखेना ** न्तर्णीतं तत्साधनं विचारं कर्तव्यतया वाक्यार्थं प्रतिपादयत्युत्तरं भाष्यम् तस्य तात्पर्यं दर्शयितुमाशङ्कान्तरं निवर्तयति ॥

कथं †† नास्य सूत्रस्य वाक्यार्थो वर्णनीयः । तथाहि । अस्य सूत्रस्य शास्त्रान्तर्भूतत्वे विचारारम्भकर्तव्यता विचारसूत्रस्य केनारम्भः । क्रियते । स्वेनैव चेदात्माश्रयतापत्तिः सूत्रान्तरेण चेदनवस्थापातः । अथानन्तर्भूतं तर्हि प्रथमसूत्रस्याशास्त्रतया ‡‡ ऽनारम्भप्रसङ्ग इति तत्राह तदेतच्छास्त्रान्तर्भूतं सूत्र- ६६ मिति । आपातप्रतिपन्नो §§ त्तरविचारविधिरेव स्वापेक्षितविचाराय प्रथमसूत्रमारम्भयति । विधौ च विचारिते ‖‖ विधिविषयविचारसूत्राणि पश्चादारम्भ-

* कर्तृव्यापारनियमादिति १ पु० ।
† तर्हीति नास्ति १ पु० ।
‡ अनधिकृत इति २, ३ पु० ।
§ संविदामिति २, ३ पु० ।
‖ तदिति नास्ति २ पु० ।
¶ अपरोक्षज्ञानमिति तत्रावयवार्थेति १ पु० ।
** अन्तर्नीतं तत्साधनविचारमिति १ पु० ।
†† कथं नास्य विचारसूत्रस्येति १ पु० ।
‡‡ अनारम्भप्रसङ्गादितीति १ पु० ।
§§ उत्तरविधिरेवेति १ पु० ।
‖‖ विधिविषयसूत्राणीति १ पु० ।

यतीत्येकशास्त्रत्वेपि नानवस्था । श्रोतव्यादिवाक्यानां स्वार्थे समन्वयद्वारेण विचार्यमाणवेदान्तवाक्यानामपि ब्रह्मणि समन्वयनिमित्तत्वात्समन्वये च संबन्ध इति । अत्र च श्रुत्या किं प्रतिपादितम् इति तदाह अनेन चेति । प्रयोज्य इत्यधिकारी । एकस्या इति साधनकलापस्येति । तस्य कारणान्तरमदृष्टं यज्ञादि दृष्टश्च व्याप्त्यनुसंधानाद्यर्थादुपात्तमित्यानन्तर्याभिधानसामर्थ्यादिति । अतःशब्दस्य मुखतो हेतुत्वाभिधायिनोप्याशङ्कान्तरनिवृत्तौ तात्पर्यादर्थाद्धेतुत्वमुक्तमित्यनुवादे प्रयोजनाभावात्कर्तव्यपदमध्याहृत्य जिज्ञासा *कर्तव्यता श्रुत्याभिहिता । नन्विच्छासंयोगाज्ज्ञानस्य साध्यतावगमात्तदेव कर्तव्यमस्त्विति नेत्याह तत्र ज्ञानात्येवेति । इष्यमाणस्य साध्यता स्वयंसिद्धा न शब्दमपेक्षते सुखसंवेदनत्वादित्यर्थः । किं तर्हि विधीयत इति तदाहोपायं तु न वेदेति । अनवगताभिलषितो†पाय एव विधिशब्दैः प्रतिपाद्यत इत्यर्थः । अदृष्टोपायत्वेप्यपरोक्षानुभवं प्रत्यदृष्टोपायतापि दर्शिता श्रवणादिविधेः । ननु पदार्थव्याख्यानादेव स्वयमेव ‡वाक्यार्थं प्रतिपद्यते किं वाक्यार्थकथनेन । सत्यम् । संबन्धादीनामर्थात्प्रतिभासो वाक्यार्थ§कथनेन भवतीत्याह शास्त्रस्य संबन्धाभिधेयप्रयोजनानानीति । मुमुक्षुणा ब्रह्मानुभवाय विचारः कर्तव्य इति वाक्यार्थः । कथमत्रार्थात्संबन्धादिप्रतिपत्तिः । तदाह एतदुक्तं भवतीत्यादिना । ननु ब्रह्मज्ञानद्वारेण काम्यमानमोक्ष॥साधनं विचार इति फलसंबन्धे सिद्धेपि कथं विषयादिसिद्धिरिति तत्राह अर्थाच्छास्त्रस्येति ॥¶

॥ ** इति विवरणे तृतीयं वर्णकं समाप्तम् ॥

* श्रुत्यावगतेति १ पु० । † उपाया एव विधिशब्दैः प्रतिपाद्यन्त इति १ पु० ।

‡ वाक्यार्थः प्रतिपाद्यत इति १ पु० । § कथने भवतीति १ पु० ।

‖ साधनः-इति २, ३ पु० ।

¶ "अत्रेदं विवक्षितम्-ब्रह्मज्ञानाय विचारः कर्तव्य इत्युक्ते ऽनधिगतस्य ब्रह्मणः प्रमेयत्वम् तस्यैव प्रमितस्य प्रयोजनत्वम् शक्यप्रतिपाद्यतया सम्बन्धः ज्ञानकामस्याऽधिकारित्वं चेत्यनुबन्धचतुष्टयं लक्ष्यते· तस्मादनुबन्धचतुष्टयस्य सम्भवाद्विचारः कर्तव्य इती"ति तत्प्रदीपने प्रघट्टकनिर्गलितार्थः समर्थाहि ।

** इति श्रीपञ्चपादिकायां विवरणे तृतीयवर्णकं समाप्तम् इति १ पु०. तृतीयं वर्णकं समाप्तमित्येतावन्मात्रं ३ पु० ।

तत्पुनर्ब्रह्म प्रसिद्धमित्यादिभाष्यस्य तात्पर्यमाह प्रयोजनविषयसंब- ६७ ६
न्धानाक्षिपतीति । ननु विधिसामर्थ्यादेव प्रयोजनादिष्ववगतेषु कथमाक्षेप
इति चोदयति कथमिति । परिहरति प्रसिद्धशब्देनेत्यादिना । ननु प्रति-
पन्नं शब्देनानूद्य प्रतिपादयितुं शक्यत्वात्कथमविषय इत्याह कस्मादिति ।
अनधिगतार्थताऽभावादिति परिहरति प्रतिपाद्यत्वेनेति । * विषयावगमद्वारा
प्रयोजनस्य पूर्व्वावगमेनैव सिद्धत्वान्नास्य प्रयोजनमपीत्याह ततश्चानेनानव-
गमादिति । अथेत्यप्रसिद्धपक्षे संबन्धं प्रयोजनं चाक्षिपति । नन्वनधिगतार्थ
एव प्रमाणेन प्रतिपाद्यते प्रयोजनं च † तत्रैवेति चोदयति कथमिति ।
परिहरति यन्न कदाचिदपीति । प्रत्यक्षादिप्रमाणैर्विचारानपेक्षैरत्यन्तानधिगत
एव प्रतिपाद्यते यत्र विचारापेक्षया प्रमाणेन वस्तु प्रतिपाद्यते तत्राप्रतिपन्न-
मुद्दिश्य विचारानुपपत्तेः प्रतिपन्ने विमर्शदर्शनान्न विचारापेक्षप्रमाणेनान-
धिगतावगम इत्यर्थः । नन्वप्रसिद्धपक्षे संबन्धः कथमाक्षिप्तो न प्रसिद्धपक्ष
इति तत्राह प्रसिद्धं पुनर्यदि नामेति । अविज्ञाते तत्त्वे कारणोपपत्ति-
तस्तत्त्वज्ञानार्थमूहस्तर्क्क इत्यक्षपादसूत्रवचनात्सामान्यप्रतिपन्नस्य वा विशेष-
रूपेण विशेषतोऽप्यापातदर्शनगोचरस्य वा विशेषनिर्णयाय प्रमाणानुग्राहकस्तर्क्क
इति ब्रह्मणोऽप्यनिश्चितविशेषप्रतिभासगोचरतया विचार ‡ योग्यत्वप्रदर्शनेन
वितयमपि समाधत्ते इतिभाष्यस्य तात्पर्यमाह अस्ति तावद् ब्रह्मेत्यादि-
नेति । ननु समन्वयाध्यायनिरूपणेन ब्रह्मैव विषयः प्रतिपाद्यं चेति
सिध्यति § फलाध्यायेन तु फलविशेष इति न वितयमत्र प्रतिपादनीयमिति
तत्राह श्रोतृप्रवृत्त्यर्थमिति । ननु प्रेक्षावतेत्यादिचोद्यपरिहारौ स्पष्टौ ।

ननु प्रयोजनविशेष एव प्रवृत्त्यङ्गं भवति न विषयसंबन्धाविति चोदयति
एषमपि प्रयोजनविशेष एवेति । ननु साधनमपि प्रवृत्तिविषयं ‖ शक्यसाध्यं
चानवगम्य फलज्ञानात्कुत्र प्रवर्त्तत इति तत्राह नच विषयभावमनापन्नमिति ।
ननु फलसाधनं प्रवृत्तिविषयो न फलमिति तत्राह छिदिक्रियाविषय एवेति । ,, २५
प्रयोजनसमवायिवस्तुकर्मकारकतया विषयो भवति । ततश्च प्रयोजनप्रति-

* विषयावगमद्वारपेति १ पु॰ ।
† तत्रेतीति १, ३ पु॰ ।
‡ योग्यताप्रदर्शनेति १ पु॰ ।
§ फलाभाध्ययेन फलेति २ पु॰ ।
‖ शक्यं साध्यं चेति १ पु॰ ।

पत्तौ विषयोप्यन्तर्भवतीत्यर्थः । ननु कुलालदण्डादिव्यापारो मृद्विषयो
६१ २२ घटश्च प्रयोजनमिति विषयप्रयोजनयोर्भेद इति तत्राह दण्डादेरपीति ।
सत्यम् प्रयोजनसमवायी विषयप्रयोजनबुद्धावन्तर्भवति किंतु प्रयोजनं प्रति
करणलक्षणस्य पुरुषव्यापारविषयस्यानन्यसाधारणतया शक्यप्रतिपाद्यतया च
विषयभावे दर्शिते प्रयोजनसाधने नियमेन प्रवृत्तिर्भवति नेतरथेति परिहृ-
रति सत्यमेवम् तथापीत्यादिना । तत्र प्रवृत्तिनियमायानन्यसाधारणतया
विचारतज्जन्यज्ञानयोरनुभूयमानतया प्रयोजनमपि ब्रह्मस्वरूपेण विषयतया
पृथग्वक्तव्यमिति दर्शयितुं विपक्षे दृष्टान्तमाह यथा चिकित्साज्ञानस्येति ।
विषयस्य संबन्धिरूपतयाऽन्तर्गर्भितसंबन्धत्वान्न पृथक्संबन्धो वक्तव्य इति
तत्राह संबन्धोपि वक्तव्य इत्यादिना । तचानन्यप्रतिपाद्यत्वात्साधनान्तरनि-
वृत्तिरूपादन्यत्वात्संबन्धस्य सोपि पृथग्वक्तव्य इति दर्शयितुं विपक्षे दृष्टा-
न्तमाह यथा साधुशब्दपरिज्ञानमित्यादिना । अयमर्थः । व्याकरणारम्भात्
प्राक्चिकित्साव्यापारा* द्व्यापारान्तरैर ऽसाध्यमपि साधुशब्दज्ञानं न चिकि-
त्साव्यापारस्य विषयः संबन्धाभावात् किंतु व्याकरणेन संबन्धात्तस्य विषयो
भवति अतस्तदर्थी न क्वचिदिति चिकित्साव्यापार इत्यर्थः । नन्वेवमप्यन्य-
तमाभिधानेनान्यतमस्यार्थसिद्धत्वान्न पृथगभिधानेन कृत्यमिति नेत्याह
तेन पुरुषार्थरूपतेत्यादिना । भिद्यन्त इति पृथग्वक्तव्यानीत्यर्थः । नचा-
न्यतमेनान्यतमस्य सिद्धिः सत्यप्येकस्मिन्नितराभावस्य दर्शितत्वादिति ।
ननु स्वरूपभेदे पृथगभिधानापेक्षायामपि कथं त्रितयं सम्भूय† न प्रवृ-
त्त्यङ्गमिति तत्र व्यतिरेकमुखेन प्रवृत्तिहेतुत्वं दर्शयति तानि च त्रीण्यपि
प्रवृत्त्यङ्गं नापुरुषार्थ इत्यादिना ।

ननु वक्तव्यमपि त्रितयं प्रसिद्धाप्रसिद्धपक्षयोरनुपपन्नमित्युक्तमिति
६८ १३ तत्परिहारायोत्तरभाष्यस्या ऽऽधिकरणपरिसमाप्तेस्तात्पर्यमाह तत्र विप्रतिप-
त्त्यैकान्ततःप्रसिद्धतामित्यादिना । तत्र ‡प्रसिद्धिमात्रेण विचारविधा-
नोपपत्तिः उद्देशनसम्भवादेकान्तप्रसिद्ध्यभावाद्विचारजन्यज्ञानस्यानन्यसाधा-
रणतेति विप्रतिपत्तिशब्दो ब्रह्मशब्दव्युत्पत्तेरप्युपलक्षणार्थः । नन्वेवमपि

* व्यापारान्तरैः साध्यमपीति २ पु० ।  † अयं नकारो नास्ति २, ३ पु० ।
‡ प्रसिद्धमात्रेणेति २ पु० ।

विचारशास्त्रस्य विषयसंबन्धो न समर्थिताविति चोदयति ननु ब्रह्म ६८ १६
वेदान्तानामिति । ननु ब्रह्मजिज्ञासेति शास्त्रस्यापि स एव विषयो निर्दिष्टः
नेत्याह शास्त्र तेषामिति । सूत्रवाक्यानि न्याया विषयाणि न्यायाश्च प्रमा·
णप्रमेयसम्भावनादिविषयाः । ननु सम्भावानावगम एव तर्हि प्रयोजनमिति
नेत्याह प्रयोजनं त्विति । प्रणाड्ये * ति परम्परयापीत्यर्थः । धर्मार्थाभ्यां
सुखमेव प्राप्यत इति तयोस्तत्परता ।

ननु करणेति † कर्त्तव्यतयोरेकमेव प्रयोजनमिति ‡ निर्णीतं § प्रथमे
तन्त्रे । तथाहि । आग्नेयो ऽष्टाकपालः उपांशुयाजमन्तरा यजति अग्नीषो·
मीय ‖ मेकादशकपालमिति पौर्णमास्यां कर्मत्रयम् तथाग्नेयो ऽष्टाकपाल
ऐन्द्रं दधि ऐन्द्रं पय इति दर्शे त्रयमित्याग्नेयादयः षड्यागाः । तेषां
करणभूतानां द्विविधान्यङ्गानि निरूपितानि ¶ अर्थकर्माणि संस्कारक·
र्माणि चेति । फलोपकार्यङ्गानि प्रयाजादीन्यारादुपकारकाण्यर्थकर्माणि ।
प्रोक्षणादीनि तु द्रव्यद्वारेण यागस्वरूपोपकारितया सन्निपत्योपकारकाणि
संस्कारकर्माणि । तत्रोभयविधानामप्यङ्गानां प्रधानापूर्वद्वारेण स्वर्गसिद्धिरेव
प्रयोजनमित्येवं शब्दशक्तितात्पर्यविचारस्य संस्कारकर्मवच्छब्दप्रमाणस्वरूपो·
पकारितयार्थस्वरूपब्रह्मविचारस्य च ब्रह्मावगमफलोपकारितयावगम्यमान·
ब्रह्मविषमत्वमुभयविधविचारस्य युज्यत इत्यपसिद्धान्ती चोदयति नन्वा·
ग्नेयादीनामित्यादिना ।

ननु वेदान्ता एव ** ब्रह्मावगतिसमर्थास्तत्र कथमितिकर्त्तव्यस्यावग·
मफलतया ब्रह्मविषयतेति तत्राह तेन यद्यपि वेदान्ता एवेति । ननु कथं
संभावनाबुद्धिहेतुतया तद्विषयस्य विचारस्य ब्रह्मावगमजनकतया तद्विषयता
नह्यन्यविषयो व्यापारो ऽन्यविषय इति तत्राह नहि च्छेत्तुरिति । द्विविधं हि ,, २३
कर्म्म कारकम् †† किंचिदव्यवधानतया ‡‡ व्यापारजन्यातिशयवत् यथोद्यम·
ननिपातनव्यापारस्योर्द्धाधोदेशसंयोगविभागातिशय §§ विशिष्टः कुठारः कर्तृ-

---

* इतिशब्दो नास्ति २ पु· । † इति कर्त्तव्ययोरिति १ पु· ।
‡ इति घर्णितं प्रथमतन्त्रे इति ३ पु· । § समासः १ पु· ।
‖ एकादशकपाल इतीति १ पु· । ¶ संस्कारकर्माण्यर्थकर्माणि चेति वैपरीत्यम् १ पु· ।
** ब्रह्मावगमेति २ पु· । †† किंचिद्व्यवधानेति ३ पु· ।
‡‡ व्यापारतया जन्येति २ पु· । §§ विशिष्टं कुठारइति २ पु· ।

व्यापारस्याऽव्यवधानेन कर्मकारकं भवति । किंचिदुद्देश्यफलतया * करणव्यापारव्यवधानेन कर्म भवति यथा द्वैधीभूतो वृक्ष इति । तत्र कर्तृव्यापारः करणव्यापारव्यवहितोपि वृक्षद्वैधीभावफल † उच्यते वृक्षं छिनत्तीति कर्तृव्यापारस्य तत्कर्मतावगमात् स एव वृक्षः कुठारव्यापारस्य साक्षात्कर्म भवत्यऽव्यवधानात् । ननु करणस्य कुठारस्य कथं ‡ कर्तृतेति । उच्यते । सर्वाणि खलु स्वव्यापारापेक्षया कर्तॄणि सर्वकारकव्यापाराणां च फलं कर्मतया साध्यम् । तत्र कर्तृकरणकर्मभेदो ऽवान्तरभेदापेक्षया भवति तत्र कर्ता साधननियोगेन वा धातुना विशेष्यव्यापारतया वा स्वतन्त्रव्यापारः । करणं फलं प्रति सन्निपत्योपकारकं फलसमवायि कर्मकारकमिति । काष्ठानि पचन्तीत्यादिव्यपदेशः स्वव्यापारकर्तृत्वापेक्षया नावान्तरभेदापेक्षयेति । तस्मात्कर्तृव्यापारस्य करणव्यापारव्यवधानेन वृक्षकर्मता । एवं विचारव्यापारस्यापि प्रमाणप्रमेयसम्भावनावगमद्वारेण § ब्रह्मावगमोद्देश्यत्वादवगमहेतोरवगम्यविषयत्वाद् ब्रह्मकर्मता

६८ २५ न विरुध्यते । ‖ अथाव्यवहितमेव ¶ कर्म्म नोद्देश्यमिति तत्राह अन्यथा ऽन्यत्र कर्तृव्यापार इति ।

अथेतिकर्तव्येषु द्विविधं प्रमाणमागमो ऽन्वयव्यतिरेकौ ** च । प्रयाजादीनामागमान्मृत्कुलालादीनां कर्तृव्यापारस्य †† चाङ्कुरकुम्भद्वैधीभावाङ्गतान्वयव्यतिरेकाभ्याम् । अत्र तु शब्दोपलब्धिसंबन्धज्ञानसंस्कारसहकृताच्छब्दादर्थावगमे सति विचारस्याङ्गता नान्यतरप्रमाणेनाप्यवगता शब्दादेव विचारानपेक्षादवगमजननादित्यपसिद्धान्तिनं ‡‡ परिहरति पूर्ववादी विषम उपन्यास इति । ननु यथा चक्षुरादयः सम्यग्ज्ञानहेतवोपि §§ दोषसंयोगात्संशयविपर्यासौ जनयन्ति पुनः सम्यग्ज्ञानजन्मनि च दोषापकर्षमपेक्षन्ते । एवं शब्दः शक्तितात्पर्य्याज्ञान ‖‖ तद्विपर्ययज्ञानदोषात्संशयादिज्ञानमुत्पादयति तत्र दोषापनयनेन विपर्यासादिनिवृत्तये शक्तितात्पर्यविचारो ऽङ्गभावमश्नुत इति चोद-

६९ ४ यति ननु संशयविपर्यासनिरासद्वारेणेति ।

---

* कारणेनि २ पु· ।

† इत्युच्यत इति २, ३ पु· ।

‡ कर्तृतोच्यत इति २, ३ पु· ।

§ ब्रह्मावगमस्योद्देश्यत्वादिति १ पु· ।

‖ यथाव्यवहितेति २ पु· ।

¶ कर्मणोद्देश्यमिति १, ३ पु· ।

** चकारस्थाने वाशब्दः १ पु· ।

†† चाङ्कुरद्वैधीभावेति १ पु·, चाङ्कुरादिद्वैधीभावेति ३ पु·

‡‡ पूर्ववादीपरिहरतीति १, ३ पु· ।

§§ दोषसङ्गादिति २ पु· ।

‖‖ तद्विपर्यासेति २ पु· ।

*तत्र किं शब्द एव दोषवशादन्यथाज्ञानं जनयति विचारश्च तद-पनयनेन तथाप्रमितिहेतुतां प्रतिपद्यते । किं वा शब्दः सम्यग्ज्ञानस्यैव हेतुः कारणान्तरादन्यथाज्ञानम् विचारश्च प्रतिबन्धमात्रं निराचष्टे निवृत्ते च प्रति-बन्धे शब्दादेवार्थनिर्णय इति । तत्र न तावद्विपर्यासादिनिरासेनार्थनिर्णय-हेतुता विचारस्येत्याह † नैतत्सारम् ‡ यत्र ह्यनेकमिति । अयमाशयः । न शब्दसमवायी कश्चिद्दोषोऽस्ति पुरुषेन्द्रियसमवायित्वाद्दोषाणाम् अतः शब्दो न विपर्यासादिज्ञानहेतुः किंतु शब्दानां § प्रयोगान्तरेष्वन्यथान्यथाशक्तितात्पर्या-न्वयनदर्शनादिहापि ‖ तथातथाविधत्व ¶ सामान्यतोदर्शनेनार्थविरोधबुद्ध्या च पुरुषदोषेणान्यथाज्ञानान्युत्पद्यन्ते शब्दाच्च तत्त्वज्ञानमेवोत्पद्यते । ततश्च शब्दात्पुरुषदोषाच्च बहुषु परस्परविरोधिषु ज्ञानेषु जातेषु ** शब्दशक्तितात्प-र्यावधारणं पुरुषदोषापनयनेन प्रतिपत्तृज्ञानान्तरमात्रं निवर्तयति निवृत्ते च प्रतिबन्धे शब्दादेव तत्त्वज्ञानं जायते । जातं वा निश्चलमवतिष्ठते । तस्मान्न विचारः प्रमाणेतिकर्तव्यतया ब्रह्मविषय इति ।

६९ ५

एवमपसिद्धान्ते निरस्ते पूर्ववादिना सिद्धान्तयति अत्रोच्यते यद्यपि वाक्यार्थज्ञानमित्यादिना । †† तत्र सामान्यतोदृष्टनिबन्धनेनेति प्रयोगान्तरेष्व ‡‡ न्यथान्यथाशक्तितात्पर्यदर्शनादिहापि तथाभावबुद्ध्या तथाविधार्थस्य च लो-केन्यथाभावदर्शनादिहाप्यन्यथाभावबुद्ध्येत्यर्थः । अयमाशयः । प्रतिबन्धनिवृत्तौ सत्यामेवार्थनिर्णयात् प्रतिबन्धनिरासिनोऽप्युपचारेण ब्रह्मनिर्णयहेतुत्वाद्विचारस्य ब्रह्मविषयतेति । अत्रेदं विचार्य्यम् । किं तात्पर्य्यमर्थप्रमितिहेतुः किं वा प्रतिबन्धनिरासहेतुरिति । केचित्प्रमितिहेतुतामाहुः तत्र किं विज्ञातं तात्पर्यं प्रमितिहेतुरविज्ञातं वा । न तावद् §§ विज्ञातं प्रमितिहेतुः । तात्पर्यावगमफलवि-चारानपेक्षत्वप्रसङ्गात् तात्पर्य्यविषयादन्यत्र बुद्ध्यनुत्पादप्रसङ्गाच्च । तथा च क-

६९ १६

* तत्र किमिति· दोषसहितस्य शब्दस्याऽन्यथाज्ञानजनकत्वम् विचारस्य च दोषनिरासेन प्रमितिहेतुत्वमिति किं युक्तम्, उत शब्दस्य सम्यग्ज्ञानजनकत्वस्वाभाव्य?, दोषाच्चान्यथाज्ञाने समुत्पन्ने विचारेण च निवृत्ते शब्दार्थनिर्णय इति चेति योज्यम्· अन्यथा विकल्पानुत्थानात्, शब्दस्य दोषसहितस्यान्यथाबोधकतायास्तेनाऽभिहितत्वादित्यर्थ इति तत्त्व० ।

† नैतदिति, अयमाशय इति ३ पु· ।

‡ यत्र ह्यनेकमिति २ पु· ।

§ प्रयोगान्तरेष्वन्यथाशक्तीति २ पु· ।

‖ इहापि तथाविधेति २, ३ पु· ।

¶ सामान्यदर्शनेनेति १ पु· ।

** शब्देति नास्ति १ पु·

†† इत्यादिना सामान्येति २ पु· ।

‡‡ अन्यथेति सकृदेव २, ३ पु· ।

§§ अज्ञातमिति १, ३ पु· ।

श्चित् स्थानजिघृक्षया कश्चिदुत्थापयन्नाह पित्रा त्वमाहूत इति । स च पितुरा-
ह्वानं प्रतिपद्य समुत्तिष्ठतीतरस्तु तत्र निविशते । समुत्थितश्च सन्नितरो जा-
नाति स्थानजिघृक्षयेदमुक्तमिति । ननु न पितुराह्वाने तात्पर्यंहीने संसर्गबुद्धि-
रिति चेन्न । उत्थानादिप्रवृत्तिदर्शनात् । *प्रवृत्तेश्च संसर्गज्ञानपुरःसरत्वाभावे
प्रवृत्त्या संसर्गे शब्दशक्तितात्पर्यकल्पनायोगात् । ननु शब्दो न मिथ्याज्ञानमु-
त्पादयति । नैष दोषः । सत्यपि पितुराह्वाने तथाभूतज्ञाने च तात्पर्यं वक्तुर-
न्यत्रेत्येतावद्दर्शितम् । तस्मान्नाऽज्ञाततया तात्पर्यं प्रमितिहेतुः । अथ ज्ञात-
तया । तर्हि कुत्र तात्पर्यमवगम्यते शब्दस्यात्र तात्पर्यमित्याश्रयविषयसापे-
क्षत्वात्तात्पर्यस्य । न तावत्पदार्थेषु तात्पर्यं वाक्यार्थज्ञाने ऽनुपयोगात्संसर्गश्चा-
नवगतो न तात्पर्यविशेषणतया ऽवगन्तुं शक्यते ।

स्यादेतत् । † पदावगतेषु पदार्थेषु परस्परान्वय ‡ योग्यतानिमित्तः
संसर्ग उत्प्रेक्षयावगम्यते तद्विषया च तात्पर्यावगतिरिति । न तावत् स्मृति-
संशयविपर्यासानामन्यतमः संसर्गावबोधः । तत्र परिशेषाच्छब्दजन्यतया संस-
र्गबोधः प्रमाणमेव स्यात् । नच शक्तिरिव सामान्योपाधो तात्पर्यम् । प्रति-
वाक्यं § विशेषतात्पर्यभेदात् । किंच । पदार्थवत्संसर्गेपि शक्तिमात्रनिबन्धनो
ऽवगमो न तात्पर्यनिबन्धन इत्यनुमातुं शक्यते । शब्दानां च पदार्थप्रदर्श-
नमुखेन तात्पर्योपाध्यु ‖ पयोगितयान्यथासिद्धत्वात् ¶ तात्पर्य्यमात्रावगमा-
धीनः संसर्गबोधो न शब्दनिबन्धनश्च स्यात् । तस्मात्पदानामेव संसर्गप्र-
तिपादनसामर्थ्यान्मुख्यलक्षणादिद्वारेण प्रमाणान्तराविरुद्धे संसर्गे प्रतिपन्ने दोषा-
न्तरनिमित्तसंशयविपर्यासविज्ञाननिराकरणाय तात्पर्यावगम इति सिद्धम् ।
तच्चेदं त्वयमप्यवश्यमित्यारभ्यालमतिविस्तरेणेत्यतः प्राक्तनेन ग्रन्थेनोक्तमर्थं
१० ५ निगमयति समर्थनं प्रदर्शयितुम् । अस्ति तावदिति स्पष्टार्थः ।

* प्रवृत्तेरिति· अर्भक समिधमाहरेत्याचार्यवाक्यश्रवणसमनन्तरमुपजायमानां मध्यमनरप्र·
वृत्तिं निरीक्ष्य व्युत्पित्सुरित्थमनुमिमीते अयं नरः संसर्गबोधवान् संसृष्टप्रवृत्तित्वात् संप्रतिपन्न·
वदिति संसृष्टप्रत्ययमनुमाय तस्य कारणविशेषापेक्षायां शब्दान्वयव्यतिरेकाभ्यां शब्दस्य तत्र
सामर्थ्यं कल्पयति· तच्च न स्यात्· प्रवृत्तेः संसर्गज्ञानाऽव्याप्तत्वादित्यर्थ इति तत्त्व० ।

† पदार्थेषु पदावगतेष्विति २, ३ पु· ।

‡ योग्यतावगमेति शोधितम् १ पु· ।

§ विशेषेतात्पर्येति १ पु· ।

‖ उपयोगितयैवान्यथेति २ पु· ।

¶ तात्पर्यावगमाधीन इति ३ पु· ।

ननु न ब्रह्म सामान्येनापि लोके प्रतिपत्तुं शक्यं प्रमाणान्तरागोचरत्वात् । नाप्यागमसामर्थ्यात् तत्र प्रयुज्यमानस्य ब्रह्मशब्दस्यानवधृतार्थत्वात् । न च पदमात्रादेवार्थान्तरसिद्धिः जात्याद्यर्थान्तरेषु प्रसिद्धत्वात् । तस्मान्न प्रसिद्धमुद्दिश्य विचारविधानोपपत्तिरिति चोदयति कथमिति । तत्र श्रुतिसूत्रयोर्ब्रह्मशब्दप्रयोगसामर्थ्यादेव जात्यादिव्यतिरिक्तं किंचिद्वस्तु प्रतिपत्तुं शक्यत इत्यत आह ब्रह्मशब्दस्तावदित्यादिना । नन्वर्थान्तरसद्भावे किं प्रमाणमिति *प्रयोगार्थापत्ती इत्याह अतो नूनमन्यदेवेति । ननु श्रौतप्रयोगानुपपत्तिर्नापूर्वमर्थं गमयति लौकिकप्रयोगाधीनत्वाच्छ्रौतप्रयोगस्येति तत्राह †तेन ‡स्वर्गापूर्ववदेव वेति । अपूर्वमिति तानि धर्माणि प्रथमान्यासन्नित्यादौ वेदे धर्मशब्दप्रयोगोऽभिप्रेयते । ननु वाक्ये प्रयुक्तं पदं प्रमाणान्तरानधिगतमर्थं न प्रतिपादयति पदार्थांशेऽनुवादमात्रत्वादित्याह नैतत्सारमिति । न प्रत्यक्षवत् संबन्धग्रहणाभावान्नानुमानादिवच्चेत्यर्थः । ननु दर्शितं स्वर्गादिवदिति नेत्याह स्वर्गाद्यर्थापीति । सन्निहितानेकवाक्यार्थसामर्थ्यलभ्यः स्वर्गादिपदार्थ इत्यर्थः । तत्र वाक्यार्थप्रमितिविवक्षया प्रसिद्धार्थैः पदान्तरैः सहाऽप्रसिद्धार्थपदप्रयोगानुपपत्तिरेव प्रतिपाद्येन संबन्धग्रहणानपेक्षया पूर्वपदार्थं पदवाच्यत्वेन प्रतिपादयतीति परिहरति यस्मिन् वाक्ये यकं पदमिति । विप्रलम्भभ्रान्त्यादिदोषरहितवेदसूत्रवाक्यार्थनिर्णयस्यावश्यलभ्यत्वादिति भावः । ननु सहप्रयोगानुपपत्तिर्नियामकाभावाद्यं कंचिदर्थमुपस्थापयतीति तत्राह तत्र निगमनिरुक्तेति । निगमो नाम प्रसिद्धार्थपदावयवौ परित्यज्य शब्दस्य शब्दैकदेशानुगमेनार्थान्तरे वृत्तिः यथा देहात्मादिशब्दानामुपचितवस्तुसन्ततगमनवत्पदार्थादावेकदेशानुगमेन वृत्तिः । प्रसिद्धार्थतदवयवोपादानेनार्थान्तरवृत्तौ लक्षणागुणवृत्तिप्रसङ्गात् । निरुक्तं नाम शब्दस्य सर्वावयवार्थानुगमेन प्रसिद्धादर्थादर्थान्तरे वृत्तिः यथा सोमशब्दस्य पार्वतीसहितमहेश्वरे वृत्तिः । व्याकरणं प्रत्ययविधानसामर्थ्यादर्थनिश्चयः । यथा वादीति §ताच्छील्ये णिनिप्रत्ययविधानसामर्थ्याद्वदनशीलो गम्यते । ननु

७० ६

११ २४

* प्रयोगार्थापत्तीरित्याहेति १, पु०, प्रयोगार्थापत्तिरित्याहेति २, ३ पु० ।
† तेनेति अपूर्वमिति—इति ३ पु० । ‡ स्वर्गापूर्वदेवतेतीति १ पु० ।
§ ताच्छील्यप्रत्ययेति २ पु०, ताच्छील्येप्रत्ययेति ३ पु० ।

प्रसिद्धिबलेनाप्रसिद्धमुपादीयते नचाप्रसिद्धेन प्रसिद्धं त्यज्यत इत्यत्र को
१० १६ विशेष इति तत्राह नहि प्रसिद्धिरप्रसिद्धेति। अप्रसिद्धि * र्नैसर्गिकप्रागभावः
प्रसिद्धपदार्थैः सह वाक्यार्थनिर्णयाय प्रयोगानुपपत्तिरेवागन्तुकी. तस्य प्राग-
भावस्य निवृत्तिहेतुरिति भावः। नन्ववयवार्थसामान्यानुगमानां सर्वतोविप्र-
सृतिसम्भवादुपादेयार्थनियमायोगाद्वाक्यार्थप्रतिपत्तिनियमो न स्यादिति चोद-
यति ननु निगमादिवशेनेति।

अत्र निगूढाभिसन्धिरुत्तरमाह न तर्हि निगमादीनामिति। रूढि-
समाख्योदेव सर्वत्रवाक्यार्थनियमे लोकप्रसिद्धं वृत्त्यन्तरमनर्थकं स्यादिति
भावः। पूर्ववादी निगमादीनामर्थवत्ता † माह भवत्यर्थवत्तेति। स्वार्था-
दन्यत्रेति अर्थान्तर ‡ विवक्षयेत्यर्थः। विनियोगादिति। वाक्यार्थसंसर्ग
निमित्तीकृत्येत्यर्थः। अयं भावः। वाक्यार्थनिर्णयं निमित्तीकृत्य पदान्तरैः
सह प्रयोगानुपपत्तिरेव निगमादिवशेनार्थ § मादधाना सन्निहितपदार्थ-
संसर्गयोग्यतया प्रयोजनपर्यन्तमेव पदार्थ ‖ मादत्त इति वाक्यार्थनियम-
सिद्धिरिति। सिद्धान्ती गूढाभिसन्धिं विवृणोति एवं तर्ह्येकार्थनियमायेति।
¶ प्रथमप्रयोगानुपपत्तिर्निगमाद्यनुगृहीता फलपर्य्यन्तवाक्यार्थान्वयिपदार्थाकाङ्क्षा-
नुगृहीता च नियतपदार्थोपादानहेतुभावे रूढेर्न्न विशिष्यत इत्यर्थः। नन्वेवमपि
कथं ब्रह्मशब्दस्य जात्यादिविलक्षणे निरतिशयपुरुषार्थे मुमुक्षोर्ज्जिज्ञासा-
योग्ये वस्तुनि निगमवशाद् वृत्तिरिति तदाह तदत्र ब्रह्मशब्दे व्युत्पाद्यमान
इति। नन्वेवमपि यत्किंचिदापेक्षिकमहत्त्वसंपन्नं वस्त्वनुगम्यतामिति नेत्याह
** प्रयोगानुगमे चासतीति। तत्र हेतुर्वाक्यार्थान्वयीति। तत्राल्पत्वं नाम
वस्तुनो देशकालवस्तुपरिच्छेदः तद्व्यावृत्तिर्न्निरतिशः महत्त्वम् तत्रापयदादि-
सङ्कोचकाभावे जिज्ञास्यस्य पुरुषार्थतया वाक्यार्थान्वयसम्भवे च तदपि
२६ ब्रह्मपदेनानुगम्यत इत्याह †† ततश्च कालकृतावच्छेदनिमित्तस्येत्यादिना।
बृहत्त्वं चेत्यतः प्राक्तनेन ग्रन्थेन। भाष्ये नित्यशब्देन त्रिविधमपि महत्त्वं

* नैसर्गिको प्रागभाव इति १ पु॰।
† आह भवत्यर्थवत्तेति ३ पु॰।
‡ विवक्षयापीत्यर्थ इति १ पु॰।
§ आददानेति १, २ पु॰।
‖ आददातीति १ पु॰।
¶ प्रथमेति नास्ति १ पु॰।
** प्रयोगानुगमेऽसतीति १ पु॰।
†† ततश्चेतीति ३ पु॰।

दर्शितमित्यर्थः । ननु बुद्धत्वादयो गुणा न ब्रह्मत्वोपयोगिनः * तत्कथं ब्रह्मपदादनुगम्यन्त इति चोदयति कथमिति । नैष दोषः । गुणतो † ऽपकृष्टेऽप्य- ७१ ६ ल्पबुद्धिदर्शनात् । तथाहि । गुणहीनं दोषभूयिष्ठं च वस्त्वल्पमविद्यमानसमं मन्यन्ते । गुणभूयिष्ठं दोषहीनं च महान्तं कथयन्ति । अतो गुणतो ‡ ल्प- त्वनिराकरणेन महत्त्वं दर्शयितुं बोधगुणहीनस्य गुणतो ऽपकृष्टतयाल्पत्वाद् बुद्धत्वमनुगम्यत इत्याह अबोधात्मकं वस्त्वित्यादिना । तथा चेतन- स्यापि संसारित्वे दोषभूयिष्ठत्वा§द्गुणतो ऽपकर्षान्निरतिशयमहत्त्वासिद्धेः । सर्वदोषरहिततया मुक्तत्वोत्कर्षोऽप्यनुगम्यत इत्याह ‖ मुक्तमिति चाविद्याका- मकर्मपरतन्त्र इति । चेतनस्यापि मुक्तस्य सर्वविषयज्ञानाभावे सर्वकार्यनि- यमनादिशक्त्यभावे च परिशिष्टज्ञेयकार्यविषयज्ञाननियमनशक्त्यभावाततोऽपक- र्षादल्पता स्यात् तद्व्यावृत्त्यर्थमाह ¶ सर्वज्ञं सर्वशक्तिसमन्वितं च तदित्यादिना। ननु ब्रह्मशब्दप्रयोगेऽपि जातिजीवकमलासनशब्दराशिषु नैतावानर्थः प्रतीयते तत्र कथमनुगमादप्येतादृशस्यार्थस्य प्रतिपत्तिरिति तत्राह सिद्धे हि वस्तुनि प्रयोग इति । प्रमाणान्तरगृहीतेऽर्थे प्रयोगसामर्थ्यादेवार्थप्रतिपत्तावऽल्पं वा महद्वा यथा प्रमाणान्तरेण ** प्रतिपद्यते तथैव शब्दार्थः प्रतिपत्तव्यः । यदा पुनः प्रयोगसामर्थ्यमनपेक्ष्य शब्दावयवसामर्थ्यादेवार्थो ऽनुगम्यते । तदा प्रमाणान्तरोपपदप्रकरणानां सङ्कोचहेतूनामभावाद्यथासामर्थ्यं मुख्य एवार्थः प्रतिपत्तव्य इति भावः । उक्तेऽर्थे भाष्यमवतारयति तदेतदाहेति । ,, १० 

ननु सौत्रस्य शब्दस्यार्थो ऽनुगम्यते किं वा श्रौतस्य । न तावत्सौत्रस्य । पौरुषेयप्रयोगस्य प्रमाणान्तरापेक्षत्वात्तदभावात् । नापि श्रौतस्य । सत्यं ज्ञानम् यतो वा इमानीत्यादिशास्त्रे निर्णीयमानार्थत्वा †† दनुगमानपेक्षणादिति । नैष दोषः । श्रुतिप्रमाणावगतविषयतया तन्मूलस्यैव सौत्रस्य ब्रह्मशब्दप्रयोगस्यो- त्तरसूत्रप्रतिपाद्यश्रुतिप्रमाणगम्यब्रह्मस्वरूपमनपेक्ष्यैवार्थानुगममुखेनार्थोपादाना- दुत्तरसूत्रसाध्यसिद्धवत्कारेणार्थोपादानानुपपत्तेश्च । श्रौतस्य वा ऽयं ब्रह्मशब्द-

* ते कथमिति १ पु० ।
† अपकर्षेति १ पु० ।
‡ अबोधत्वेति ३ पु० ।
§ गुणापकर्षादिति १ पु० ।
‖ मुक्तमितीति ३ पु० ।
¶ सर्वज्ञेतीति ३ पु० ।
** प्रतिपाद्यते इति २, ३ पु० ।
†† अनुगमानपेक्षत्वादिति ३ पु० ।

स्यार्थानुगमो वर्ण्यते। वाक्यार्थान्वयितया प्रयुक्तस्य ब्रह्मशब्दस्य वाक्यप्रमाण-
मनपेक्ष्यैवान्यतःसिद्धेर्वक्तव्यत्वादनुगमापेक्षणात् । ननु तर्हि पदानुगमस्य व-
र्णितविशिष्टार्थविषये सम्भावनामात्रबुद्धिहेतुत्वात्प्रमाणान्तरानधिगतस्य पदा-
र्थस्य कथं वाक्यार्थान्वयितया * तत्र निर्णयहेतुत्वमिति चोदयति † नन्वेवमपि
११ २० व्युत्पत्त्यनुसरणेनेति । तत्र जिज्ञासापदस्य ‡ सन्निहितस्याऽनिर्णीतजिज्ञास्य
वस्तुसापेक्षत्वात्§तदपेक्षितार्थसमर्पणस्य ब्रह्मशब्दस्यानिर्णीतप्रतिपन्नवस्तुमात्र-
समर्पणेन वाक्यार्थनिर्णयहेतुत्वं न विरुध्यत इति परिहरति सत्यमेवम् अत
एवेति। सर्वस्यात्मत्वाच्चेति भाष्यतात्पर्यार्थमाह इदमपरं ब्रह्मशब्दार्थस्येति।
नन्वात्मन्यपि न प्रमाणम्। प्रत्यक्षाद्यविषयत्वादप्रामाणिकस्य च द्विचन्द्रादिव-
दवस्तुत्वादिति तत्राह सर्वो ह्यात्मास्तित्वमिति ‖ ननु शून्य एवायमात्मा
प्रतिभासते कथ ¶ मात्मास्तित्वसिद्धिरिति शून्यवादमाशङ्क्याह यदि नात्मा-
स्तित्वप्रसिद्धिः स्यादिति । नन्वात्मपदार्थे प्रत्यक्षावगते कथं ब्रह्मपदार्थस्य
प्रसिद्धिरिति तदाह आत्मा च ब्रह्मेति। नन्वनादिवृद्धव्यवहारे ब्रह्मशब्दस्या-
त्मनि प्रयोगादर्शनात्कथं ब्रह्मशब्देनात्मा जिज्ञास्यत्वेनोपादीयत इति चोद-
यति कथं पुनरात्मा ब्रह्मेति । लौकिकप्रयोगाभावेपि वैदिकप्रयोगसामर्थ्यात्स
वा अयमात्मा ब्रह्मेत्यादौ ब्रह्मशब्देनात्मा जिज्ञास्यत्वेनोपादीयत इति
परिहरति वेदान्तेष्विति । ननु ब्रह्मशब्दाभिधेयोऽयमात्मा नाहंप्रत्ययवेद्यः
किन्त्वागमैकसमधिगम्य इति नेत्याह आत्मानमेवेति । ततश्च प्रतिपन्नमुद्दि-
१२ १ श्य विचारसम्भवाच्छास्त्रप्रतिपाद्यता सिद्धेत्याह तदेवमहंप्रत्यय एवेति ।
ननु वेदान्तेषु सञ्ज्ञापरतया नात्मनि ब्रह्मशब्दः प्रयुज्यते किन्त्वात्मनो
ब्रह्मशब्दार्थतादात्म्याभिप्रायेण ततश्चातिरिक्तार्थत्वाद् ब्रह्मशब्देनात्मोपादी-
यत इत्ययुक्तमिति । नैष दोषः । अतिरिक्तब्रह्मस्वरूपानर्पणविवक्षया प्रसि-

* तन्निर्णयेति १. ३ पु० ।　† व्युत्पत्त्यनुसरणेनेति नन्वेवं मतेनेति ३ पु० ।

‡ सन्निहितानिर्णीतवस्त्विति १ पु० ।

§ तेनापेक्षितस्यार्थस्य समर्पणं येन स तथोक्तः प्रतिपन्नत्वे सत्य ऽप्रामाणिकत्वापराधेनाऽजिज्ञास्यत्वादर्शनात्प्रतिपन्नत्वमात्रं जिज्ञास्यत्वम् इतरथा जिज्ञासावैयर्थ्यमित्यर्थ इति तत्त्व० ।

‖ योऽयमात्मा प्रतिभासते स शून्य एवेति संबन्धः किमात्मनः शून्यत्वमनुभवबलात् उत प्रमाणान्तरात् नाद्यः, तथाननुभवात् न द्वितीयः, तदनिरूपणादिति समाध्यभिप्राय इति तत्त्व० ।

¶ आत्मास्तित्वप्रसिद्धिरिति १, २ पु० ।

द्वांशस्य ब्रह्मशब्देनोपादानादेकस्मिन्नप्यर्थे बिम्बप्रतिबिम्बादिवत् प्रतिभासाप्रतिभासोपपत्तेः ।

एवं तर्हि प्रत्यक्षगोचरतयाऽनन्यसाधारणत्वाभावाद्विषयत्वं* न सिध्यतीत्याक्षिपति यदि तर्हि लोके ब्रह्मात्मत्वेनेति । समाधत्ते न तद्विशेषं प्रति विप्रतिपत्तेरिति । भाष्यार्थं विवृणोति सत्यम् अहमित्यात्मनि प्रत्यय इत्यादिना । नन्वन्यस्मिन्विप्रतिपन्ने कथमन्यन्निर्णीयत इति तदाह तांश्च वस्तुत इति । ननु प्रसिद्धे पदार्थे कथं विप्रतिपत्तिरिति† तत्राह ततः सामान्यतःप्रसिद्धमपीति । नन्वप्रतिपन्नविशेषं वस्तु स्वयमप्रतिपन्नमेवेति कथमुद्दिश्यविधानाभावे शक्यप्रतिपाद्यतेति तत्राह सामान्यतःसिद्धत्वाच्च शक्यत इति । ननु नास्ति ब्रह्मणि सामान्यविशेषभावः । सत्यम् । ‡शरीरेन्द्रियमनोबुद्धिशून्यकर्तृभोक्तृसर्वज्ञब्रह्मात्मनां पराग्व्यावृत्तप्रत्यग्धर्मानुगमेन सिद्धिः सामान्यम् । तच्च प्रत्यग्धर्मानुगमेन सिध्यन् विशुद्धस्वरूपेऽपि सामान्यतःसिद्ध इत्युच्यते । ततः प्रत्यक्त्वानुरक्तविशेषान्तरैर्विप्रतिपद्यते । तच्च विशेषान्तरानुरागविरोधिनाऽसाधारणस्वरूपेण निर्णीयत इति । कथं विप्रतिपत्तिः तां दर्शयति देहमात्रमित्यादिना । कथं पुनः प्रत्यक्षसिद्धे पदार्थे जायमानस्य प्रयुज्यमानस्याहंप्रत्ययस्य तच्छब्दस्य चानेकार्थसाधारणयाऽऽशङ्कया विप्रतिपत्तिरिति तत्र दृष्टान्तमाह तद्यथा गोशब्दस्येति । जातिर्वैदिकैः प्रतिपन्ना । व्यक्तिः सांख्यादिभिः । उभयं वैयाकरणैः । आकृतिरवयवसंस्थानमार्हतादिभिः । त्रितयमपि नैयायिकैः । क्रियागुणसंस्थानादयोऽपि यथादर्शनम् । इति यथा गोशब्दप्रयोगे जात्यादीनामन्वयव्यतिरेकनियमादेकस्यापि व्यभिचाराभावाच्छब्दार्थत्वाशङ्का तथा शरीरादीनामन्वयव्यतिरेकनियमादात्मत्वाशङ्केति भावः । १२ २

स्पष्टमूर्ताकारतया स्थूलमूर्ततारतम्यान्निरासक्रमसिद्धेश्च शरीरमारभ्य विप्रतिपत्तिं दर्शयति तदाह देहमात्रं चैतन्यविशिष्टमिति । शरीरस्यात्मत्वश- ,, १४

---

* विषयत्वेमेति १ पु० ।    † तदाहेति २ पु० ।

‡ शरीरेति० पराग्व्यावृत्तश्च प्रत्यग्धर्मश्चेति पराग्व्यावृत्तप्रत्यग्धर्मः, तस्यानुगमेनेति विभागः० धत्ते इति धर्मोऽधिष्ठानमर्हमिति प्रतीयमानं प्रत्यक्त्वं सामान्यम्, तदुल्लिखिततया शरीरादयो भासन्त इत्यर्थः० यथैकस्मिन्देवदत्ते प्रतियोगिभेदापन्नं पितृत्वादिकं भासते, तथैकस्यां चिति अनात्मत्वेन व्यावर्त्यमानपराग्भूतसापेक्षं प्रत्यक्त्वम्, तच्च शरीरेन्द्रियादिसाधारणं भवते, शरीरादयस्तु व्यावृत्ता इति सामान्यविशेषभावसिद्धिरित्यर्थ इति तत्त्व० ।

७२ १५ ङ्कायां प्रत्यक्षं प्रमाणमाह तथाहि मनुष्योऽहमिति । देहशब्दार्थमाह देहमात्र-मितीति । त्वगिन्द्रियस्य निरपेक्षाधारः शरीरं नाम । तथा * वयवान्तरेषु च्छिद्यमानेष्वपि प्रायेण त्वगिन्द्रियं तिष्ठति न शिरश्छेद इत्यभिप्रायेण † सशिरस्केत्युच्यते । ननु भूतचतुष्टयतत्त्ववादिनां पञ्चमं चेतन्यं तत्त्वमव-शिष्यत इति तन्निवृत्त्यर्थमाह मात्रशब्देन देहातिरिक्तमित्यादिना ।

पक्षान्तरमाह इन्द्रियाण्येवेति । ननु यस्मिन्विज्ञानमुत्पद्यते स चेतनः । नहीन्द्रियाश्रयं विज्ञानमुत्पद्यते मनुष्योऽहं जानामीत्यवगमात् तत्र कथं तेषां चेतनत्वमिति तत्राह इन्द्रियाणां चक्षुरादिमनःपर्यन्तानामिति । अयमा-शयः । सत्यपि शरीरे विषयज्ञानानामिन्द्रियैरन्वयव्यतिरेकवत्त्वात् करण-तया ऽन्वयव्यतिरेकवत्त्वकल्पनादाश्रय त यान्वयव्यतिरेककल्पनस्याभ्यर्हितत्वा-दिन्द्रियाण्येव ‡ विज्ञानाश्रयाणीति । § नन्वेकस्मिञ् शरीरे बहूनामिन्द्रियाणां चेतनत्वे रूपमद्राक्षमिदानीं शृणोमीति प्रत्यभिज्ञा न स्यात् । भोक्तृत्वं च रूपरसादिषु युगपत्स्यान्न क्रमेणेति तत्राह क्रमेण वरगोष्ठीवदिति । एकशरीरा-श्रयत्वमेव प्रत्यभिज्ञाक्रमभोगयोर्निमित्तं नैकत्वमित्यर्थः । ननु चेतनत्वेऽप्यहं-प्रत्ययालम्बनस्यैवात्मत्वं तदभावान्नेन्द्रियाणामात्मत्वमिति तत्राह तथा-चेन्द्रियधर्मसामानाधिकरण्यमहंप्रत्ययस्येति । शरीरस्याप्यहंप्रत्ययालम्ब-नत्वविज्ञानान्वयव्यतिरेकयोरिन्द्रियात्मनामाश्रयत्वेनाप्युपपत्तेरिति भावः ।

,, २५ पक्षान्तरमाह मन एव चेतनमिति । किमत्र प्रापकं प्रमाणमिति तदाह दृश्यते हि स्वप्न इति । अयमर्थः । स्वप्ने चक्षुराद्यभावेऽपि केवले मनसि विज्ञा-नालम्बनत्वाहंप्रत्ययविषयत्वयोरविकलयोर्दर्शनाद्रूपादिविज्ञानानां चक्षुराद्या-श्रयत्वे तदभावे केवले मनसि रूपादिस्मृत्यनुपपत्तेराश्रयान्तरे चाऽसिद्धेः चक्षु-रादीनां ज्ञानान्वयव्यतिरेकयोः करणविषयतयाप्युपपत्तेरहंप्रत्ययस्य च देह इव करणे कर्तृत्वोपचारात्सिद्धेः प्रत्यभिज्ञयाः ‖ शरीराद्यविवेकत्वनिबन्ध-नत्वात् एकाश्रयत्वात्प्रत्यभिज्ञायामेकप्रासादसमाश्रितानामपि तत्प्रसङ्गात् । तस्माच्चक्षुरादिकरणशरीराधारं मन एवात्मेति ।

* अवयवान्तरेषु भिद्यमानेति १ पु॰ ।
† सशिरस्कमित्युच्यत इति ३ पु॰ ।
‡ विज्ञानाश्रया इति तु युक्तं स्यात् ।
§ नन्वे॰शरीरे–इति १ पु॰ ।
‖ शरीराद्यविवेकत्वेति ३ पु॰ ।

पक्षान्तरमाह विज्ञानमात्रं क्षणिकमित्येक इति । वर्णोच्चयशब्देन वर्णो- १३
च्चयाभिधेयं विज्ञानमात्रमुच्यते । * तेन विज्ञानाश्रयस्यात्मनोऽभाव उच्यत
इति । कथम् । शरीरेन्द्रियाणां तावद्विज्ञेयत्वादविज्ञानत्वाज्ज्ञानात्मत्वात् मन-
सश्च समनन्तरप्रत्ययव्यतिरेकिणोऽभावादाश्रयान्तरादर्शनादिति । कस्त-
र्ह्यात्मेति तदाह तेन विज्ञानमेवेति । तर्हि सांख्यादीनामिव विज्ञानमेवा-
नादिनिधनमात्मेति तत्राह स्वरसभङ्गुरमिति । कथं तर्हि प्रत्यभिज्ञानेनै-
कत्वावगम इति तदाह अविरतोदयमिति । ज्वालायामिव संततविज्ञा-
नोदयसादृश्यात् प्रत्यभिज्ञेत्यर्थः । कथं तर्हि कर्मज्ञानबन्धमोक्षाद्याश्रयत्वं
क्षणिकस्येति तदाह अखिललोकयात्रानिलयमिति । विज्ञानानां हेतुफलस-
न्तानमात्रादेव कर्मफलसम्बन्ध इत्यर्थः । ननु स्थायिन्यात्मन्येकस्मिन्सर्वे-
मेतन्मुख्यमुपपन्नमिति तत्राह अनुभवभग्नपक्षान्तरमिति ।

पक्षान्तरमाह शून्यमिति । विज्ञानव्यतिरिक्तानां तावदात्मत्वं विज्ञे-
यत्वात्प्रत्याख्यातम् । न च विज्ञानस्यात्मत्वमस्ति सुषुप्ते शून्यतावगमात् ।
विद्यत एव तत्रापि विज्ञानप्रवाह इति चेन्न । विषयावभासाभावात् निराल-
म्बनज्ञानायोगाच्च । साकारज्ञानानामेव सालम्बनत्वं न सौषुप्तिकानामिति चेन्न ।
विशेषाभावात् अविशेषानुमानाच्च उत्थितेनाऽस्मर्यमाणविज्ञानत्वाच्च सुषुप्ते
विज्ञानाभावः । किंच । † सविकल्पकस्य स्वविषयविपरीतनिर्विकल्पकालम्बन-
त्ववन्निर्विकल्पकस्यापि सत्प्रत्ययत्वा‡त्स्वविषयविपरीतशून्यालम्बनत्वानुमा-
ना§दुत्थानप्रत्ययः शून्यालम्बन इति गम्यते तदेतदाह सुषुप्ते विज्ञानलेशस्या-
प्यभावादिति । मा भूद्विज्ञानलेशः ततः किमिति तदाह अकस्मादेवेति । ,,
उत्थानप्रत्ययस्य पूर्वसमनन्तरप्रत्ययशून्यतया कारणशून्यता स्यादिति भावः ।

* तेनेत्यस्य स्थाने नचेति । २ पु० ।

† सविकल्पकस्येति. संज्ञासंज्ञिसंबन्धविशिष्टवस्तुलक्षणो यो विषयः तस्य विपरीतं यन्निर्विक-
कल्पकं ज्ञानं वैपरीत्यं च वस्तुमात्रग्राहित्वेन, तदाऽऽलम्बनं कारणं यस्य तत्तथोक्तम्, तस्य भावः
तत्त्वम्, तद्वदित्यर्थः ।

‡ स्वविषयविपरीतेत्यस्यायमर्थः-निर्विकल्पकज्ञानस्य विषयः सन्मात्रम्, तस्य विप-
रीतं यच्छून्यं, तदालम्बनं कारणं यस्य तत्तथोक्तम्, तस्य भावस्तत्त्वम्, तदनुमानादित्यर्थः ।

§ उत्थानप्रत्यय इति· उत्थानसमनन्तरमुत्पद्यमानो निर्विकल्पप्रत्यय इत्यर्थः· तथा च
प्रयोगः-यः सत्प्रत्ययः स स्वविषयविपरीतजन्यः, यथा सविकल्पकप्रत्ययः, सत्प्रत्ययश्चायमिति
तत्त्व० ।

१३ ६ मा भूत्कारणमिति चेनदाह अकारणस्य कादाचित्कस्येति । तस्माच्छून्यालम्बनो ऽसदवभासो ऽयमिति ।

विप्रतिपत्त्यन्तरमाह अस्ति देहादिव्यतिरिक्त इति । कथं पुनर्वि-
,, ८ ज्ञानशून्यव्यतिरिक्तस्यात्मनः सिद्धिरिति तदाह अहमुल्लेखशून्यस्य भोक्तृत्वस्येति । अयमाशयः । अहमित्यवभासमानो विषयसंविदाश्रयत्वेन भोक्ता न कदाचिदपि ममप्रत्ययालम्बनो भोक्तृत्वमनुभवति । स चा ऽबाधितप्रत्यभिज्ञागोचरो न सुषुप्ते ऽभावमनुभवितुमर्हति । ततः शून्यक्षणिकविज्ञानव्यतिरिक्तो भोक्ता प्रत्यभिज्ञया सुषुप्तेपि सत्तावगमात् । ज्ञानेच्छाद्वेषप्रयत्नसुखदुःखेषु चाश्रयैकत्वावगमात् । तथाहि । प्रवृत्तिनिमित्तभूतमभिलषितसाधनज्ञानमुत्पद्यमानमित्थमुत्पद्यते । प्रथमं वस्तुनि दृष्टे तदुपभोगानन्तरं सुखसंवेदने च द्वितीये संजाते पुनर्वस्त्वन्तरदर्शने तृतीये समुत्पन्ने चतुर्थे च दृष्टस्य वस्तुनः पूर्वसुखसाधनसामान्यानुसंधाने पञ्चम्यामवस्थायामिदं सुखसाधनमिति ज्ञानमुत्पद्यते । ततः पञ्चस्वऽवस्थास्वेकमात्मानमन्तरेणेदं ज्ञानमनुपपन्नम् । अन्यदृष्टे ऽन्यस्य सुखानुभवाभावादन्यानुभूतेन्यस्य व्याप्त्यनुसंधानाभावादन्यानुसंहिते ऽन्यस्य सुखहेतुज्ञानाभावात् संतानभेदेष्वदर्शनात् । तथा दुःखहेतुताज्ञानमपि पञ्चावस्थमात्मानं कल्पयति । तथा हिताहितज्ञानपूर्वकौ रागद्वेषौ षष्ठावस्थौ षडवस्थमात्मानं कल्पयतः । रागद्वेषाभ्यां च हानोपादानप्रयत्नो जायमानः सप्तावस्थमात्मानं कल्पयति । तथा प्रयत्नानन्तरमष्टम्यामवस्थायां सुखदुःखे जायमाने अष्टावस्थमात्मानं कल्पयतः । नच क्षणिकेष्वात्मसु संतानभेदेष्विवायं व्यवहारः सम्भवति । तथा नाहं ज्ञानमित्यहमुल्लेखो विज्ञानेषु किं तु मम ज्ञानमिति । नच ममात्मेतिवदुपचारः बाधाभावात् । इतरत्र संबन्धप्रत्ययस्यात्मशब्देन बाधात् । तस्मादहमुल्लेखप्रत्यभिज्ञाभ्यां * शून्यविज्ञानव्यतिरिक्त आत्मा । तथा ताभ्यामेव हेतुभ्यां मनोपि नात्मा । सुषुप्ते मनसो ऽभावेप्यात्मनि प्रत्यभिज्ञानात् । अहं मन इत्यनवगमान्मे मन इति च प्रतिभासात् ज्ञानायौगपद्येन करणतयैव तस्य कल्पनात् । तथा ताभ्यामेव हेतुभ्यां नेन्द्रियाण्यप्यात्मानः । रूपर-

* शून्यविज्ञानभेदव्यतिरिक्त इति १ पु॰ ।

सादविज्ञानपञ्चके द्रष्टुः प्रत्यभिज्ञानात् । स्वप्ने चक्षुरादिव्यवहाराभावेप्यहमित्यात्मनि परिपूर्णप्रत्ययात् । ममेन्द्रियाणीति चावगमादिन्द्रियाणामहमुल्लेखव्यतिरेकात् । तथा शरीरमपि नात्मा । स्वप्ने शरीराकारावभासाभावेप्यहमित्यात्मनि परिपूर्णप्रत्ययादहमुल्लेखव्यतिरेकात् । शरीराकारसंसर्गशून्येप्यहमिति द्रष्टरि प्रत्ययः शरीरादात्मनो भेदे प्रत्यक्षप्रत्ययो भवति । मम शरीरमिति च व्यतिरेकप्रत्ययात् । नन्वहं काणोहं मनुष्य इति च शरीरेन्द्रियेष्वहमुल्लेखादुपचारो भेदप्रत्ययः । अहमुल्लेख एवोपचारः किं न स्यात् । कस्तर्हि निर्णयः । अहमुल्लेखस्यै*वोपचारो युक्तः व्यतिरिक्तेप्यात्मन्यध्यासनिबन्धनत्वोपपत्तेः । नचाध्यासाद् द्विचन्द्रादिवद्भेदप्रत्ययः । द्वितीयेपि चन्द्रे चन्द्राकारवत् स्वप्नेपि पशुरहमिति प्रतिभासे मनुष्यशरीराद्याकारप्रत्ययप्रसङ्गात् । तथा जातमात्रस्य जन्तोर्भयहर्षशोकादिरुत्पद्यमानो दृष्टनिमित्ताभावे ऽस्मदादिवत्पूर्वानुभूतनिमित्तानुस्मृतिं कल्पयति ततश्चास्यैवात्मनो भयादिनिमित्तदर्शनवत्तया पूर्वजन्मसंबन्धसिद्धिः प्रत्यभिज्ञानात् । तदेवमहमुल्लेख† प्रत्यभिज्ञाभ्यां शरीरेन्द्रियमनोबुद्धिशून्यव्यतिरिक्त आत्मा सिद्धः ।

ननु स्थायित्वेपि कदाचिदभावः स्यात् । न तावत्परतो विनाशः । निरवयवस्य हेतूपरागाभावात्स्वसंसर्गिणश्च स्वकर्मफलसाधनतयोपात्तस्य फलहेतुतया ऽऽत्मनः स्थितिहेतुत्वादविनाशकत्वात् । नापि स्वत इत्याह स्थिरस्य चावधिहेतुत्वानुपलब्धेरिति । स्वहेतुनाप्रयुक्तविनाशहेतुत्वानुपपत्तेः १३ ९ क्षणिकस्यैव तद्भावादित्यर्थः । कथं पुनरस्य कर्तृत्वभोक्तृत्वे इति तत्प्रतिपादयति निर्विकारस्य भोगासंभवादित्यादिना । कथं पुनस्तद्व्यतिरिक्तत्वमिति स्पष्टार्थः । ,, १३

‡ तत्र नैयायिका मन्यन्ते । पार्थिवाऽऽप्यतैजसवायव्यानि भूम्यन्तरिक्षस्वर्गब्रह्मलोकेषु व्यवस्थया शरीराणि नाऽनेकैर्भूतैरेकं शरीरमारब्धमिति । नचास्मदादिशरीरं पार्थिवमेव पार्थिवगुणान्तरोपलब्धेरित्यक्षपादसूत्रात् । शरीरे गन्धविशेषोपलब्धेरित्यर्थः । नच रूपरसस्पर्शा भूतान्तरसमवायं गमयन्ति पार्थिवस्यापि तेषां गुणत्वात् । ननु क्लेदनपाचनव्यूहनावकाशानां शरीरे

* एवकारो ऽत्र नास्ति १ पु० । † प्रत्ययाभ्यामिति ३ पु० । ‡ अत्र नैयायिका इति ३ पु०

दर्शनाद् भूतपञ्चकारब्धत्वं शरीरस्येति । न । दृतिवस्त्रोदकादिवद्भूतान्तर-संयोगादपि व्यूहनाद्युपपत्तेः । श्रुतिश्च पृथिवीं शरीरमिति पार्थिवत्वमेव शरीरस्य दर्शयति । वैशेषिकास्तु प्रत्यक्षाप्रत्यक्षवृत्तेरप्रत्यक्षत्वात्पञ्चात्मकं न विद्यत इति । वाय्वाकाशयोरप्रत्यक्षत्वात् पञ्चात्मकं शरीरमप्रत्यक्षं स्यात् ।

१३ १४ तस्मात्पार्थिवमेव शरीरमिति कल्पयन्ति । तान्प्रत्याह भूतसंघातस्तावच्छ-रीरमिति । वस्त्रे क्लेदनस्य जले पाकस्य दृतौ व्यूहनस्य जलाग्निपव-नविगमादपायेपि वस्त्रादीनामपचयादर्शनाच्छरीरस्य च जलादिविगमे तन्त्व-पचयात्पटापचयवदपचयदर्शनात्सर्वतन्त्वारब्धपटवत्सर्वभूतारब्धं शरीरमिति गम्यते । अन्नमशितं त्रेधा विधीयत इत्यादिश्रुतिस्मृतिवादाश्च भूतपञ्चकं शरीरं कथयन्ति प्रत्यक्षाप्रत्यक्षवृत्तेरप्रत्यक्षत्वे सर्वावयविनां प्रत्यक्षाप्रत्यक्षाव-यववृत्तीनामप्रत्यक्षत्वापातः । तस्माद्भूतसंघातः शरीरमिति ।

अत्रावयव्यारम्भमनपेक्ष्य संघातमात्रस्य भोक्तृत्वाभावं दर्शयितुं विभ-जते तत्र व्यस्तानामिति । व्यस्तानां भोगेपि युगपत्क्रमेण वा भोगः । न तावद्युगपदित्याह यदि तावद्व्यस्तानामिति । तत्र दूषणमाह ततः स्वार्थप्र-युक्तत्वादिति । मा भूदङ्गाङ्गिभाव इत्यत आह न चाङ्गाङ्गिभावमन्तरेणेति । एकैकस्य भोक्तृत्वे संघातादन्यत्रापि भोगः स्यादित्याह तस्मान्न व्यस्तेषु भोग इति । अस्तु तर्हि क्रमः । ननु क्रमपक्षेपि भोक्तृणां न संघातापत्तिरिति तत्राह विरोधादुरगोष्ठीवदिति । परिहर्तुं दृष्टान्ताद् वैषम्यमाह नैतदेवमिति । दार्ष्टान्तिकं विभजते इह पुनरिति । अयमत्राशयः । यदि तावद्रूपरसगन्ध-स्पर्शानामन्यतमोपि चतुर्णां भोक्तृणां विषयः तदा साधारणे विषये क्रमभोगे कारणं नास्ति । यदि रूपादिषु प्रत्येकं भूतानां भोक्तृ* त्वविषयव्यवस्था † तदापि युगपत्सर्वविषयसन्निधाने क्रमानुपपत्तिः । यथैकस्मिन्मुहूर्ते प्रत्येकं भोग्यकन्यावस्तुनि सन्निहिते वराणां गुणप्रधानतया संघाताभावः तद्वत् । भोक्तृषु च प्रत्यभिज्ञानुपपत्तिरिति । अस्तु तर्हि समूहस्य भोक्तृत्वम् । नन्वे-

,, २१ कस्मिन् भूते अविद्यमानं चैतन्यं कथं संघाते जन्यत इति तदाह तिल-ज्वालावदिति । तत्र वक्तव्यम् । किं संहतानां भोक्तृत्वमाहोस्विद् भोक्तृणां सं-

* त्वप्रत्ययो नास्ति १ पु॰ । † तदपीति १ पु॰ ।

हृतिरिति। संघातस्यावस्तुत्वाद् भोक्तृत्वानुपपत्तेः वस्तुत्वेपि भूतेभ्यो भेदे पञ्चमतत्त्वाभ्युपगमप्रसङ्गात् अभेदे भूतान्येव संघात इति तेषामेव* भोक्तृत्वात् तत्र संहतानां भोक्तृत्वे संहतिहेतुर्वक्तव्यः। आगामी भोग इति चेत् तं प्रति भूतानां समानत्वाद् गुणप्रधानभावेन संघातानुपपत्तिरित्याह† नैतदेवम् ७३ २२ भोगेषु समूहाऽसम्भवादिति। ननु भोगान्वयात्प्राग् भूतानां कर्तृत्वात् कर्तॄणां भोगे गुणभावेन संघातोपपत्तिरिति चोदयति कथमसम्भव इति। अन्योन्यं गुणप्रधानत्वाभावाद्भोगं प्रत्यपि प्राधान्याद् भोक्तॄणां न संघात इति परिहरति भोक्तुर्भोगं प्रति प्राधान्यादिति। ननु भोगे शेषिणि तादर्थ्येन समूहो दृश्यत इति चोदयति ननु भोगेपीति। तत्र शरीरव्यतिरिक्तयोरेवात्मनोर्भोक्तोस्तादर्थ्येन शरीरयोर्गुणप्रधानभावेनान्वयो न भोक्तोरेवेत्यभिप्रेत्य परिहरति नैतत्सारमिति। ननु ज्वालायां तिलानां गुणभाववद्भोगे संघात इति‡ नेत्याह तिलज्वालायां तु विपरीतमिति। अत एव भोक्तॄणामेव संहतिपक्षो ऽनुपपन्नः। ,, २५

ननु कोऽयं संघातो नाम।§ न च वनवदेकदेशतामात्रम्। तद्व्यापिनां भूतानां सर्वत्र विद्यत इति सर्वत्र चैतन्यभोगयोः प्रसङ्गात्। नचावयव्यारम्भः। तस्य भूतेभ्यो भेदे तत्त्वसंख्यातिरेकात् अभेदे च भूतमात्रतया संघाताभावात् भेदाभेदानङ्गीकरणात्।‖ ननु स्वतन्त्रं भूतचतुष्टयमेव अवयव्यादीनां पारतन्त्र्यात्संख्या¶तिरेकाभावात्। तर्हि न भूतानां भोक्तृत्वम् किंत्ववयविन एव। तत्र भूतव्यापारानपेक्षया स्वयमेव भोक्तुरवयविनः परतन्त्रताऽभावात् संख्यातिरेकः स्यात् जलादेश्च पृथिव्यादितन्त्रत्वा** न्यूना च संख्या स्यात्। नचै††कद्रव्यबुद्ध्यालम्बनयोग्यतापत्तिः संघातः। अर्थस्वभावैनैकत्वापत्त्ययोगात् अनेकेष्वेकत्वबुद्धे‡‡र्भ्रमत्वात्। न चैकार्थक्रियायां युगपदन्वयः संघातः। काष्ठाश्रयेण वह्निना वायु§§समुद्धूतेन जले दह्यमानेऽपि संघाताद्भोगप्रसङ्गात्। नचान्ययःपिण्डवत्संश्लेषः संघातः। शरीरे वायोस्तयासं-

* भोक्तृत्वन्तस्येति २ पु०।
† नैतदेवमितीति ३ पु०।
‡ नेत्याह ज्वालायामितीति ३ पु०।
§ न च वनवदेकेति १ पु०।
‖ ननु भूतस्वतन्त्रभूतेति २ पु०।
¶ अतिरेकाभाव इति ३ पु०।
** न्यूना च तत्त्वसंख्येति १ पु०।
†† एकद्रव्यबुद्ध्यालम्बनेति १ पु०।
‡‡ विभ्रममात्रत्वादिति १, ३ पु०।
§§ समुद्धूतेनेति १ पु०।

श्लेषाभावात् वह्निव्याप्ते चायःपिण्डे* समापीतजले वायुसंयुक्ते च भोगप्रसङ्गात् । तस्मान्नास्ति भोगनिमित्तः संघात इति ।

१३ २५ एवं † तर्ह्येकस्यैव भूतस्य भोग इत्याह अस्त्वेकस्य तर्हि ‡ नियत इति । रूपरसगन्धस्पर्शेषु भोग्येषु कठिनमृदुपाकचलनगुणवति भूतसंघाते च भोगान्वयिनि परिदृश्यमाने कस्यैकस्य भोग इत्यनवधारितो भोगः स्यादिति § दूषयति न तच्चापीति । ननु यस्य कस्य चिद्भोगः स्यात्तावतैव शरीरव्यतिरिक्तभोक्तुरभावो विवक्षितः सिद्ध इत्याह किमवधारणेनेति । परिहरति यद्येवमिति । चतुर्णां भोगान्वयदर्शनाद् विशेषनिर्द्धारणाभावाच्चतुर्षु भोक्तृषु संघातानुपपत्तेरयुक्तं ‖ शरीरात्मकेषु भूतेषु भोक्तृत्वमिति । इन्द्रियाण्येव भूतात्मकान्यात्मेति ¶ लोकायतभेदाः तत्रोक्तं दूषणजातमतिदिशति एवं करणात्मकेष्वपीति । यद्येकैकभूतारब्धान्येकैकेन्द्रियाणि तत्र प्रत्यभिज्ञानाभावादयो दोषाः । यदि भूतचतुष्टयारब्धमेकैकेन्द्रियं ** तदा संघातानुपपत्त्यादयो दोषा

१४ ४ इति कार्यकरणात्मकः संघातो भोक्तेत्यन्ये लोकायतिकाः तत्राह तथोभयात्मक इति । प्रत्यभिज्ञा †† संघातानुपपत्तेरिति ।

ननु कानीन्द्रियाणि नाम । गोलकमात्राणीति ‡‡ सुगताः । तच्छक्तय इति मीमांसकाः । तद्व्यतिरिक्तानि द्रव्यान्तराणीत्यन्ये सर्वे । न तावद्गोलमात्रम् । सर्पादीनां तद्विरहिणामपि शब्दाद्युपलब्धेः । शरीरजैः कर्मदोषैर्याति स्थावरतां नरः तस्मात्पश्यन्ति पादपा इत्यादिशास्त्राद् वृक्षादीनां गोलकविरहिणां कर्मफलभोगस्थानतावगमेन शब्दाद्युपलब्ध्यभ्युपगमात् वृक्षादिहिंसाप्रतिषेधाच्च प्राणित्वावगमात् । अत एव न तच्छक्तयः । शक्तिमद्द्रव्यान्तरकल्पनाल्लघीयः प्रतिपन्नस्थानेषु शक्तिकल्पनमिति चेत् । तर्ह्या§§त्मन एव ‖‖ सर्वज्ञानसामर्थ्यं क्रमकारि कल्प्यताम् ¶¶ । सर्वगतस्याप्यात्मनः शरीरप्रदेशे ज्ञानपरिणामवद्गोलकप्रदेशेषु ज्ञानपरिणामाद्गोलकानां ज्ञानान्वयव्यतिरे-

* समापितजले-इति २, ३ पु० ।
† तस्यैकस्यैवेति २, ३ पु० ।
‡ नियतो भोग इतीति १ पु० ।
§ दूषणमाहेति ३ पु० ।
‖ कार्यात्मकेष्विति ३ पु० ।
¶ लोकायतभट्टा इति ३ पु० ।
** तत इति १ पु० ।
†† संघाताद्यनुपपत्ति १ पु० ।
‡‡ संगता इति १ पु० ।
§§ आत्मन एव विज्ञानसामार्थ्यमिति ३ पु० ।
‖‖ सर्वविज्ञानेति १ पु० ।
¶¶ लाघवादिति अत्राधिकमस्ति १ पु० ।

कोपपत्तेः । अनिन्द्रियत्वेपि शरीरवत्सन्तु तर्हीन्द्रियाणि गोलकव्यतिरिक्तानि शक्तिमन्ति द्रव्याणि स्थानविशेषसम्बन्धाच्चक्षुरादिशब्दवाच्यानि । न । तेषु प्रमाणाभावात् । रूपाद्युपलब्धय एव कर्तृव्यापाराः करणानुमाने लिङ्गमिति चेन्न । स्वव्यापार*कर्तृषु करणेषु करणान्तराभावादनैकान्तिकत्वात्करणविषये च† तत्प्रेरणालक्षणे कर्तृव्यापारे करणान्तराभावात् । सर्वे प्राणा अनूत्क्रामन्तीत्यागमगम्यानीन्द्रियाणीति चेन्न । आगमसंस्कारविरहिणामपीन्द्रियप्रतिपत्तेः । न च मनोवत्साक्षिवेद्यानीन्द्रियाणि ‡ कार्यभावाभावव्यतिरेकेणेन्द्रियभावाभावानवगमात् । तस्मान्न सन्तीन्द्रियाणि ।

उच्यते । आगमावगमात्प्राक् स्थानविशेषेषु चक्षुरादीन्द्रियव्यवहारः प्रवर्तते मण्डलादिष्वादित्यादिव्यवहारवत् । आगमावगतौ तु स्थानविशेषाधिष्ठातॄणि चक्षुरादीन्द्रियाण्यादित्यादि § देवतात्मवदित्यवगम्यते । तानि पुन ‖ र्व्यतिरिक्तान्यप्याहङ्कारिकाणीति सांख्याः । तदयुक्तम् । प्रमाणाभावात् । न तावद ¶ ध्यात्माहङ्कारजन्यानीन्द्रियाणीत्यन्वयव्यतिरेकावाऽऽगमो वा दृश्यते । नच कृत्स्नकार्यव्यापी भूतेन्द्रियाणां प्रकृतिः कश्चिदहङ्कारो विद्यते मानाभावात् । आप्रवचनं मानमिति चेत् । न । अतीन्द्रियत्वात् । ननु पुराणवाक्यान्येव सन्ति । सत्यम् । अन्नमयं हि सोम्य मन इत्यादिभूतविकारार्थे मयट्श्रुतिविरोधादहङ्काराधीनतामात्रमिन्द्रियाणान्तत्र कथ्यत इति न विरोधः ।

भौतिकानीन्द्रियाणीति वैशेषिकादयः । तदप्ययुक्तम् । मानाभावात् । भौतिकानीन्द्रियाणि मध्यमपरिमाणत्वेन सावयवत्वात् घटादिवदिति चेन्न । हेतोरसिद्धत्वात् अणुपरिमाणत्वोपपत्तेरिन्द्रियाणाम् । तर्ह्यणुपरिमाण एव विषयावभासः स्यात् । न । अणुपरिमाणेन मनसा विस्तृतात्मादिवस्तुदर्शनात् । ननु भौतिकानीन्द्रियाणि रूपरसगन्धस्पर्शानां नियमेनाभिव्यञ्जकत्वात्प्रदीपास्योदकहिङ्ग्वादिद्रव्य ** व्यजनवायुवदित्यनुमानान्तरेण प्रत्येकभूतारब्धानि प्रत्येकेन्द्रियाण्यनुमीयन्त इति । न । शब्दाभिव्यञ्जके श्रोत्रे शब्दगुणवदाका-

* कर्तृकरणेष्विति १ पु० ।
† तत्प्रेरणलक्षण इति ३ पु० ।
‡ कार्याभावाभावेति १ पु० ।
§ देवतात्मवदवगम्यन्त इति १ पु० ।
‖ र्व्यतिरिक्तान्यपीति नास्ति १ पु० ।
¶ अध्यात्ममहङ्कारेति १ पु ।
** व्यञ्जनवायुवदिति ३ पु० ।

णानारब्धेनैकान्तिकत्वात् कर्णशष्कुल्यवच्छिन्नाकाशमात्रस्य श्रोत्रत्वाभ्युपगमादनारब्धत्वात् । मनसश्च भूतचतुष्टयारब्धत्व * प्रसङ्गः तदभिव्यञ्जकत्वात् । आत्माकाशादीनामपि साधारणत्वान्मनसो न भूतारभ्यत्वमिति चेत्संख्यापरिमाणसंयोगविभागजातिविशेषसमवायादीनामपि साधारणत्वादिन्द्रियाणां न भूतारभ्यत्वसिद्धिः । असाधारणविषयारभ्याणीन्द्रियाणीति चेत्तर्ह्यात्मारभ्यं मनः स्यादसाधारणविषयत्वात् । एक † द्रव्यारभ्यं न द्रव्यमिति चेत् । ‡ न सावयवमनेक † द्रव्यारभ्यमित्येतावत् निरवयवं तु मनो निरवयवात्मारभ्यं किं न स्यात् । तस्मादागमादेव भौतिकत्वसिद्धिः ।

तानि § सर्वगतानीति योगाः प्रतिपेदिरे । तदपि मानहीनम् । आत्मेन्द्रियमनांसि सर्वगतानि सर्वत्रदृष्टकार्यत्वादाकाशवदिति चेन्न । हेतोरसिद्धत्वात् । यत्र शरीरं तत्र सर्वत्र दृष्टकार्यत्वादिति चे || च्छरीरे ऽनेकान्तः । परोपाधिगमनत्वादाकाशवदिति चेन्न । शरीरावयवानामपि परोपाधिगमनात्सर्वगतत्वे च ¶ युगपत्सर्वविषयोपलब्धिश्च स्यात् । शरीर एव वृत्तिलाभान्नेति चेत्तर्हि बहिरिन्द्रियसद्भावकल्पना न प्रमाणप्रयोजनवती ।

तान्यप्राप्यकारीणीति सुगताः । तदयुक्तम् । दूरत एव स्पर्शरसगन्धोपलब्धिप्रसङ्गात् । योग्यदेशावस्थान ** मपेक्षितमिति चेन्न †† इन्द्रियदेशप्राप्तिव्यतिरेकेण योग्यदेशानिरूपणात्स्पर्शरसघ्राणेन्द्रियवच्चक्षुःश्रोत्रयोरपि प्राप्यकारित्वमनुमीयते तेजसश्चातिदूरशीघ्रगमनदर्शनाच्चक्षुषो ध्रुवादिप्राप्तिरविरुद्धा । शब्दस्य च दूरदेशोपलब्धेर्न वीचीसन्तानवत्परम्परया श्रोत्रसमवायः । तस्माद्भौतिकानि परिच्छिन्नानि प्राप्यकारीणीन्द्रियाणीति सिद्धम् ।

किं तर्हि मनो नाम । ‡‡ नित्यं निरवयवमणुपरिमाणमिति वैशेषिका-

* प्रसङ्गादिति १ पु॰ । † द्रव्यारब्धमिति १ पु॰ ।

‡ ननु मनसो ऽकार्यत्वात्कथमारब्धत्वम्॰ नच हेत्वसिद्धिः, मनो ऽकार्यम् निरवयवद्रव्यत्वादात्मवदिति चेन्मैवम्॰ गुणवत्त्वादिलक्षणस्य द्रव्यत्वस्या ऽत्मन्यभावाद् दृष्टान्तस्य साधनविकलत्वम्, विशेषणासिद्धिश्चेति द्रष्टव्यम्–इति तत्त्व॰ ।

§ सर्वगानीति १ पु॰ । || शरीरेष्वनेकान्तः–इति १ पु॰ ।

¶ युगपदिति नास्ति १ पु॰ । ** अपत्तन्त इतीति १ पु॰ ।

†† इन्द्रियदेशव्याप्तिव्यतिरेकेणेति ३ पु॰ ।

‡‡ मनो नित्यं भावत्वे सति कारणशून्यत्वात् आत्मवत्॰ मनो निरवयवं मूर्त्तेना ऽप्रतिबध्यमानत्वात् गगनवत्॰ मनसो मध्यमपरिमाणत्वे स्थूलसूक्ष्मशरीरयोरविशेषेण वृत्तिर्न स्यात्॰ सर्वगतत्वे युगपज्ज्ञानोत्पादः स्यात्॰ तस्मादणुत्वमर्थ इति तत्त्व॰ ।

दयः संगिरन्ते । न तावन्नित्यम् * परिच्छिन्नत्वात् । निरवयवद्रव्यत्वादात्मवन्नित्यमिति चेन्न । † करणत्वेनेन्द्रियवत् ‡ सावयवत्वानुमानादन्नमयत्वश्रुतेश्च । मूर्तद्रव्यानभिघातान्निरवयवमिति चेन्न । मनसो बहिर्निर्गमनाभावादुत्क्रान्तिरिन्द्रियाणामपि समाना । संयोगविभागवत्त्वान्न घटादिवदणुपरिमाणता । सर्वगतत्वे च युगपत्सर्वेन्द्रियसंयोगात्सर्वज्ञानप्रसङ्गः । मध्यमपरिमाणत्वेन सावयवत्वेऽवयवोपचयापचय § सम्भवान्न स्थूलसूक्ष्म ‖ देहप्रतिपत्तिविरोधः । समनन्तरप्रत्यय एवोत्तरज्ञानकारणतया मन इति शाक्याः प्रतिपेदिरे । तन्न । ज्ञानस्य ज्ञानान्तरहेतुत्वे व्याप्तिसापेक्षत्वा ¶ च्छाब्दज्ञानमपि ** व्याप्तिजन्यमिति †† ते मतम् । ‡‡ विशिष्टज्ञानमपि संप्रयोगजन्यं न विशेषणज्ञानजन्यम् । §§ समनन्तरप्रत्ययादुत्तरस्य ज्ञानाकारलाभ इति चेन्न । वस्तुस्वभावस्यानन्याधीनत्वात् । तस्मात्सावयवमन्यदेव मन इति ।

कश्चायमात्मा । सर्वगतो जड इति केचित् । न तावत्सर्वत्र दृष्टकार्यत्वं सर्वगतत्वे हेतुरित्युक्तम् । ‖‖ व्यवहितदेशेऽदृष्टनिमित्तनृत्यादिक्रियारम्भात् तस्य चादृष्टवदात्मसंयोगापेक्षत्वात्सर्वगत इति चेन्न । अत्र समवेतादृष्टस्य स्वर्गे भोगोदयाददृष्टवत्प्रदेशासंयोगात् केवलात्मप्रदेशसंयोगस्य फलाहेतुत्वात् । तस्मादागमादेव सर्वगतत्वसिद्धिः । न च जाड्यम् स्वयंप्रकाशतावगमात् । प्रत्यक्षस्तावत्सुषुप्तेऽवभासः । अनुमानमपि स्वयंप्रकाशोऽय-

---

* मनोऽनित्यम् परिच्छिन्नत्वाद्घटादिवत् न च परमाणुषु व्यभिचारः, तदसंप्रतिपत्तेः न च मनो विभु सर्वदा स्पर्शरहितद्रव्यत्वात् कालवदित्यनुमानादऽपरिच्छिन्नत्वसिद्धिरित्यपि शङ्क्यम्, तस्मिन् व्यभिचारादित्यर्थ इति तत्त्व० ।

† करणत्वादिन्द्रियवदिति १ पु० ।

‡ मनः सावयवं द्रव्यत्वे सति करणत्वात् नयनवत् न च व्यर्थं विशेषणम्, नयनार्थसंनिकर्षस्य व्यावर्त्यत्वात् मनस्त्वं सावयववृत्ति मूर्तवृत्तित्वात् घटत्ववदित्यर्थ इति तत्त्व० ।

§ असंभवादिति १ पु० । ‖ देहवृत्तिविरोध इति ३ पु० । ¶ शब्दज्ञानमपीति २, ३ पु० ।

** व्याप्तिसापेक्षमिति १ पु० । †† ते मतम् ज्ञानजन्यविशिष्टज्ञानमिति १ पु० ।

‡‡ सुरभि चन्दनमित्यादौ विशेषणविशेष्ययोरेकेन्द्रियग्राह्यत्वाच्च विशिष्टज्ञानं संप्रयोगजन्यमिति चेन्नैवम्, तत्र विशिष्टस्य साक्षिवेद्यत्वोपगमात् विशेषणज्ञानसंस्कारसहितेन्द्रियसंप्रयोगाद्वा विशिष्टज्ञानजनिरित्यर्थ इति तत्त्व० ।

§§ अधिपतिसहकारिसमनन्तरप्रत्ययालम्बनप्रत्ययानुरोधाज् ज्ञानजन्मोपपद्यते तत्र चक्षुर्लक्षणाधिपतिप्रत्ययाज् ज्ञानस्वरूपं निष्पद्यते, आलोकलक्षणसहकारिप्रत्ययात्तत्स्पष्टता, आलम्बनप्रत्ययाद् घटाद्याकारता, पूर्वप्रत्ययाद् बोधाकारता जायत इत्यर्थ इति तत्त्व० ।

‖‖ "अयमर्थः—परसमवेतनृत्यादिक्रियया ऽन्यत्र सुखं तावज्जायते नचैतददृष्टानार्जितत्वे नृत्यक्रियाया एतत्सुखहेतुत्वम् एतददृष्टजन्यत्वं चैतत्सम्बन्धं विना ऽनुपपन्नमिति नापि विना ऽदृष्टवदात्मसंयोगादन्यत्र क्रियोत्पाद इत्यनुपपत्त्या सर्वगतत्वमिति तत्त्व० ।

मात्मा स्वसत्तायां प्रकाशव्यतिरेकाभावात्प्रदीपसंवेदनवत् । आत्मा स्वयंप्रकाशो विषयप्रकाशकर्तृत्वात्प्रदीपवत् । तथा आत्मा स्वयंप्रकाशो विषयप्रकाशाश्रयत्वादालोकवत् । अजन्यप्रकाशगुणश्चात्मा प्रकाशगुणत्वात् आदित्यादिवत् । आत्मा स्वयंप्रकाशः अनिन्द्रियगोचरत्वे सत्यऽपरोक्षत्वात्संवेदनवत् । आगमश्चात्र दर्शितः । स चैकः सर्वशरीरेषु सर्वत्राहमित्येकाकारप्रत्यक्षवेदनीयत्वात् गोत्ववत् । शरीरभेदादेवातीतशरीरादाविव न भोगानुसन्धानप्रसङ्गः । नचैकस्मिन्नपि परिमाणभेदात्प्रतिक्षणं शरीर * भेदो युक्तः प्रत्यभिज्ञाविरोधादननुसन्धानप्रसङ्गाच्च । ज्वालायां सूक्ष्म † दर्शने प्रत्यक्षत एव भेददर्शनात् । तस्मा-

१४ ४ देकः स्वयंप्रकाश आत्मेति सिद्धम् । तस्मादित्युपसंहारः ।

पक्षान्तरमाह भोक्तैव केवलमिति । कर्तृत्वं हि क्रियावेशः न च सर्वगतस्य निरवयवस्यात्मनः परिस्पन्दपरिणामलक्षणक्रियान्वयः सम्भवति । न च बुद्धेः कर्तृत्वमात्मनो भवति तादात्म्याध्यासाभावात् अख्यातिवादित्वात् । हेत्वन्तरमाह ‡ करोमि भुञ्जे जानामि चेति । अयमर्थः । चैतन्यवत् क्रियावेशोऽप्यात्मनः स्वभावधर्मश्चेत् आत्म § प्रतिभासं न व्यभिचरेत् । न चागन्तुको निरवयव ‖ द्रव्यस्य हेतूपरागेण कश्चिद्धर्म उत्पादयितुं शक्यत इति । नन्वात्मप्रतिभासव्यभिचारात्कर्तृत्ववत् भोक्तृत्वमपि न स्यादिति चोदयति ननु भोक्तापीति । परिहरति नैतदेवमिति । दृश्यावभासमात्रं भोक्तृत्वं न सुखदुःखान्वयः । ततश्चावस्थात्रयेपि दृश्यावभासव्यभिचाराभावाद् भोक्तैव केवल इति ।

पक्षान्तरमाह अस्ति तद्व्यतिरिक्त इति । भाष्यं ¶ व्याचष्टे तस्मादपि देहादिव्यतिरिक्तादन्यः सिद्ध ईश्वर इत्युत्तरेण सम्बन्धः ।

,, १३ अथेश्वरे वैशेषिकानुमानं दर्शयति शरीरिणां मनसापीत्यादिना । विवादगोचरापन्नं ** भूतभौतिकलक्षणं तनुभुवनविरचनकार्यं स्वरूपोपादानसंप्रदानप्रयोजनोपकरणादिविषयविज्ञानवत्कर्तृपूर्वकं विविधविन्यासरूपकार्यत्वा-

---

* भेद इति युक्तमिति १ पु० । † दर्शनेनेति १ पु० ।

‡ करोमि जानामि भुञ्जे चेतीति १ पु०, करोमीतीति ३ पु० ।

§ प्रतिभावत्वेति शोधितं १ पु०, प्रतिभासवद् नेति ३ पु० ।

‖ द्रव्ये-इति १ पु० । ¶ व्याचष्टे तस्मादपीति तस्मादपि देहेति १ पु० ।

** भूतभौतिकादिलक्षणभुवनरचनाकार्यमिति ३ पु० ।

त्प्रासादादिवदिति । कल्पना* लाघवेनैककर्तृकत्वोपादानात्सर्वज्ञत्वादिसिद्धिरिति । सांख्ययोगा†नुमानं दर्शयति सातिशयानां काष्ठाप्राप्तिरिति । ७४ १५
विवादगोचरापन्ना ज्ञानैश्वर्यशक्तयः क्वचित्सर्वविषयज्ञानैश्वर्यशक्त्यऽविनाभूताः तरतमभावेनोत्कृष्यमाणविषयव्यापिधर्मत्वात् स्वविषयदेशव्यापिपरिमाणधर्मवदिति काष्ठावाप्तिरसर्वविषयत्वेपि सम्भवतीति सर्वविषयमिति वेत्युक्तमनुमाने तथैवदर्शितत्वात्सदासिद्ध ईश्वर इति नैयायिकाद्यनुमानं दर्शयति विवादगोचरापन्नानि धर्माधर्मफलानि कर्मतत्फलसंप्रदानोपकरणादिविज्ञानवता प्रदीयमानानि व्यवहितकर्मफलत्वात् सेवादिफलवदिति । तस्मात्सिद्ध ईश्वरः ।

ननु प्रत्यगात्मनो विप्रतिपत्त्यालम्बनस्य सम्बन्धितया स्कन्धभेददर्शनं विप्रतिपत्तिः । न च व्यतिरिक्त ईश्वरः प्रत्यगात्मनो विशेषस्कन्धः । अतो ऽसौ न शरीरादिवत् स्कन्धविशेषतया प्रतिपादनीय इति चोदयति नन्वहमिति सर्वो लोक इत्यादिना । उच्यत इत्यादिपरिहारस्यायमर्थः । ब्रह्म हि विप्रतिपत्त्यालम्बनम् । तच्च प्रत्यगात्मव्यतिरिक्तमव्यतिरिक्तं वेति विप्रतिपत्तिं दर्शयितुं व्यतिरिक्तेश्वरपक्षोपि दर्शनीयः । किमिति तर्ह्यात्मनि विप्रतिपत्तिः प्रदर्श्यत इति तदाह अहंप्रत्ययविषयविप्रतिपत्त्यापीति । किमिदमुक्तं भवति । प्रत्यगात्मा तावत्प्रमाणान्तरेणोद्दिश्य शरीरेन्द्रियमनोबुद्धिशून्यकर्तृ‡त्वभोक्तृत्वादिविशेषपर्युदासेना§द्वितीयज्ञानानन्दस्वभावेन प्रतिपाद्यते । एवंप्रतिपादने संसारनिवृत्तेः पुरुषार्थलाभाच्च । अतः प्रत्यगात्मा सर्वज्ञत्वादिगुणकाद् ब्रह्मणो ऽन्यो ऽनन्यो वेति विप्रतिपत्तिं दर्शयितुं तद्व्यतिरिक्त ईश्वरः साधितो विप्रतिपत्तिस्कन्धत्वात् । ,, २१

अत्र कश्चिदाह ।‖ नेह प्रत्यगात्मा ऽसाधारणस्वभावविवक्षया ब्रह्मशब्देन जिज्ञास्यत्वेनोद्दिश्यते किन्त्वीश्वर एव ब्रह्मशब्देनोद्दिश्य विचार्यते जन्मादिसूत्रे जगत्कारणत्वलक्षणाभिधानात् । न हि प्रत्यगात्मन्येतल्लक्षणमुपपद्यते । तस्मादात्मविप्रतिपत्तिप्रदर्शनमसमञ्जसमिति । उच्यते ।

* लाघवात्कर्त्रेकत्वेति १ पु० ।
† अनुमाने-इति १ पु० ।
‡ अयं त्वप्रत्ययो नास्ति २, ३ पु० ।
§ अद्वितीयेन ज्ञानानन्देति २, ३ पु० ।
‖ नहीति १ पु० ।

यदि ब्रह्मशब्देनेश्वरोऽभिधीयते किमिति तर्हि जगत्कारणे विप्रतिपत्तिं * दर्शयसि प्रधानमेके परमाणूनपर इत्यादिना । नहीश्वरेऽर्थान्तरे जिज्ञासाकर्मणि ब्रह्मशब्दोपादानेऽर्थान्तरे जगत्कारणे विप्रतिपत्तिर्युक्ता दर्शयितुम् । जगत्कारणादीश्वरस्याभिन्नत्वात्तद्विप्रतिपत्ति † रीश्वरविप्रतिपत्तिरिति चेत् । तर्हीश्वरः प्रधानं परमाणुर्वेति विप्रतिपत्तिर्दर्शिता स्यात् । न तथा संशेरते जनाः । युज्यते तु प्रत्यगात्मनो ब्रह्मशब्दाभिधेयविशेषस्वरूपस्य शरीरेन्द्रियादिषु संशयः तेषामात्मनि तादात्म्या ‡ वभासात् । किञ्च । प्रत्यगात्मानमुद्दिश्य तस्य विशेष § स्वरूपे ब्रह्मणि जिज्ञास्यमाने यज्जगज्जन्मादिकारणं तद् ब्रह्मेत्युक्ते विधूतशरीरादिभेदः प्रत्यगात्मा जगत्कारणतया सर्वात्मभूतः प्रतिपादितो भवति। जगत्कारणे तु विप्रतिपद्यमाने किं तज्जगत्कारणमिति वीक्षायां यद् ब्रह्म तज्जगत्कारणमिति ब्रह्मोद्देशेन जगत्कारणत्वं विधेयं स्यात् न जगत्कारणमुद्दिश्य ब्रह्मविधानमिति वैपरीत्यमापद्यते । ब्रह्मशब्देन जगत्कारणमभिधीयत इति चेन्न ईश्वरोऽभिधीयत इति स्ववचनेन विरोधात् । किञ्च । ईश्वरे जगत्कारणे प्रतिपादिते पुरुषस्य किमायातम् । उपासनमिति चेन्न । आरोपितरूपेणापि सम्भवात्प्रतिपादनवैयर्थ्यात् । तस्मात्प्रत्यगात्मानमुद्दिश्य तस्य वेदान्तविहितब्रह्मशब्दा ‖ भिधेयबुभुत्सायां यज्जगज्जन्मादिकारणं सत्यज्ञानानन्दादिलक्षणं तत्प्रत्यगात्मभूतं ब्रह्मेति प्रतिपादयितुमात्मनि विप्रतिपत्तिप्रदर्शनं युक्तमिति जगत्कारणे विप्रतिपत्तिः संप्रदायपरिचयशून्यतया शास्त्रार्थप्रद्वेषात्सर्वसङ्करवादिना दर्शितेति ।

७५ १ पक्षान्तरमाह आत्मा स भोक्तुरित्यपर इति । यथा ¶ सत्यज्ञानानन्दं निरवयवं ब्रह्म प्रत्यगात्मापि तथा । तच्च विवादगोचरापन्नो जीवो ब्रह्मैव सन्नुपाधिपरिच्छिन्नविभागः ब्रह्मणा समानस्वभावतया निरवयवद्रव्यत्वे सत्युपाधिपरामर्शाधानपरिच्छेदप्रतिभासत्वात् यद्येन समानस्वभावतया निरवयवद्रव्यत्वे सत्युपाधिपरामर्शाधीनपरिच्छिन्नप्रतिभासं तत्तदात्मकत्वे सत्युपाधिपरिच्छिन्नभेदं दृष्टम् यथा घटाकाशमिति भाष्यं व्याचष्टे योऽयमिति । ननु संसा-
,, २ रिणः कथमसंसारिणैकत्वमिति तत्राह तस्याहंप्रत्ययसिद्ध इति । नन्वहमिति

---

* दर्शयतीति २, ३ पु॰ ।
† ईश्वरे विप्रतिपत्तिरिति १ पु॰ ।
‡ अवभासनादिति १ पु॰ ।
§ स्वेति नास्ति २, ३ पु॰ ।
‖ अभिधेयबुभुत्सया–इति १ पु॰ ।
¶ चशब्दोऽत्राधिकः १ पु॰ ।

सामान्यतःप्रतिपन्नस्य शरीरादिविशेषमिथ्यात्वे परमार्थभूतो विशेषो वक्तव्यो ऽहमित्यंभूत इति । तदाह परमार्थतस्त्विति । अहं ब्रह्मैवेति विशेषोप- १५ ३ संहारो न शरीरादीत्यत्र किं प्रमाणमिति * तदाह एवमसौ † बृंहत्यर्थान्वया-दिति । ननु जीवेभ्यो ‡ भेदेपि बृंहत्यर्थलाभो देशकालव्याप्तित्वादिति तदाह इतरथा तद्रूपविकलस्येति ।

उपसंहरति § एवं बहव इति । किञ्चित् शरीरादि ब्रह्मेति प्रत्य-गात्मेति विप्रतिपन्ना इत्यर्थः । ननु न विप्रतिपत्तिमात्रात् ‖ जिज्ञास्यं भवति किन्तु प्रमाणयुक्तिमूला हि विप्रतिपत्तिर्निराकर्तव्येति तत्रोत्तरम् युक्तिवाक्ये-त्यादि भाष्यम् तद्व्याचष्टे ¶ युक्तिं प्रमाणानामित्यादिना । कस्मिन्पक्षे युक्ति-वाक्ये क्व वा ** तदाभासा इति विभजते युक्तिवाक्याभ्यामन्त्यं पक्षं निश्चि- ,, ५१ तवन्त इति । ननु यथा बृंहत्यर्थान्वयाद्युक्तिवाक्याभ्यां च ब्रह्मैव भोक्ता तथा सुखदुःखतत्साधनप्रपञ्चोपि ब्रह्मैवेत्यऽपुरुषार्थतया न जिज्ञास्यं ब्रह्म स्यात् । नहि कतिपयसुखदुःखतत्साधनसंसर्गमप्यसहमानो निखिलदुःखादिम-त्तामङ्गीकुर्य्यात् । ननु †† वक्ष्यमाणेन ज्ञानानन्दादिलक्षणेन पुरुषार्थतया जिज्ञा-स्यमेव किन्न स्यात् । न ‡‡ तुच्छनिवृत्तिसाधनतया पुरुषार्थे ऽपि विषमिश्रितेन्ने ऽन-र्थहेतुतया प्रेक्षापूर्वकारिणामुपेक्षादर्शनात् । न लिप्यते लोकदुःखेन बाह्य इत्या-दिशास्त्रान्नापुरुषार्थतेति चेन्न । आत्मैवेदमित्यादिसर्वतादात्म्यश्रुतेरुपादानका-रणत्वाच्च । सर्वज्ञतया ऽज्ञानमिथ्याज्ञानाभावान्नानर्थसम्बन्ध इति चेन्न । तत्त्वत एव प्रपञ्चतादात्म्यादज्ञानाद्यनपेक्षणात् । कर्म्मनिमित्तः सुखदुःखादिसम्बन्धस्त-दभावान्न ब्रह्मण्यनर्थ इति चेन्न । कर्म्मव्यतिरेकेणापि स्वभावादेवाखिल §§ सुख-दुःखादितत्साधनानां स्वान्वयितया ब्रह्मणोऽपरोक्षत्वात्कर्म्मादीनामपि तात्प-र्यमात्रहेतुत्वात् । न हि ‖‖ दुःखाद्यपरोक्षत्वव्यतिरेकेण संसारो ऽन्यो दृश्यते । क-र्म्माविद्यादीनामपि बृंहत्यर्थान्वयादेव ब्रह्मणि तादात्म्यात्तन्निमित्तोपि संसारः सुतरामुपपन्न इति । ¶¶ ब्रह्मणि तत्त्वज्ञानेन बाधितत्वान्नानर्थसम्बन्ध इति

* तदाह एवमसावितीति ३ पु० । † बृहतीत्यनुस्वाररहितः पाठः प्रायः पुस्तकेषूपलभ्यते ।
‡ भेदे ऽपि तर्हि बृहत्यर्थेति ३ पु० ।
§ सर्वमितीति ३ पु० ।
‖ जिज्ञास्यं न भवतीति अत्र नकारः ३ पु० ।
¶ युक्तिवाक्येत्यादिनेति ३ पु० ।
** तदाभासावितीति ३ पु० ।
†† वक्ष्यमाणज्ञानेति ३ पु० ।
‡‡ तुच्छनिवृत्तिसाधनपुरुषार्थ इति २, ३ पु० ।
§§ सुखेति नास्ति २ पु० ।
‖‖ दुःखाद्यपरोक्षेति १ पु० ।
¶¶ ब्रह्मण इति १ पु० ।

चेन्न। प्रपञ्चात्मभावस्यापि तात्त्विकत्वात्। न च कारणाकारणब्रह्मभेदेन कार्यकारणब्रह्मभेदेन वा* संसारविमुक्तिव्यवस्था बृहत्यर्थान्वयाभावप्रसङ्गात्। तस्माद् बृहत्यर्थान्वयेनाऽद्वितीयसर्वज्ञत्वजीवत्वाद्युपगमेनाऽजिज्ञास्यं† ब्रह्म प्राप्तम्।

उच्यते। सत्यपि सर्वस्यापरोक्षतया ब्रह्मसम्बन्धे‡ मायानिमित्ततया प्रतिबिम्बश्यामत्वादिवन्मायाविगत§ व्याघ्रत्वादिवच्च तत्त्वज्ञानेन बाधितत्वाद्विम्बस्थानीयब्रह्मणो नित्यसर्वज्ञतया तत्त्वज्ञाननियमान्न तत्रात्मानुबन्ध इति। विशुद्धिवाक्यानामेव च बलवत्तरत्वं वक्ष्यामः। ‖ युक्तिवाक्याभासमूलता कस्येति

१५ १८ तदाह इतरे तु युक्तय इवेत्यादिना। कथं पुनर्युक्त्याभासता शरीराद्यात्मभावस्येति तदाह युक्त्याभासत्वमिति। ननु नैवतावता युक्त्याभासत्वसिद्धिर्देहादिष्विति तत्राह इतरेषां च युक्त्याभाससिद्धत्वमिति। किञ्च। दर्शिता एव युक्त्याभासाः न तत्रान्यापेक्षेत्याह दर्शितं च लेशत इति।

ननु स वा एष पुरुषोऽन्नरसमयः स वा अयमात्मा ब्रह्म पृथिवीमय आपोमयस्तेजोमयो वायुमय इत्यादीनि ¶ शरीरात्मवादे वाक्यानि ते ह वाचमूचुः तेभ्यो वागुद** गायदित्यादीनीन्द्रियात्मवादे मन उदगायदिति मनोवादे कतम आत्मेति योऽयं विज्ञानमय इत्यादि विज्ञानवादे असद्वा इदमग्र आसीत् असदेवेदमिति शून्यवादे अनुमन्ता बोद्धा कर्ता विज्ञानात्मेति कर्त्रात्मवादे तयोरन्यः पिप्पलं स्वाद्वत्तीति बुद्धिविषयत्वादनश्नन्नन्य इति भोक्त्रात्मवादे य आत्मनि तिष्ठन्नात्मानमन्तरो यमयतीति ।। व्यतिरिक्तेश्वरवादे वाक्यानि विद्यन्ते कथं निर्मूलता

,, १६ पक्षान्तराणामिति तत्राह ‡‡ वाक्याभासतां त्विति। नन्वेवमपि यस्य यस्मिन्

* संसारविशुद्धिव्यवस्थेति १ पु०।
† उपगमेन जिज्ञास्यमिति १ पु०।
‡ सम्बन्धमायेति १ पु०।
§ व्याघ्रादिवदिति ३ पु०।
‖ युक्तिवाक्यानां समूलतेति १ पु०।
¶ मन्तीति अत्राधिकं १ पु०।
** उदगायदितीन्द्रियेति ३ पु०।
।। व्यतिरिक्तात्मवाद इति १ पु०।

‡‡ वाक्याभासतां विनेति १ पु०। "अयमर्थः-स्थूलबुद्धीनां देहव्यतिरिक्तात्मनि चित्तानवतारात्प्राकृतबुद्ध्यनुरोधेन स वा इत्यनेन देहस्यात्मत्वमुद्दिश्य रूपवत्त्यादिना तस्यानात्मत्वशङ्कायां तस्मादान्तरप्राणाद्यात्मत्वोपदेशपरम्परया पञ्चकोशविलक्षणात्मप्रतिपादने वाक्यस्य तात्पर्यं निर्धार्यते अनरुन्धत्यास्ताराया अरुन्धतीत्वमुपदिश्य मुख्याऽरुन्धती यथोपदिश्यते, तद्वदत्रापि। स वा अयमात्मेत्यादिष्वात्मनः पृथिव्याद्युपाधिकत्वं कथ्यते, न तद्विकारत्वम्, इतरथाऽस्थूलमित्यादिवाक्यव्याकोपात्। ते ह वाचमूचुरित्यत्र चाऽभिमानिनी देवतोच्यते न करणमात्रं प्रदीपादिवदाऽऽत्मत्वासंभवात्। कतम आत्मेत्यत्र तु सुगताभिमतं ज्ञानं न विवक्षितम्, नहि द्रष्टुर्दृष्टेरित्यादिना नाशप्रतिषेधात्। असद्वा इदमग्र आसीदित्यत्र त्वऽनभिव्यक्तनामरूपत्वात्सत्यत्राऽसच्छब्द प्रयुक्तः न निरुपाख्ये, तत्सदासीदित्यनेन विरोधात्। अनुमन्ता बोद्धेत्यत्र किं पारमार्थिकं कर्तृत्वमुच्यत उत

* कश्चिदुत्पद्यते स तं पक्षमाश्रित्य पुरुषार्थं साधयेत्किं विचारेणेति तत्राह तत्राविचार्य यत्किञ्चिदिति । भाष्यं व्याचष्टे तत्रैवं स्थित इत्यादिना । ननु ५७　१७
मा भूदन्त्यात्पक्षादर्वाचीनेषु पक्षेषु तत्त्वज्ञानाभावा† न्निःश्रेयसलाभः अनर्थः किमिति प्राप्यत इति तत्राह अनर्थं तमः प्रविशन्तीति । नन्वात्महननं तत्रा-नर्थहेतुरुक्तो न तत्त्वाप्रतिपत्तिरिति तत्राह अनात्मदर्शनेनात्मनो‡ऽसत्-कल्पत्वापादानरूपस्येति । सूत्रवाक्यार्थमुपसंहरति तस्माद् ब्रह्मजिज्ञासोप-न्यासमुखेनेति । भाष्यं व्याचष्टे ब्रह्मजिज्ञासोपन्यासव्याजेनेति । जिज्ञासापदे-नाऽन्तर्णीतं विचारमुपलक्ष्य तत्कर्तव्यतापरं सूत्रमित्युक्तं भवति । योजनान्तर-माह §अथ वेति । जिज्ञासा कर्तव्येत्युक्ते ज्ञानमिष्यमाणं साध्यतया कर्तव्यमिति सूत्रार्थः संपद्यते । तत्र ज्ञाने कर्तव्ये ऽप्यर्थात्तत्साधनकर्तव्यताप्यऽवगम्यते । अतोऽर्थसिद्धविचार‖ कर्तव्यतापरसूत्रमिति । किंप्रयोजनेत्यादिः स्पष्टार्थः ।

कथं पुनर्विचारस्य निःश्रेयसं प्रयोजनम् । ¶ विचारजन्यब्रह्मावबोध-साध्यत्वादिति चेत् । किं तन्निःश्रेयसम् । कर्तृत्वभोक्तृत्वदोषसंयोगाध्यासप्रवा-होपादानस्याऽज्ञानस्य निवृत्तिः । न । निवृत्तेप्यज्ञाने द्वैतदर्शनस्यानपायात् । न हि पृथिव्यादिप्रपञ्चः कर्तृत्वाद्यध्यासनिवृत्तिमात्रान्निवर्तते । उच्यते । सत्-स्वपि पृथिव्यादिष्वन्तःकरणाध्यासनिवृत्तौ प्रमातृत्वाभावादात्मचैतन्यस्य स्वतो विषयोपरागाभावाद् द्वैतदर्शनं न प्राप्नोति अनिन्द्रियस्येव रूपादिदर्शन-मित्येकः पक्षः । इतरस्तु सर्वद्वैत** निवृत्तिपक्षः समन्वयसूत्रे वक्ष्यते । तस्मा-न्निरस्तसकलकर्तृत्वाद्यध्यासमऽपाकृतद्वैतदर्शनमऽनतिशयानन्दप्रकाशमानब्र-ह्मस्वरूपावस्थानं निःश्रेयसं वेदान्तविचारस्य प्रयोजनमिति रमणीयम् ॥

इति चतुर्थं वर्णकम् ।

†† इति श्रीमत्परमहंसपरिव्राजका‡‡ चार्यानन्यानुभवपूज्यपादशिष्यस्य प्रका-शात्मभगवतः कृतौ पञ्चपादिकाविवरणे प्रथमसूत्रं समाप्तम् ॥

कान्यनिकम्· नाद्यः, मुक्त्यनुपपत्तेः· द्वितीयस्त्वङ्गीक्रियते, अनश्वरचित्यत्र परमार्थतः कर्तृत्वभावे सिद्धसाध्यता· आरोपितकर्तृत्वाद्यभावे ऽन्यस्य बन्धो ऽन्यस्य मुक्तिरिति वैयधिकरण्यात्· न च बुद्धिगतावेव बन्धमोक्षौ, आत्मनि बन्धादिप्रतिपादकश्रुतिस्मृतिविरोधात्· आत्मनि तिर्यक्त्वन्यादिभेदव्यपदेशस्य चौपाधिकभेदविषयत्वेनोपपत्तेरिति''–इति तत्त्व० ।

* बहुधा–इति अत्राधिकं १ पु· । † निश्श्रेयसभाव इति १ पु·, निश्श्रेयसालाभ इति ३ पु· ।
‡ असत्त्वान्यत्वापादनमितीति १ पु·, असत्कल्पत्वापादनेतीति ३ पु· ।
§ अयं चेतीति १ पु· । ‖ कर्तव्यतायां सूत्रेति १ पु· ।
¶ विचारजन्यं ब्रह्मावबोधेति ३ पु· । ** निवृत्तीति नास्ति १ पु· ।
†† चतुर्थं वर्णकं समाप्तमित्येतावन्मात्रं ३ पु· । ‡‡ आचार्यवर्येति १ पु· ।

जगज्जन्मस्थितिध्वंसा यतः सिध्यन्ति कारणात् ।
तत्स्वरूपतटस्थाभ्यां लक्षणाभ्यां प्रदर्श्यते ॥

जन्माद्यस्य यतः । वृत्तसङ्कीर्त्तनभाष्यस्यान्तर्णीतं विचारार्थोपादानेनार्थं कथयति ब्रह्म जिज्ञासितव्यमित्युक्तमित्यादिना । ननु ब्रह्मविचारप्रतिज्ञायां साधनादिविचाराणामप्रतिज्ञातत्वादसाध्यतेत्यत आह यदैवेद * मुक्तमित्यादिना । ननु पञ्चानां विचाराणां प्रतिज्ञातत्वे किमिति स्वरूपमेव प्रथमं विचार्यते । फलभूततया प्राधान्यादिति चेत् । न । साधनाद्यधीनत्वात्साध्यसिद्धेस्तेषामेव प्रथमं विचारः क्रियतामित्यत आह तत्र स्वरूपस्याभ्यर्हितत्वादिति । ब्रह्मप्रमाणं ब्रह्मयुक्तिर्ब्रह्मसाधनं ब्रह्मफलमिति विशिष्टविचाराणां ब्रह्मविशेषणसापेक्षत्वाद् ब्रह्मस्वरूपनिर्णयस्य चानन्यापेक्षत्वात्प्राधान्येन साध्यत्वाच्चेत्यर्थः ।

वृत्तं सङ्कीर्त्त्यानन्तरेणाकाङ्क्षापुरःसरं सम्बन्धमाह किंलक्षणं तदिति । जिज्ञास्यपुरुषार्थब्रह्मस्वरूपप्रदर्शननिमित्तमाचार्यं पूजयति भगवानिति । नन्वस्येद लक्षणमिदं वानेन लक्ष्यमिति लक्ष्यलक्षणयोरव्याप्त्यतिव्याप्तिपरिहारेणाऽविनाभावः प्रमाणयुक्तिव्यतिरेकेण न सिद्ध्यति तत्कथं स्वरूपलक्षणपरमेव सूत्रमिति तत्राह युक्तिरपि लक्षणनिर्णये ऽर्थादिति । अपिशब्दात् प्रमाणमपीत्यर्थः । अत्र च सूचितये ब्रह्मणि प्रमाणयुक्त्योरध्यायद्वयेन निर्णयः क्रियते । † जन्मोत्पत्तिरित्यारभ्य ‡ तृतीयलिङ्गेत्यतः प्राक्तनः स्पष्टार्थः । तद्गुणसंविज्ञान इति विशेष्यैकदेशमेव विशेषणं कृत्वा समास इत्यर्थः । नन्वेवमपि जन्मस्थितिभङ्गास्त्रयोऽपि विशेष्यास्तत्कथमेकत्वनिर्देश इत्यत आह तृतीयलिङ्गेति । जन्मादीनामादिमध्यावसानमाक्षिपति नन्वादिरिति । परिहरति जन्मनश्चादित्वमिति । भाष्यं व्याचष्टे यदनेन सूत्रेणेति । ननु सर्वं जनित्वैव नश्यति न किञ्चित्कालं तिष्ठति स्वसत्ताप्रयुक्तत्वाद्विनाशस्येत्यत आह क्षणिकत्वनिराकरणादिति । अतो जनित्वेत्यादिः स्पष्टार्थः । नन्विदंशब्दः किञ्चिदेव सन्निहितं गमयति नाखिलं जगदित्यत आह तथाहि सर्वेति । ननु

११ ४ जन्मादीनां जगतश्च कः सम्बन्धः षष्ठ्या § विवक्षित इति तदाह सर्वगर्वेति । ननु जगज्जन्मस्थितिभङ्गं किं सम्बन्धितया लक्षणं भवति । न

* उक्तमिति नास्ति १ पु० ।
† जन्मोत्पत्तीत्यारभ्येति ३ पु० ।
‡ तृतीयलिङ्ग इत्यतः प्राक्तनग्रन्थ इति १ पु० ।
§ विवक्ष्यत इति तत्राहेति ३ पु०

तावत्काकवल्लक्ष्यसम्बन्धितया । जगदाश्रयत्वाद्धर्माणामिति कारणसम्बन्धितयेत्याह यत इति कारणनिर्देश इति । ११

ननु जन्मादिकारणत्वमपि लक्षणान्तर्गतमाहोस्विल्लक्ष्यस्वरूपान्तर्गतमिति वक्तव्यम् । ननु गृहस्य काकाधिकारणत्वं नाम धर्म्मः कस्मिन्नन्तर्भवति । लक्ष्य इति चेत् । काकाधिकरणत्वं च गृहशब्दार्थः स्यात् ततश्च काकविगमे गृहैकदेशभङ्गबुद्धिः स्यात् । लक्षणान्तर्गतमिति चेत् । कारणत्वमपि तथा । नहि नानाविधकार्यक्रियावेशात्मकत्वं तत्प्रसवशक्त्यात्मक*त्वं वा जिज्ञास्यविशुद्धब्रह्मान्तर्गतं भवितुमर्हति । तस्मात् जगज्जन्मादिकारणत्वमेवोपलक्षणमिति ।

ननु निमित्तकारणत्वमुपादानकारणत्वमुभयं वोपलक्षणत्वेनोच्यते । न तावन्निमित्तकारणत्वमेव ब्रह्मोपलक्षणम् । जगदभिन्नस्योपादानकारणस्य भेदेनावस्थानाद् ब्रह्मशब्दस्य स्वार्थान्वयाभावप्रसङ्गात् । नाप्युपादानकारणत्वमुपलक्षणम् । निमित्तकारणस्य सर्वज्ञस्य भेदेनावस्थानाद् यतः सर्वज्ञात् सर्वशक्तेरिति व्यपदेशो न स्यात् उपादानकारणस्य लोके ऽचेतनत्वात् । सत्यं ज्ञानमनन्तमिति च स्वरूपलक्षणस्योभयथायोगात् । नाप्युभयकारणत्वं ब्रह्मोपलक्षणम् । एकस्योभयकारणत्वे प्रमाणाभावात् । † प्रमाणान्तरसिद्धं हि लक्षणमनधिगतलक्ष्यस्व‡रूपाधिगमायालम् । न तावदेकस्य जगन्निमित्तोपादानत्वमनुमानेना§वगन्तुं शक्यम् । दृष्टान्ते भेददर्शनात् । महाभूतपञ्चकव्यतिरिक्तेषु पदार्थेषु नानाविधनिमित्तोपादानदर्शनान्न तदनुवादेन ब्रह्म विधातुं शक्यम् । भूतपञ्चकनिमित्तोपादानत्वमेकस्याप्रसिद्धमिति तत्राह प्रकृतित्वनिबन्धना पञ्चमीति । निमित्तत्वस्याप्युपलक्षणमेतत् उभयत्र पञ्चमीविधानात् । भूतपञ्चकस्य तावदेका प्रकृतिरनुमीयते सद्वस्त्वेकस्वभावानुगमात् ।

|| तथाहि । महाभूतानि ¶ सद्वस्तुप्रकृतिकानि तत्स्वभावानुरक्तत्वे सति विविधविकारत्वान्मृदनुस्यूतघटादिवत् । द्रव्यत्वाद्यभेदा अपि प्रकृतिस्वभावा

---

* स्वप्रत्ययोऽत्र नास्ति १ पु० ।  † प्रमाणान्तरप्रसिद्धं हीति २ पु० ।

‡ स्वरूपायालमिति ३ पु० ।  § साधयितुं शक्यमिति ३ पु० ।

|| तथाहीति० महाभूतानि स्वानुगतोपादानानि भावत्वे सति विकारत्वात् घटादिवदिति विवक्षितम्० प्रध्वंसव्यावृत्त्यर्थं भावत्वे सतीत्युक्तम्० आत्मव्यावृत्त्यै विकारत्वादिति० विकारत्वं प्रतिपादयितुं विविधेत्युक्तम्० विविधत्वम्, विभक्तत्वमित्यर्थः० किं तदनुगतमुपादानमिति वीक्षायां सन् घटः सन् पट इति सदनुरक्ततया घटादेः प्रतीयमानत्वात्सदेवानुगतमुपादानमित्यभिप्रायेण सद्वस्तुप्रकृतिकानीत्युक्तमाचार्येणेति द्रष्टव्यमिति तत्त्व० । ¶ सद्वस्तुप्रकृतानीति २ पु० ।

एव सामान्यवद्ऽवभासन्ते सद्वस्तु पुनः सर्वानुगमात्सर्वविकारप्रकृतिः । भौतिकानां च भूतोपादानत्वं दृश्यमानं मूलप्रकृत्यधीनतामेव सर्वस्य गमयति । अतः सर्वकार्योपादानमेकमेव लाघवादिति न्यायानुगृहीतानुमानेन सिद्धम् । तस्यैव च निमित्तकारणत्वमनुमानेन कल्प्यते । तथाच इदं जगदभिन्ननिमित्तोपादानं भवितुमर्हति प्रेक्षापूर्वजनितकार्यत्वात् आत्मगतसुखदुःखरागद्वेषादिवत् । नच घटादिष्वऽनैकान्तिकता । तत्राप्यभिन्ननिमित्तोपादानत्वकल्पनात् । अदृष्टादिनिमित्तभेदो दृश्यत इति चेन्न । उपादानाधिष्ठात्रोरैकत्वानुमानात् । तस्मादनुमानेनै * व प्रसिद्धमेकस्योभयकारणत्वं लक्षणत्वेन निर्दिश्यते । सृष्टिवाक्यप्रसिद्धं चैकस्योभयकारणत्वं लक्षणत्वेन निर्दिश्यते ।

तत्र केचित्परिणामवादमवतारयन्ति तैस्तत्र प्रमाणं वक्तव्यम् । सृष्टिश्रुतय इति चेन्न । तत्र परिणामशब्दाश्रवणात् । सत्यतोऽन्यथाभावः परिणामो ब्रह्मणोऽपि सत्यतः प्रपञ्चापत्तिं † प्रतिपादयन्तीति चेन्न । तासु सत्यशब्दाश्रवणात् । स्वतःप्रामाण्यात्तथाभूतैव सृष्टिरिति चेत् । किमिदं तथाभूतत्वं नाम । सत्यत्वमिति चेन्न । मिथ्येदं रजतमिति विशिष्टेऽर्थे प्रमाणगम्ये स्वप्नसृष्टावपि सत्यबुद्ध्यभावात् । स्वोपाधौ ‡ स्वविषयाभावविरोधितेति चेत् । मायात्मकत्वेऽपि समानम् । सृष्टेश्च स्वोपाधावऽभावव्यावृत्तत्वात्सर्वे च सोपाधिकधर्म्माः स्वाश्रयोपाधावबाध्यतया सत्या भवन्ति सृष्टिरपि स्वरूपेण न बाध्यते किन्तु परमार्थसत्यत्वांशेन ।

ननु मिथ्यासृष्टिविषयत्वे वाक्यस्याप्रामाण्यं स्यात् । न तत् प्रमाणव्यापारानभिज्ञो देवानांप्रियः । प्रमाणं हि प्रमेयाभावं न सहते नाऽप्रमेयाभावम् । नच सृष्टिश्रुतिः परमार्थसत्यतां प्रमिमीते तदभिधानाभावात् । यथा घट इत्युक्ते भावाभावयोः साधारणोऽवभासते अन्यतराभिधानाभावात् । तद्वत् । न हि स्वप्नविषया सृष्टिश्रुतिस्तत्सत्यतां प्रतिपादयति । प्रयोजनशून्यतया तात्पर्यहीनत्वाच्च न ब्रह्मणः प्रपञ्चापत्तिं प्रतिपादयति अनर्थहेतुत्वाच्च दुःखतत्साधनपरिणामस्य । न च कर्मकाण्डस्य प्रत्यक्षादेर्वा सिद्धिः प्रयोजनम् । जगन्नित्यतयाप्युपपत्तेः । सृष्टिश्रुत्यवगमात्प्रागेव सिद्धत्वाच्च । अभेदस्यापि सत्त्वादिरूपेण सिद्धत्वान्न शब्दापेक्षेति चेत् । केयमतिव्याकुलता सर्वसंकरवादिनः ।

---

* एवकारो नास्ति ३ पु० । † प्रतिपादयन्तीति १ पु० । ‡ स्वशब्दोऽत्र नास्ति १, २ पु० ।

न हि नित्यशुद्धबुद्धमुक्तनिरतिशयानन्दप्रकाशमानं * सर्वज्ञाऽद्वितीयप्रत्यगात्मभूतं ब्रह्म ऽवगमात्प्रागेव सिध्यति । किं तर्हि सृष्टिश्रुतेः प्रयोजनम् । प्रत्यक्षादिसिद्धप्रपञ्चस्य ब्रह्मण्येवोत्पत्तिविनाशवत्तयान्यथाभावमुपवर्ण्य तथापि † प्रतिषिध्य मिथ्यात्वापादनेन प्रमाणान्तराविरुद्धतया ऽद्वितीयब्रह्मस्वरूपसिद्धिः प्रयोजनम् तेनैकवाक्यत्वात् अन्यथा शेषिविरोधात् । सृष्ट्याभासत्वाद्रजताभासवत्तज्ज्ञानस्याप्रामाण्यमिति चेन्न । सत्यरजतवन्मुख्यसृष्ट्यन्तराभावात् तस्या एव मुख्यसृष्टित्वात् तज्ज्ञानस्य मुख्यरजतज्ञानवत् प्रामाण्यात् । देवदत्तो व्याघ्रो भवन्माया ह्येषा मया सृष्टेत्यादौ मिथ्याकार्येपि तद्भावसृष्टिशब्दयोः श्रवणात् ।

कुतः पुनः सत्यमिथ्या‡साधारण्यां सृष्टौ मिथ्यात्वे पक्षपातः । नाऽसदासीन्नो सदाऽऽसीत्तम आसीत् आसीदिदं तमोभूतम् मायां तु प्रकृतिमित्यादौ सदसद्विलक्षणानिर्वचनीयप्रकृतित्वश्रवणात् तदात्मकत्वाच्च विकारस्य तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मन इति स्मृतेः तमोऽविद्यामायानां पर्यायत्वात् । तदेवं श्रुत्यवगतायां मिथ्यासृष्टौ सत्यत्वकल्पनायां श्रुतिबाधप्रसङ्गात् । तथाच अस्ति घट इत्यस्त्यर्थोपाधौ प्रतिपन्नस्य घटस्य तदुपाधावेव नास्तीति प्रत्यक्षेणैव बाधो दृश्यते देशकालयोर्देशकालान्तराभावात्तयो§र्द्वयोर्निरुपाधिकनिषेधात् अस्त्यर्थस्यानुयायिनो निषेधाभावात् । अतो देशकालतदुपाधिघटानामस्त्यर्थे ब्रह्मस्वरूपे प्रतिपन्नोपाधौ प्रत्यक्षेणैव बाधान्मिथ्यात्वसिद्धिः । एवं|| सर्वभावप्रत्ययगोचरे ब्रह्मणि स्वरूपोपाधावस्त्यर्थे कालाद्युपाधिभिः महाभावप्रत्यक्षेण बाधान्मिथ्यैवेति सिद्धम् । अन्याभावविशिष्टवस्त्वन्तरज्ञानस्य प्रत्यक्षत्वात् । अनुमानमपि । सर्वे विकाराः स्वानुस्यूत¶एकस्मिन्वस्तुनि परिकल्पिताः प्रत्येकमेकस्वभावानुविद्धत्वे सति विभक्तत्वाच्चन्द्रभेदवत् । जडत्वात् कार्यत्वात् **भेदत्वात् रजतवत् चन्द्रभेदवच्च । प्रतिपन्नब्रह्मोपाधावस्थूलादिवाक्यैः प्रतिषिध्यमानत्वाद्देहात्मभाववत् । विरोधिकारणस्वभावानुपमर्देन विरोधिकार्या-

---

* समासोऽत्र १, ३ पु० ।

† प्रतिषेध्येति २ पु० ।

‡ साधारण्यामित्येव तु पुस्तकत्रयेऽपि पाठः ।

§ द्वयोरिति नास्ति ३ पु० ।

|| सर्वस्वभावप्रत्ययेति २, ३ पु० ।

¶ समासोऽत्र ३ पु० ।

** भेदत्वादित्येव त्रिष्वपि पाठः ।

पत्तिलक्षणत्वात् मायाव्याघ्रवत् । प्रलयावस्थायां सहकालेन स्वोपाधौ शून्यत्वात् देहात्मभाववत् । अर्थापत्तिरपि । प्रपञ्चजन्मविनाशावनुपपन्नौ तस्य मिथ्यात्वमन्तरेण । अमिथ्याभूतयोर्ब्रह्मशून्ययो*रजन्मविनाशित्वात् । न च ब्रह्मज्ञानस्यापि प्रपञ्चज्ञानवन्मिथ्यात्वानुमानम् । तत्सत्यं स आत्मेतिवचनविरोधात् । न चास्थूलादिवाक्यैः स्थूलादिभ्यो ऽन्यत्वमात्रमुच्यते । कार्यकारणतादात्म्ये सत्येवंप्रतिषेधानुपपत्तेः । यथा शुक्लायां गव्यन्यत्वविवक्षायाम्†ऽशुक्ला गौरिति प्रतिषेधो न दृश्यते तथा च प्रतिषेधे शुक्लतास्वरूपमात्रनिषेधदर्शनात् । तर्काप्रतिष्ठानान्न मिथ्यात्वानुमानमिति चेन्न । विचारशास्त्रानारम्भप्रसङ्गात् । शब्दमूलत्वाद् ब्रह्मणि न विरोधबुद्धिरिति चेत् । तर्ह्यऽसद्वा इदमग्र आसीत्सदेव सोम्येदमग्र आसीदित्यादिश्रुतिद्वयसामर्थ्यात् कारणस्य सदसत्त्वे स्याताम् । श्रुत्यर्थस्य तर्कागोचरत्वात्सर्वशक्तित्वाद्ब्रह्मणः सर्वमुपपन्नमिति चेत् न । ब्रह्मणि विरोधपरिहाराय विचारानारम्भप्रसङ्गात् । अत एवा‡ऽसत्यतापि ब्रह्मणः कदाचित् किं न स्यात् । तस्मात्प्रत्यक्षानुमानार्थापत्तिभिः प्रपञ्चस्य मिथ्यात्वावगमात् प्रशान्तत्वाच्च ब्रह्मणो निष्प्रयोजना च §सृष्टिश्रुतिर्विवर्त एवेति । न च सद्बुद्ध्यनुगमविरोधः । अधिष्ठानत्वात्तस्य । घटादिविशेषाणामेव|| मिथ्यात्वादिति सिद्धम् ।

११ ७ लक्षणमनूद्य लक्ष्यस्वरूपं कथयितुमुत्तरं भाष्यमित्याह¶ अस्य जगत इति । ननु न तावदिदं विशेषणलक्षणम् । प्रपञ्चजन्मादिकारणत्वस्य प्रपञ्चोपाधित्वात् निरुपाधिकब्रह्मस्वरूपलक्षणकथनमन्तरेण सोपाधिकधर्मप्रतिपत्त्ययोगात् । नाप्युपलक्षणमेतत् लक्ष्यस्य ब्रह्मशब्दार्थत्वाऽयोगादवच्छेदादिति तत्राह **द्विविधं हि लक्षणमित्यादि । उपलक्षणत्वे††ऽपि नाद्वितीयस्वरूपलक्षणविरोधः यद्रजतमि‡‡त्यभात्सा§§ शुक्तिरितिवन्मिथ्याभूतेनापि प्रपञ्चकारणत्वेनोपलक्षणयोगात् । असाधारणसंबन्धो हि लक्षणनिमित्तम् न लक्षणसत्यत्वम्

,, १० काकादीनामसंबद्धानां|||| गृहोपलक्षणत्वदर्शनादिति । कार्यप्रपञ्चं केचिदिति ।

* अजन्मविनाशत्वादिति १ पु॰ । † ऽशुक्लो गौरिति २ पु॰ । ‡ शून्यतापीति ३ पु॰ ।
§ सृष्टिः श्रुतिरिति २ पु॰ । || मिथ्यात्वमितीति १ पु॰ । ¶ अस्येतीति ३ पु॰ ।
** द्विविधमितीति ३ पु॰ । †† उपलक्षणत्वं चेति २,३ पु॰, अपिघटितस्तुतत्त्वदीपनसंमतः ।
‡‡ इति शब्दो नास्ति ३ पु॰ । §§ शुक्तिकेतिवदिति ३ पु॰ ।
|||| गृहोपलक्षणत्वादर्शनादिति १ पु॰ ।

अयमर्थः । नामरूपकर्मात्मकमिति वेदान्तिनः । द्रव्यगुणकर्मसामान्यात्मकमिति वार्त्तिककारीयाः । कार्यकारणयोगविधिदुःखान्ताः पञ्चेति शैवाः । द्रव्यगुणकर्मसामान्यविशेषसमवायाः षडिति वैशेषिकाः । जीवाजीवास्रवसंवरनिर्ज्जरबन्धमोक्षाः सप्तेति क्षपणकाः । द्रव्यगुणकर्मसामान्यविशेषशक्तिपारतन्त्र्यनियोगा इत्यष्टौ प्राभाकराः । प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानि षोडशेति नैयायिकाः । ज्ञानेन्द्रियकर्मेन्द्रियभूततन्मात्रमहाभूतमनोहङ्कारमहदव्यक्तपुरुषा इति सांख्या इति । कस्तर्हि सिद्धान्तस्तदाह तद्व्युदासायेत्यादि । १७ ११

यद्यपि रूप्यत इति रूपेणेत्थंभूतं जगद् व्याक्रियते कथं नाम्ना रूपितमुत्पाद्यत इति तत्राह व्याक्रियमाणं हि वस्त्विति । अयमर्थः । लोके घटं चिकीर्षुः कुलालः प्रथमं घटशब्दविकल्पितं पृथुबुध्नोदराकाररूप * विकल्पितं च स्वबुद्धावाविर्भावयति पश्चाद्यथाविर्भूतं घटशब्दालम्बनयोग्यं पृथुबुध्नोदराकाररूपितं च घटं निर्वर्तयति । एवमेव मूलकारणमपि नामरूपाभ्यां स्वबुद्धावाविर्भूतमेव सर्वं पश्चाज्जनयतीति नामरूपाभ्यामित्थं † भूतं व्याकृतमित्युच्यते । अनेककर्तृभोक्तृसंयुक्तस्येत्यारभ्य नन्वन्येपि ‡ परिणामादयो भावविकारा इत्यतः ,, २४ प्राक्तनः स्पष्टार्थः । ननु किमेवोपलक्षितस्य ब्रह्मणः § स्वरूपलक्षणमुच्यते । न च स्वरूपलक्षणमन्तरेण कस्यचिद्वस्तुनः प्रतिपत्तिरस्ति । न च यत्र शाखाग्रं स चन्द्र इत्येतावता प्रकृष्टप्रकाशात्मप्रतिपत्तिमन्तरेण चन्द्रावगतिरस्ति । न तावत्सर्वशक्तित्वं ब्रह्मासाधारणलक्षणम् प्रधानादीनामप्यविशेषात् । सर्वज्ञत्वमिति चेन्न । तस्य सर्वोपाधिक || धर्मत्वान्निरुपाधिकब्रह्मस्वरूपा ¶ प्रतिपत्तिः ।

कथं चेदं सर्वज्ञत्वमिति वक्तव्यम् । न तावत्प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावप्रमाणैः सर्वं वेत्ति । तेषामयुगपत्प्रवृत्तेः सर्वस्य च प्रत्यक्षताहानात् सत्स्वपि तेष्वस्माकं सर्वज्ञताऽभावात् इन्द्रियाणां च देशकालवस्तुविप्रकृष्टार्थग्राहित्वाभावात् । संयुक्तसमवायात् ** संयुक्तसंयोगात्संयुक्तविशेषणतया

* विकल्पितवस्तु बुद्धाविति १ पु० । † भूतेति नास्ति २ पु० । समास एव ३ पु०

‡ विपरिणामादय इत्यत इति २ पु०, परिणामविकारादयो भावा इत्यत इति ३ पु० ।

§ स्वरूपमुच्यत इति ३ पु० । || धर्मेति २, ३ पु० नास्ति ।

¶ अप्रतिपत्तेरिति १ पु० । ** संयुक्तेति नास्ति ३, २ पु० ।

* वा सर्वार्थप्रत्यक्षत्वे ऽस्माकमपि प्रसङ्गात् । मानसमपि ज्ञानमात्मनो ऽन्यत्रेन्द्रियादिसापेक्षमिति सर्वं न मानसप्रत्यक्षगम्यम् । न च † धर्मातिशयवशादपीन्द्रियैरयोग्यं वस्तु गृह्यते । मार्जारादिदृष्टीनामपि योग्यरूपादिष्वेवातिशयवत्त्वदर्शनात् । न च कृत्स्नपरिभावनासंस्कारजन्यं मानसं सर्वज्ञज्ञानं कृत्स्ना‡र्थं ग्राहयति । प्रथमं कृत्स्नार्थग्रहणाभावे तत्र परिभावनाऽयोगात् तज्जन्यकृत्स्नग्राहिज्ञानायोगात् । ऽपरिभावनायाः प्रागपि कृत्स्नार्थग्रहणेऽस्माकमपि प्रसङ्गात् । अतीतानागतवर्तमानार्थानामियत्तानवधारणाच्च सर्वग्रहणानुपपत्तिः एतावदिदं नातः परमस्त्यऽज्ञातमित्यनवधारणात् । न च स्वरूपज्ञानेनैव सर्वज्ञता तस्य प्रदीपप्रभावदऽतीतानागता§र्थग्राहित्वाभावात् । तस्मान्नास्ति सर्वज्ञ इति ।

उच्यते । सर्वस्य कर्तृत्वादेव वर्तमानस्वकार्यसर्वविषयज्ञता तावत्सिद्धा । एवं तत्तत्कालेतीतसर्वविषयावगमादनुभूतविषया ‖ ऽसंप्रमोषा स्मृतिः स्वमायापरिणामोपाधिरनावरणत्वात् सर्वविषया कल्प्यते । तथा सृष्टेः प्रागपि सृज्यमानपदार्थावधारणस्य कुलालादिषु दृष्टत्वात् आगामिसर्व¶विषयज्ञानं स्वमायापरिणामोपाधि कल्प्यत इति युक्ता सर्वज्ञता । यः सर्वज्ञः सर्वविदिति च जगत्कारणे सर्वज्ञपदप्रयोगात्सर्वविषयज्ञानं प्रमीयत इति श्रुतियुक्तिभ्यां युक्ता सर्वज्ञता । ननु सोपाधिकधर्मत्वान्न स्वरूपलक्षणमित्युक्तम् । न । अनेन सर्वज्ञशब्देन सर्वावभासक्षमं विज्ञप्तिमात्रमादित्यादिप्रकाशवदऽविषयोपाधिकं विज्ञानमेव ब्रह्मस्वरूपलक्षणं विवक्ष्यत इत्यविरोधः । नन्वन्योपीत्यादिः स्पष्टार्थः ।

ननु निरुक्तवाक्यमेव मूलीकृत्य सूत्रेपि षड्भावविकारा गृह्यन्तामिति चोदयति ननु षड्भावविकारा इति । यास्कपरिपठितानामि ** त्यादिपरिहारस्यायमर्थः । आर्षस्य वाक्यस्य मूलप्रमाणं †† प्रत्यक्षमागमो वा भवति । अनुमानादरस्माकमपि प्रवृत्तेर्वाक्या ‡‡ नपेक्षणात् । तत्र प्रत्यक्षमूलत्वे यास्कवाक्यस्य भौतिकधर्मा एव भावविकाराः प्रत्यक्षेणावगन्तुं शक्यन्ते न महा-

१८ २

---

* वाशब्दो नास्ति २ ३ पु० ।
† धर्मातिशयादपीति १, ३ पु० ।
‡ दर्शयतीति ३ पु० ।
§ अर्थेति नास्ति १ पु० ।
‖ असंप्रमोषेत्येव त्रिष्वपि पाठः ।
¶ विषयत्वाज् ज्ञानमिति १ पु० ।
** इत्यादेः परिहारस्येति व्यासः १ पु० ।
†† प्रत्यक्षं वागमो वेति १ पु० ।
‡‡ अनपेक्षत्वादिति ३ पु ।

भूतविषया: । तत्र भौतिकविकारकारणे ब्रह्मणि गृह्यमाणे भूतपञ्चकमेव ब्रह्म गृहीतं स्यात् । श्रुतौ तु मूलप्रमाणानपेक्षत्वाद्यत्किञ्चिद्वचनधर्मवत् तस्य मूलकारणं ब्रह्म ग्रहीतुं शक्यत इति । किंच । श्रुत्यर्थपरत्वात् सूत्राणां श्रुतिरेव जन्मादिसूत्रमूलमित्याह तदर्थनिर्णयार्थत्वादिति । १८

ननु भूतभौतिकमूलकारणं न ब्रह्मेति प्रतिपत्तुं युक्तम् मायाया अपि मूलकारणत्वात् । मायां तु प्रकृतिमिति श्रुतेः । प्रक्रियते ऽनयेति प्रकृतिरिति करणमात्रं मायेति चेन्न । प्रकृतिशब्दस्योपादाने रूढत्वाज्जन्यादनायोगात् । आत्मन आकाश इति प्रकृत्यन्तरश्रवणाज्जन्यादान इति चेन्न । तुल्यश्रुतित्वान्मायाप्रकृति-* त्वविरोधान्निमित्तेपि पञ्चमी † प्रयोगात् । दृश्यमान ‡ जाड्यानुसारेण च मायोपादानत्वनियमोपपत्ते. । इन्द्रो मायाभिरिति तृतीयैव श्रूयत इति चेत् । सत्यम् आत्मनो बहुत्वापत्तौ करणता भवति प्रपञ्चोपादानत्वे का हानि: । निरपेक्षप्रकृतिद्वयानुपपत्तिरिति चेत् । नहि परस्परविशिष्टतया द्विसूत्ररज्जुवत्प्रकृतिता स्यात् । अतो जगत्कारणे ब्रह्मणि मायाया अपि ब्रह्मत्वं लक्षितं स्यात् । मायेति प्रज्ञाभिधीयते सा च ब्रह्मचैतन्यमेवेत्यविरोध इति चेन्न अन्वयव्यतिरेकविरोधात् । परिदृश्यमानहस्त्यश्वरथादि § प्रतिपन्नोपाधौ बाधिते च बुद्धौ व्यवहारेन्वयव्यतिरेकाभ्यां मायाशब्द: प्रयुज्यमानो दृश्यते । लोकसंवेदनविरोधाच्च । नहि प्रज्ञातिशयवन्तं मायाविनं वदन्ति गर्हन्ति च विदुषि मायाशब्दप्रयोगम् । बुद्धिविषयत्वान्मायाशब्दस्य न ब्रह्मचैतन्यप्रज्ञायां प्रसङ्ग: स्वप्नादिविविधमायाकारप्रतिभासनाद्वा बुद्धेः ‖ कार्यवाचिनो मायाशब्दस्योपचारा ¶ त्कारणे प्रयोग इत्यनवद्यम् ।

अपि च । भूयश्चान्ते विश्वमायानिवृत्तिः मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते दैवी ह्येषा गुणमयी मम माया दुरत्यया माययाऽपहृतज्ञाना आसुरं भावमाश्रिता इति निवर्त्यत्वतरत्यत्वगुणमयत्वज्ञानापहरणत्वलिङ्गाच्च न ब्रह्मचैतन्यं माया । बुद्धिरेव मायेति चेन्न । प्रकृतिशब्दविरोधात् । मन्त्रौषधादि मायेति चेन्न । दृश्यमानगन्धर्वनगरादौ मायाशब्दप्रयोगात् मन्त्रौषधादौ तदप्रयोगात् । तथापि जडात्मिका मायाशक्तिः पारमार्थिकीति चेन्न । नासदासीन्नो

* त्वप्रत्ययो नास्ति १ पु. ।

† पञ्चमी नास्ति १, २ पु. ।

‡ दृश्यमानजाड्यदनुसारेणेति पश्चाच्छोधितं १ पु. ।

§ प्रतिपन्नोपाधिबाधित एव बुद्धेति १ पु. ।

‖ कार्यवाचिन इति पश्चाच्छोधितं १ पु. ।

¶ करणे-इति १ पु. ।

सदासीत्तम आसीदिति जगत्प्रागवस्थायाः सदसद्विलक्षणानिर्वचनीयत्वश्रवणात् । लोके च हस्त्यश्वरथादिषु व्यभिचारिषु मिथ्यावस्तुमात्रे ऽनुयायिनि मायाशब्दप्रयोगात् । तरत्यऽविद्यां विततां हृदि यस्मिन्निवेशिते योगी मायामऽमेयाय तस्मै विद्यात्मने नम इति मायाऽविद्ययोः सामानाधिकरण्याच्च ।

१८ ७ तस्मादनिर्वचनीयमायाविशिष्टं कारणं ब्रह्मेति प्राप्तम् तत्राह* अतो यदवष्टम्भो विश्वो विवर्त्तत इति । त्रैविध्यमत्र सम्भवति रज्ज्वाः संयुक्तसूत्रद्वयवन्मायाविशिष्टं ब्रह्म कारणमिति वा देवात्मशक्तिं स्वगुणैर्निगूढामितिश्रुतेर्मायाशक्तिमत्† कारणमिति वा जगदुपादानमायाश्रयतया ब्रह्म कारणमिति वेति । तत्र विशिष्टपक्षे तथैव ब्रह्मत्वेनोपलक्षितस्य ज्ञानानन्दादिस्वरूपलक्षणेन मायानिष्कर्षाल्लक्षणद्वयेन विशुद्धब्रह्मसिद्धिः । उत्तरपक्षयोस्तु मायाया ब्रह्मपरतन्त्रत्वात्तत्कार्यमपि ब्रह्मपरतन्त्रं भवति यथांऽशुतन्तुतन्त्वारब्धोऽपि पटोंऽशुतन्त्रः प्रतीयते । ततश्चोत्पद्यमानकार्यस्य यदाश्रयो ‡ पाधिज्ञानानन्दलक्षणं च तद् ब्रह्मेति § शुद्धब्रह्म ‖ लाभ इति तदाह यदवष्टम्भ इति ।

केचित् ¶ तु ब्रह्मैव जगदाकारेण परिणमते मृदिव घटाकारेणेति वदन्ति । तद्व्यावर्त्तयति विश्वो विवर्त्तत इति । एकस्य तत्त्वादप्रच्युतस्य पूर्वविपरीताऽसत्यानेकरूपावभासो विवर्तः । एकस्य पूर्वरूपपरित्यागेन सत्यरूपान्तरापत्तिः परिणामः । तत्र ** ब्रह्म न विवर्त्तते किंतु परिणमत एवेति तैस्तत्र प्रमाणं वक्तव्यम् । सृष्टिश्रुतेः परिणमत इति चेत् । सा खलु सृष्टिश्रुतिः ज्ञानानन्दसत्यनिरवयवापरिच्छिन्नब्रह्मस्वरूपस्य पूर्वसिद्धस्य परित्यागेन जडदुःखमिथ्यासावयवपरिच्छिन्नकार्यापत्तिं ब्रह्मणो ब्रवीति आहोस्वित् †† पूर्वसिद्धरूपापरित्यागेनैव तद्विपरीतकार्यरूपापत्तिं ‡‡ ब्रह्मणो ब्रवीतीति वक्तव्यम् । तत्र पूर्वपरित्यागे ब्रह्मस्वरूपोच्छेदात्कार्यमात्रमेव वस्तु स्यात् । सृष्ट्यवस्थायां कार्यमात्रमेव पुनः प्रलयावस्थायां ज्ञानानन्दादिरूपेण परिणमत इति चेत् । अनिर्मोक्षप्रसङ्गात् । अज आत्मा महान् ध्रुवो न §§ जायते चेत्यादिश्रुतिविरोधश्च

* अत इत्यादीति ३ पु० । † ब्रह्मेत्यधिकं १ पु० । ‡ उपाधित इति १ पु० ।
§ विशुद्धेति १, ३ पु० । ‖ ज्ञानमिति १ पु० । ¶ तुशब्दो नास्ति १, २ पु० ।
** न ब्रह्म विवर्त्तते परिणमत एवेति १ पु०, ब्रह्म विवर्त्तते परिणमते वेतीति ३ पु० ।
†† पूर्वसिद्धविपरीतब्रह्मरूपेति २ पु० । ‡‡ ब्रह्मणइति नास्ति ३ पु० ।
§§ न जायते न म्रियते चेत्यादीति १, ३ पु० ।

स्यात् । अथ पूर्वविपरीतब्रह्मस्वरूपापरित्यागेनैव कार्यरूपापत्तिं ब्रूयात् सृष्टिश्रुतिः । एवं तर्हि विवर्त्तं प्रतिपादयति शुक्तिकारजतमायाव्याघ्रादिषु विवर्त्तस्य तल्लक्षणत्वात् । अथ सृष्टिश्रुतिः सृष्टिमात्रविषया न पूर्व*स्वरूपपरित्यागापरित्यागयोर्व्याप्रियत इति चेत् † तथापि ‡ व्यवस्थितब्रह्मवाक्यैरेकवाक्यत्वात्तत्स्वरूपापरित्यागेनैव कार्यरूपापत्तिं ब्रह्मणो ब्रुवाणा विवर्त्तमेव दर्शयतीत्यनवद्यम् ।

येऽपि कश्चिदाह निरवयवमपि परिणमत इति । तथाहि । हेमद्रव्ये रुचकाकारेण परिणममाने तदवयवा अपि परिणमेरन् § नवेति वक्तव्यम् । यदि परिणमेरन् तर्हि तदवयवा अपि तथेति निरवयवपर्यन्तः परिणामः स्यात् । अथ न परिणमेरन् । न तर्ह्यवयवी परिणमेत आश्रयविकारमन्तरेणाश्रितविकारायोगात् । तस्मादवयवसंयोगो ऽवयव्येकदेशसमवेतः परम्परया निरवयवपरमाणुसंयोगपुरःसरः तथा निरवयवपरिणामपुरःसरो ऽवयविपरिणाम इति । ‖ स वक्तव्यः ¶ कस्त्वायं परिणाम इति । यदि तावत् ** स्वावयवानां पूर्वसंयोगात् संयोगान्तरापत्त्या वा ऽवयवान्तरसंयोगेन वा संमूर्छितावयवत्वं परिणामः । न तर्हि निरवयवे परिणामः स्वावयवाभावान्निरवयवस्य । नचावयवानां संयोगान्तरेण संमूर्छितत्वमन्तरेणावयविनः परिणामो ऽवस्थान्तरं वा ऽन्यथाभावो वा निरूपयितुं शक्यते । नच वस्तुनो वस्त्वन्तरसंयोगो वा परिस्पन्दो वा गुणान्तरोदयो वा परिणामः । ब्रह्मणि तेषामभावात् । आकाशे च वस्त्वन्तरसंयोगिनि परिस्पन्दमाने च भ्रमरे लौहित्योदये च घटे द्रव्ये परिणामबुद्ध्यभावात् । अथ †† तदनुपक्तद्रव्यान्तरोत्पत्तिः परिणाम इति । तत्र किं हेमावयवानां रुचकरूपेणैव परिणामः किं वा द्रव्यान्तररूपेण । न तावद् द्रव्यान्तररूपेण तत्र रुचकद्रव्यातिरिक्तकार्यद्रव्यादर्शनात् ।

* पूर्वरूपपरीति ३ पु० ।  † चेच्छब्दो नास्ति १, २ पु० ।

‡ व्यवस्थितं ब्रह्मेति २, ३ पु० ।  § वाशब्दोऽत्राधिकः ३ पु० ।

‖ परिणाम एव दुर्निरूप इत्याह स वक्तव्य इति. किं पूर्वरूपे स्थिते परिणाम उत नष्टे. न तावदाद्यः, तथाभावविरोधात्. द्वितीये पूर्वस्य नष्टत्वात्कस्य परिणामः. किञ्च, संमूर्छितावयवत्वं परिणामः, आहो वस्त्वन्तरसंयोगः, उत परिस्पन्दः, उत गुणान्तरोदयः, किंवा पूर्वरूपानुषक्तद्रव्यान्तरोदय इति वाच्यम्. अद्येऽपि किं स्वावयवानां संयोगान्तरापत्त्या संमूर्छितावयवत्वम् उतावयवान्तरसंयोगेनेति विकल्प्योभयमप्यनूद्य दूषयति यदि तावदित्यादिनेति तत्त्व० ।

¶ कोऽयमिति १ पु० ।  ** स्वशब्दो नास्ति १ पु० ।  †† तदनुरक्तेति १, ३ पु० ।

नापि रुचकाकारेणैव । तस्यावयविपरिणामत्वात् । अवयवानां * च रुचका-† नुगमस्य रुचकानुगतावयव्यनुगमेनैवान्यथासिद्धत्वात् । नच रुचकावस्थाव्यतिरेकेण हेमावयवानामवस्थान्तराणि दृश्यन्ते येन परिणामभेदः स्यात् । नच संयोगभेद एवावयवपरिणाम इत्युक्तम् । नचावयवि ‡ द्रव्यं विना हेमावयवा रुचकाकारेण परिणमन्त इति युक्तम् । आरम्भवादप्रसङ्गात् । अथादृश्यमानोऽप्यवयवपरिणामोऽवयविपरिणामानुपपत्त्या कल्प्यते आश्रयविकारमन्तरेण आश्रितविकारा § नुपपत्तेः । नैतत्सारम् । अवयविजन्मविनाशयोरवयवानामपि तत्तन्त्वाणां जन्मविनाशप्रसङ्गात् । अवयविगमने ऽवयवानां गमनवत् ‖ परिणामोऽपि भविष्यतीति चेत् । न । अवयविनि घटत्वजातिसमवायिनि अवयवानां घटत्वजातिसमवायाभावात् । नन्ववयवानामन्यथाभावमन्तरेण कथमवयविनो ऽन्यथाभावः स्यात् । जातिगुणादिष्व ¶ ऽन्यथाभावरहितेषु द्रव्यपरिणामवदिति वदामः । न हि द्रव्यस्यावस्थान्तरद्रव्यान्तरापत्तिवद् ** नैल्यं गुणान्तरमापद्यते ऽवस्थान्तरं वा । न चावयविकार्यव्यतिरेकेणावयवानां कार्य्यं दृश्यत इत्युक्तम् । न हि पटे कार्यान्तरावभासे ऽपि तन्तवो ऽतन्त्वात्मनावभासन्ते । पटकार्ये तन्त्वनुगमः स्वानुगतानुगमादन्यथासिद्ध इत्युक्तम् । किं च । अवयविपरिणामोपाधावेवावयवपरिणामो दृष्ट इति न निरुपाधिनिरवयवात्मपरिणामसिद्धिः ।

यत्तु निरवयवसंयोगवत्परिणाम इति । तत्रापि दृश्यमानो ऽवयविसंयोगो न परमाणुसमवेतः तद्गतरूपादिवदप्रत्यक्षत्वप्रसङ्गात् । नाप्यवयव्येकदेशसंयोगेन †† निरवयवे संयोगः कल्पयितुं शक्यते अवयविन्येव जातिसमवायवदवयवसंयोगमन्तरेणावयविन्येव संयोगोपपत्तेः । अवयवानां संयोगानुगमस्यावयव्यनुगमेनान्यथासिद्धत्वात् । अवयवेष्वेव संयोगो नावयविनीति चेत् न । अवयविभ्यामसंयुक्ताभ्यां कार्यान्तरानारम्भप्रसङ्गात् । तस्मादवयविन्येव संयोगो नावयवेषु । अवयविसमवाये संयोगस्य कृत्स्नवृत्तिता संयोगस्य प्राप्नोतीति चेत् । तर्हि निरवयवसंयोगे ऽपि कृत्स्नवृत्तेः प्रचयाभावप्रसङ्ग ‡‡ इति । कथं पुनर्ब्रह्मणो निरवयवत्वलाभः । उच्यते । अवयवावयविनोः स्वयंप्रकाशत्वे

* च स्थाने तुः १ पु० । † अनुगमनस्येति १ पु० ।
‡ द्रव्यं विनाश्य हेमेति १, ३ पु० । § अनुपपत्तिरिति २, ३ पु० ।
‖ परिणामोऽपीति १ पु० । ¶ अन्यथाभावविरहिष्विति १ पु० । ** नैर्मल्यमिति १ पु० ।
†† निरवयवाणुसंयोग इति १ पु० । ‡‡ इतिशब्दो नास्ति १ पु० ।

सतीतरेतराविषयत्वान्न सावयवत्वं ब्रह्मणा स्वात्मन्यनुभवितुं शक्यम् अन्यतरस्यास्वयंप्रकाशत्वे ऽन्यतरेण वेद्यत्वात् घटात्मनोरिव नांशांशिभावसिद्धिः । श्रुतिश्च निष्कलं निष्क्रियं शान्तमिति क्रियावयवशून्यतामाह । नियन्तृत्वादिक्रियापि श्रूयत इति चेत् । तर्हि परस्परविरोधे सति मायया तत्त्वातत्त्वव्यवस्था कल्पनीया । * मायाभिः पुरुरूप ईयत इति प्रवृत्ते । †मायानिबन्धनत्वश्रवणात् चेतनस्य निर्व्यापारस्य सुषुप्ते पुरुषार्थत्वावगमात् ब्रह्मणः स्वतःप्रवृत्तिप्रयोजनाभावाच्च विपरीतस्वरूपापरित्यागेन विपरीतकार्यापत्तेश्च विवर्त एवेति सिद्धम् ।

ननु जगदुत्पत्तिकारणत्वं न सिद्धवद् ब्रह्मलक्षणत्वेनोपादातुं शक्यम् भूतपञ्चकस्य कार्यत्वासिद्धेर्भौतिकानां च भूतोपादानत्वादिति चोदयति ननु श्रुतिनिर्दिष्टग्रहण इत्यादिना । उच्यत इत्यादेः परिहारस्यायमर्थः । पृथिव्यप्तेजो ‡ वायवो विवादपदानि जन्मविनाशवन्तः पृथिव्यप्तेजोवायुबुद्धिगोचरत्वा § देकदेशपृथिव्यप्तेजोवायुवदिति । ननु प्रत्यनुमानमस्ति पृथिव्यादयो न जायन्ते महाभूतत्वादाकाशवदाकाशश्च न जायते निरवयवद्रव्यत्वादात्मवदिति । सत्यम् । ‖ महाभूतत्वादिति सामान्यतोदर्शनात् पृथिवीबुद्धिगोचरत्वात्तदेकदेशवदिति विशेषतोदर्शनमेव बलीय इत्यनवद्यम् । न यथोक्तविशेषणस्येत्यादिभाष्यतात्पर्यमाह युक्तिरपि ब्रह्मस्वरूपनिर्णयायेत्यादिना । अस्य जगत ¶ इत्यादि भाष्यं व्याचष्टे नान्यतः परपरिकल्पितात् **प्रधानादेरिति । अयमर्थः । सर्वे एवाह्याध्यात्मिका भावाः सुखदुःखमोहसामान्यप्रकृतिकाः सुखदुःखमोहसामान्येन नियमेनान्वितस्वभावत्वात् । ये विकारा यदन्वितस्वभावास्ते तत्प्रकृतिका दृष्टाः यथा मृदन्विताः शरावादयः । तथा सर्वे विकारा अविभक्तैकप्रकृतिकाः परिमितानेकविकारत्वात् ये परिमितानेकविकारास्ते ऽविभक्तैकप्रकृतिकाः यथा मृत्पिण्डप्रकृतिकाः शरावादय इति जगन्मूलकारणं प्रधानमनुमिमते सांख्याः । तथाणुवादिनश्चानुमिमते सर्वं

* मायानित्यरूप इति १ पु॰ शोधितम् । † एवशब्दो ऽधिकः १ पु॰ ।
‡ वायवो ऽपि पदार्थाजन्म जन्मेति २ पु॰ । § तदेकदेशेति ३ पु॰ ।
‖ पृथिव्यादिनवद्रव्यपक्षीकारे आत्मनि बाधः, प्रत्येकपक्षे व्यभिचारः, पृथिव्यादिचतुर्णामन्यतमस्य पक्षत्वे विशेषतोदृष्टबाधः, अन्यान्यत्वेन पक्षत्वे श्रुतिबाध इति-भाष॰ ।
¶ इतिभाष्यमिति २, ३ पु॰ । ** प्रधानादिति अयमर्थः सर्वं च इति २, ३ पु॰ ।

कार्यद्रव्यं स्वपरिमाणादणुतरपरिमाणसंयोगसचिवसमानजातीयानेकद्रव्यारब्धं कार्यद्रव्यत्वात् यत्कार्यद्रव्यं तत्तथा यथाऽनेकद्रव्यारब्धः पट इति निरवयव-परमाणुपर्य्यन्तमनुमानप्रवृत्तेः परमाणवो मूलकारणमिति । तथा शून्यवादिनश्च सर्वं कार्यमभावपुरःसरं भवितुमर्हति योग्यत्वे सत्यऽनुपलभ्यमानपूर्वावस्थत्वात् यदभावपुरस्सरं न भवति न तद्योग्यत्वे सत्यऽनुपलभ्यमान * पूर्वावस्थम् यथा परपरिकल्पित आत्मेति शून्यालम्बनत्वं सर्वत्र वदन्ति । योगाः शैवाश्च हिरण्यगर्भं पशुपतिं चागमसामर्थ्याज्जगत्कारणं कल्पयन्ति । तान् पक्षान् व्यावर्त्तयति † नान्यतः परपरिकल्पितादित्यादिना ।

१८ २१ तत्र प्रथमं तावत्प्रमाणदूषणं ‡ सम्भावयति अचेतनानावदित्यतः प्राक्तनेन § ग्रन्थेन । कथम् । सांख्यानुमाने तावत्सुखदुःखमोहान्वयो भावानामऽसंप्रतिपन्नः अन्तर्बहिर्भावेनोपलब्धेः । स्यादेतत् ‖ सर्वे विकाराः सुखदुःखमोहात्मकाः चित्तोपरक्तत्वे सति तत्र तदाकारप्रतिभासहेतुत्वात् दर्पणोपरक्तनया मुखाकारप्रतिभासहेतुविम्बवदिति भावानां सुखदुःखमोहान्वयो ऽनुमीयत इति । न । अन्तर्बहिर्भावभेदप्रत्यक्षविरोधात् एकं च शब्दमुपलभमानानां प्रत्येकं सुखदुःखमोहचितयोपलम्भप्रसङ्गाच्च अदृष्टेन च वस्तुसामर्थ्यनियमायोगात् । अतो ऽसिद्धो हेतुः अनैकान्तिकश्च गुणसामान्यैरप्यप्रकृतिभि ¶ द्रव्याणां समन्वयात् । यत्तु परिमितत्वादिति तत्रापि वस्तुतः परिमितत्वे हेतोः गुणपुरुषेष्वनैकान्तिकता । देशकालपरिमितत्वे घटहिमकरकादिषु प्रत्यक्षदृष्टभिन्नप्रकृति ** ष्वनैकान्तः । वैशेषिकानुमाने ऽपि स्वपरिमाणादणुतरपरिमाणारभ्यत्वे †† दीर्घविस्तीर्णदुकूलैः क्रियमाणरज्जुद्रव्यस्य ह्रस्वस्यापि कार्यत्वदर्शना ‡‡ दनैकान्तिको हेतुः प्रत्यनुमानदुष्टश्च न किञ्चिदपि कार्यद्रव्यं निरवयवद्रव्यसंयोगपुरःसरं प्रचयात्मक-

---

* पूर्वावस्थं न भवतीति ३ पु० । † नान्यत इत्यादिर्नेति ३ पु० ।

‡ सूचयतीति ३ पु० । § ग्रन्थेनेति नास्ति १ पु० ।

‖ समासः २ पु० । ¶ द्रव्याणामन्वयादिति १ पु० । ** अनैकान्तिक इति १ पु० ।

†† न च तत्कार्यद्रव्यान्तरं न भवति किन्तु संयोगान्तरमिति वाच्यम्, नामरूपकार्यभेददर्शनेन पटवत्तस्या ऽपि भिन्नद्रव्यत्वात् · अन्यथा ऽवयविन एव विलोपप्रसङ्गात् अनेकाणुसंयोगादेव प्रत्यक्षत्वोपपत्तेः· यत्तु संयोगान्तरमिति, तन्न तावत्पटस्य, एकमात्रवृत्तिसंयोगासंभवात्· नापि तदवयवानाम् पूर्वसंयोगे सति तदयोगात्· पूर्वसंयोगनाशे च पटनाशप्रसङ्गात् किञ्च, पटादिकार्यस्य स्वकारणाद्ध्रस्वत्वं दृश्यते, नहि तन्तुभिरर्द्धप्रदेशारब्धं पटस्य तावदधिकं वा दैर्घ्यं भवति, एवं परिमाणान्तरमपि चेत्कारणाच्यूनं चेत्, न किञ्चिद्बाधकमिति भावः-इति भाव० ।

‡‡ अनैकान्तो हेतुरिति ।

त्वात् यत्प्रचयात्मकं न तन्निरवयवद्रव्यसंयोगपुरःसरम् यथा घटः । शून्यानुमाने ऽपि घटस्य पूर्वावस्था प्रत्यक्षदृष्टा मृदित्यनुपलभ्यमानपूर्वावस्थत्वादित्यऽसिद्धो हेतुरिति ।

इदानीमर्थदूषणमभिप्रेत्याह अचेतनानावदचेतनत्वादेवेत्यादिना । मा १८ २१ भूतिरीश्वरात्प्रधानाद्विचित्रकार्यरचना * परमाणुवादे तु पुनरधिष्ठातुरीश्वरस्य विद्यमानत्व.तद्बुद्धिसामर्थ्यादेव विचित्रजगत्कार्यरचना भविष्यतीत्याशङ्क्याह चेतनादपीति । अयमर्थः । † कुलालादिदृष्टान्तेनानुमीयमानस्येश्वरस्य शरीरेन्द्रियपरिच्छिन्नज्ञानशक्तित्वात्तेनैव दृष्टान्तेन परिच्छिन्नज्ञानशक्तेश्च जगद्रचनानुपपत्तिरिति ‡ घटादिषु कर्तृद्वयप्रसङ्गान्मूलकारणे § ऽपि तदनुमानमिति ।

यत्तु शून्यालम्बनं जगदिति तत्राह अभावात्पुनरिति । न च निरुपाख्योपादानता जगतः सदन्वयादिति । किं च । निरुपाख्यस्य कारणत्वे पूर्वकल्पस्य निरन्वयविनाशात्संस्काराभावात् पुनः सजातीयकार्योत्पादनियामकाभावाद्धि शिष्टसंस्थानपश्वादिकामितयानुष्ठितकर्मणां कल्पान्तरे तथाविधपश्वाद्यनुपपत्तेः । शब्दार्थसम्बन्धतद्व्यवहारिणां च नाकस्य पृष्ठे तं कालं दिवि सूर्य इव रोचते ततः कृतयुगस्यादौ ब्रह्मपूतो महायशाः सर्वज्ञो धृतिमानृषिः ‖ पुनराजायते स्मरन्नित्यादिश्रुतिप्रतिपन्नानां निरन्वयविनाशात्कल्पान्तरे पूर्वे¶कल्पव्यवहारानुसंधानेन व्यवहारप्रवृत्त्यभावात् अपूर्वसंकेते च धर्मस्य प्रमाणान्तरागोचरत्वाद्गोपदार्थस्यापूर्वसाधनत्वं प्रमाय तत्र च गोशब्दं प्रयुज्य गवा यजेतेति वाक्यरचनानुपपत्तेश्च कर्मतत्फलतत्प्रमाणव्यवहारो** च्छेद इत्याह अतीतकल्पसंस्काराभावादित्यादिना । ,, २३

* परमाणुवादे पुनर्रिति १ पु०, परमाणुवादेषु पुनर्रिति २ पु० ।

† यदि कुलालादिदृष्टान्तेन ज्ञानेच्छाप्रयत्नादि कल्प्येत, नित्यादिकार्येण कल्प्येत, तर्हि ज्ञानस्याऽनित्यत्वशरीरादिजन्यत्वनियमात्तादृशमेव कल्प्येत, व्याप्तेस्तुल्यत्वेन स्वाभिमतमात्रानुमानायोगादिति भाव० ।

‡ विवादाध्यासितं द्विकर्तृकं कार्यत्वात् घटादिवत्· न च जीवेश्वरकर्तृद्वयाङ्गीकारादिष्टापत्तिरित्यपि वाच्यम्, घटादौ जीवेश्वरकर्तृकत्वस्य तदतिरिक्तकुलालकर्तृकत्वस्य च दृष्टत्वात् पृथिव्यादावपि कर्तृत्रयप्रसङ्गात्· न चात्रोत्कर्षसमत्वं शङ्क्यम्, अव्याप्तधर्मप्रसङ्गस्योत्कर्षसमत्वात्· न चात्र तथात्वम्, घटादेः कर्तृत्रयव्याप्तत्वादित्यर्थ इति तत्त्व० ।

§ अपिकारो नास्ति २ पु० ।

‖ पुनराजायते इति २ पु० ।

¶ कल्पेति नास्ति १ पु० ।

** उच्छेदप्रसङ्ग इत्याहेति ३ पु० ।

अत्र स्वभाववादी जल्पति । न कारणसापेक्षमिदमुत्पद्यते । * ननु स्वयमेव स्वस्य निमित्तमित्युक्तं भवति किं वा निर्निमित्तमुत्पद्यत इति । निर्निमित्तमिति ब्रूमः । ननु तर्हि घटस्य भावाभावौ युगपत्स्याताम् क्रमकारिनिमित्तनिरपेक्षत्वात् । उच्यते । कारणस्य क्रमकारित्वं स्वाभाविकं चेत् स्वभाववादप्रसङ्गः । निमित्तान्तरसापेक्षत्वे ऽनवस्थापातः । कालभेदेन क्रमकार्यव्यवस्थेति चेत् । स कालक्रमः स्वाभाविकश्चेत् स्वभाव† वादः निमित्तान्तरापेक्षत्वे ऽनवस्था । तस्मात् सर्वं कार्यं विचित्रं क्रमवर्ति च यथादर्शनं

१८ २५ स्वभावेनैव जायत इति । तत्राह न च स्वभाव इत्यादिना । स्वतःसिद्धसामर्थ्यानामपि भावानां परस्परोपकार्योपकारभावः प्रत्यक्षसिद्ध इत्यर्थः । अत इत्युपसंहारः ।

नन्वनुमानेनैव यथोक्तविशेषणमीश्वरं तार्किका व्यवस्थापयन्ति किं

७९ ३ युक्तिसहितेनागमेनेत्यत आह एतदेवानुमानमित्यादिना । युक्तिर्हि सम्भावनाबुद्धिमात्रमुत्पादयति अनुमानं पुनरर्थं निश्चापयति । व्याप्त्यनुपपत्त्या ‡ भास उदाहरणमात्रदर्शनं युक्तिः अव्यभिचारिणी च व्याप्तिरनुमानम् । § तत्र कुलालादिदृष्टान्तैर्न सर्वज्ञेश्वरकारणत्वं निश्चेतुं शक्यते विपरीतोदाहरणसम्भवात्किन्तु प्रमाणान्तरे सति कुलालादिदृष्टान्तैः सम्भावयितुं शक्यते । अतो युक्तिरेवैषा । तत्राज्ञानादर्थनिश्चायकमनुमानं ‖ मन्यन्त इति । किं तदनुमानमिति । उच्यते । सर्वं कार्यं स्वरूपोपादानोपकरणसंप्रदानप्रयोजन¶सामर्थ्यविषयविज्ञानवत्कर्तृकं विविधविन्यासकार्यत्वात् घटादिवदिति वैशेषिकानुमानम् । सांख्ययोगाः ज्ञानैश्वर्यशक्तयः क्रमेणोत्कृष्यमाणाः क्वचित्सर्वविषयज्ञानैश्वर्यशक्तिमति पर्यवस्यन्ति तरतमभावेनोत्कृष्यमाणधर्मत्वात्परिमाणवदित्यनुमिमते । ** नैयायिकादयस्तु सर्वं कर्मफलजातं कर्मतत्फलतद्भोक्तृदेशकालादिविषयविज्ञानवता प्रदीयमानं कर्मफलत्वात्सेवादिकर्मफलवदित्यनुमिमते ।

* कर्तृकर्मविरोधात्स्वस्य स्वनिमित्तत्वानुपपत्तेर्नाद्यो युज्यते, नान्त्योऽपि, कार्यस्यानुत्पत्तिप्रसङ्गादित्यभिसन्धिरिति तत्त्व० ।

† वादप्रसङ्ग इति ३ पु० ।    ‡ आभासादुदाहरणेति ३ पु० ।

§ न तत्र कुलालादिदृष्टान्तेन सर्वज्ञेति ३ पु० ।    ‖ मन्यत इति २, ३ पु० ।

¶ सामर्थ्येति नास्ति २, ३ पु० ।    ** नैयायिकास्त्विति ३ पु० ।

तत्र * वैशेषिकानुमाने जगतो बहुकर्तृत्वपरिच्छिन्नज्ञानैश्वर्यादिमत्क-
र्तृत्वा†नुमानेषूदाहरणसम्भवाद्युक्तिमात्रमेतत् । योगानुमानेऽपि ज्ञानैश्वर्यश-
क्तीनां क्वचित्काष्ठाप्राप्तिमात्रेऽनुमीयमाने ‡ लक्ष्यपदार्थविषयज्ञानादिषु पर्यवसा-
नसिद्धेः कुतः सर्वज्ञत्वादिसिद्धिः सर्वविषयज्ञानाद्यनुमाने गुरुत्वरागद्वेषदुःख-
भ्रान्त्यादिष्वनैकान्तिकतेति युक्तिमात्रमेतत् । नैयायिकानुमानेऽपि कर्म्मफलस्य
शरीरेन्द्रियादिमद्बहुदातृत्वदर्शनादेकेश्वरासिद्धेः श्रुतिप्रतिपन्नसर्वकारणसर्व-
ज्ञसर्वेश्वरसर्वफलदात्रऽद्वितीयब्रह्मप्रतिपत्तावुदाहरणमात्रेण सम्भावनाबुद्धि-
हेतुत्वाद्युक्तिमात्रम् इत्यज्ञानान्निश्चायकमनुमानं मन्यन्ते ।

ननु वाक्येषु सत्सु किमित्यनुमानप्रयास इति अनुमानसिद्धार्थानुवा-
दकत्वादित्याह§ जन्मादीति । ननु सूत्रेऽप्येतान्ये‖वानुमानानि स्वातन्त्र्ये- १९
णार्थनिश्चायकत्वेन सूचितानि तत्कथमागमगुणभूतेयं युक्तिरिति चोदयति
नन्विहापि तदेवोपन्यस्तमित्यादिना । ¶ परिहरति न वेदान्तवाक्य-
ग्रन्थनार्थत्वादित्यादिना । किञ्च । अनुमानमात्रात्कारणसद्भावमात्रं सिध्यति
नाधिकमिह तु सत्य** ज्ञानानन्दानन्तसर्वज्ञप्रत्यगात्मब्रह्मावगतिर्विव-
क्षिता । नचागममन्तरेण सामान्यमात्र††विषयानुमानादेव विशिष्टार्थसि-
द्धिरित्याह समन्वयसूत्रप्रमुखोपात्तैरित्यादिना । न तर्हि युक्तिरत्र‡‡
सूचिता आगमेनैव विशिष्टार्थसिद्धेरिति तत्राह सत्सु त्विति । न धर्मजि- ,,
ज्ञासायामित्यादिः स्पष्टार्थः । श्रुतिः पदान्तरनिरपेक्षः शब्दः । लिङ्गम्
श्रुतस्यार्थस्यार्थान्तरेणाविनाभावः । अनेकपदसामर्थ्यं वाक्यम् । वाक्यद्वयसा-
मर्थ्यमारभ्याधीतविषयं प्रकरणम् । क्रमवर्तिनां पदार्थानां क्रमवर्तिभिः पदा-
र्थैर्यथाक्रमं संबन्धः स्थानम् । संज्ञासाम्यं समाख्या । ननु शब्देन ब्रह्मस्व-
रूपे ऽवधारिते नानुभवेन कृत्यमस्ति न च शब्दप्रमेय§§मनुभवितुं च शक्य-

* प्रासादादेर्बहुकर्तृकत्वं तावद्दृश्यते, ततश्च तद्वज्जगतोऽपि बहुकर्तृकत्वं स्यात् न च लाघवादेककर्तृकत्वं जगतः शङ्क्यम्, निमित्तोपादानैक्यस्यापि तत एव प्रसक्तेरित्यतयं इति तत्त्व० ।

† अनुमानेऽप्युदाहरणेति ३ पु० ,

‡ लक्ष्येति २, ३ पु० ।

§ जन्मादिसूत्रलक्षितान्यपीति ननु सूत्रेऽपीति १ पु०, जन्मादिसूत्रेऽपीति २ पु० ।

‖ एवकारो नास्ति ३ पु० ।

¶ परिहरति वेदान्तेत्यादिनेति ३ पु० ।

** ज्ञानानन्तानन्देति ३ पु० ।

†† विषयादनुमानादिति ३ पु० ।

‡‡ सूचितेति १ पु० ।

§§ अनुभवितु युक्तमिति ३ पु० ।

७९ २४ मिति तत्राह * अनुभवावसानत्वादित्यादिना । ननु धर्मजिज्ञासायामित्यादिः स्पष्टार्थः । किमिति धर्मस्यानुभवानपेक्षेति चोदयति कथमिति । धर्मस्यानुभवायोग्यत्वादनपेक्षितानुभवत्वाच्च न शब्दादन्यापेक्षेति दर्शयति कर्त्तव्ये हीत्यादिना । ननु सिद्धस्वभावस्यानुभवयोग्यत्वे ऽपि किमित्यनुभवो ऽपेक्ष्यत इति तत्राह इह तु सिद्धस्येति । ननु वेदप्रमेयत्वाविशेषान्मननिदिध्यासनानुभवेषु धर्मवद् ब्रह्मण्यपि मा भूदपेक्षा ब्रह्मवद्वा धर्मे ऽपि स्यादपेक्षेत्यत आह न हि कर्त्तव्यसिद्धार्थनिष्ठयोरिति । अस्तु पुरुषेच्छावशनिर्वर्त्यत्वमपीति तत्राह † ततो विधिप्रतिषेध इति । यजेत न भक्षयेदितिवद् ब्रह्मणो विधेयत्वं प्रतिषेध्यत्वं चे‡त्यर्थः । विकल्प इति । व्रीहिभिर्यवैर्वेतिवद् ब्रह्म वा स्थाणुर्वेतीच्छाविकल्पः § । समुच्चय इति षड्याग||समुच्चयः इह ब्रह्म स्थाणुश्चेत्यर्थः । उत्सर्गापवाद इति । न हिंस्यात्सर्वा भूतानि अग्नीषोमीयं पशुमालभेत आहवनीये जुहोति पदे जुहोतीतिवत् सामान्यप्रतिपन्नब्रह्मणो विशेषे ऽपवादः । बाधाभ्युच्चय इति । प्रकृतेरतिदिष्टानां कुशमयबर्हिषां विकृतावुपदिष्टशरमयबर्हिर्भिर्बाधवद् ब्रह्मणो ऽपि क्वचित्प्राप्तस्य पदार्थान्तरेण बाधः । ¶ प्राकृतानां ** पञ्च†† [नारिष्टहोमानां वैकृतैरुपहोमैः समुच्चित्यानुष्ठानवद् ब्रह्मणो ऽप्यतिदिष्टस्योपदिष्टेन समुच्चित्यानुष्ठानमभ्युच्चयः]‡‡[प्रयाजान्यजतीति प्रकृतेर्विकृतावतिदिष्टानां विकृतावेकादश प्रयाजान्यजतीत्युपदिष्टेन समुच्चित्यावृत्त्या षोडशप्रयाजानुष्ठानवद् ब्रह्मणो ऽप्यतिदिष्टस्योपदिष्टेन समुच्चित्यानुष्ठानमभ्युच्चयः] §§ व्यवस्थितविकल्प इति । उदिते जुहोत्यनुदिते जुहोतीतिशाखाभेदव्यवस्थावत्क्वचिद् ब्रह्म भवति न भवतीति व्यवस्था अस्त्वेवं धर्मसाम्यं ब्रह्मण इति चेन्नेत्याह न वस्तुनीति । तदेव प्रपञ्चयति तथा चैकस्मिन्निति । परः परिचोदयतीत्यतः प्राक्तनः स्पष्टार्थः । पुनरनुमानवादिन-
८० १५ श्चोदयन्ति ननु भूतवस्तुविषयत्व इति । नन्वनुमानसूचनपरं सूत्रं न प्रति

---

* अनुभवेत्यादिनेति ३ पु॰ ।

† तत इति॰ यजेत न भक्षयेदितिवद् ब्रह्मणोऽपि विधेयत्वं प्रतिषेध्यत्वमिति ३ पु॰ ।

‡ वास्थाने चः २ पु॰ । § उच्यत इति अधिकमत्र ३ पु॰ । || समुच्चयवद् ब्रह्मेति ३ पु॰ ।

¶ प्राकृतानां वार्विशिष्टहोमानामिति ३ पु॰ । ** पञ्चेति नास्ति १ पु॰ ।

†† [ ] एतच्छृङ्खलान्तर्गतस्तु २ पु॰ टिप्पणीमुद्रयो परिष्टाल्लिखित आस्ते ।

‡‡ [ ] एतच्छृङ्खलान्तर्गतः पाठः ३ पु॰ नास्ति १ पु॰ च टिप्पणीमुद्रयो परिष्टाल्लिखित इति टिप्पण्येवेति द्रष्टव्यम् । §§ व्यवस्थितो विकल्प इति १ पु॰ ।

भातीति तत्राह पूर्वसूत्रेणेति । ज्ञानानन्दप्रत्यग्भूतब्रह्मणश्चक्षुरादिना सामा- ८० १०
न्यमात्रविषयानुमानेश्च भूतवस्तुत्वे ऽपि नानुभावः कर्तुं शक्यत इति परिहरति
*नेन्द्रियाविषय†त्व इत्यादिना । अत इत्युपसंहारः । नन्वेवं सतीति स्पष्टार्थः ।

उच्यत इत्यादेः परिहारस्यायमर्थः । ज्ञानानन्दसर्वज्ञप्रत्यगात्मभूतं ब्रह्म ‡ निश्चाययितुमसमर्था अपि युक्तयः शब्दावगते ब्रह्मणि सामान्यद्वारेण संभावनाबुद्धिहेतवो भवन्ति । कथम् । जगदुपादाने ऽद्वितीये शब्दावगते मृदादिदृष्टान्तैरुपादानव्यतिरेकेण कार्यस्यानिरूपणादऽद्वितीयता संभाव्यते स्फटिकलौहित्यप्रतिबिम्बरज्जुसर्पघटाकाशदृष्टान्तैरात्मनि कर्तृत्वादेरारोपितत्वं जीवब्रह्मैक्यं ब्रह्मव्यतिरिक्तप्रपञ्चस्यानन्त्याभावः असङ्गत्वद्वारेण विशुद्धाद्वितीयप्रत्यगात्मता संभाव्यत इति । किं पुनस्तद्वेदवाक्यमिति भाष्यस्याक्षेपार्थमाह सर्वत्र वेदान्तवाक्ये ब्रह्मपदस्येत्यादिना ।

येषां वेदान्तवाक्यानामित्यादेः परिहारस्यायमर्थः । सत्यज्ञानानन्दप्रत्यगात्मा§द्वितीयब्रह्मपदार्थे ऽप्रसिद्धे ऽपि बहुत्वमात्रस्य प्रसिद्धत्वात्तदनुवादेन सन्निहितपदार्थसंसर्गसामर्थ्याद्विशिष्टब्रह्म प्रतिपत्तुं शक्यत इति ब्रह्मप्रतिपादनपरं सत्यादिवाक्यमर्थान्तदेव लक्षणमिति । न सत्यज्ञानानन्दब्रह्मस्वरूपलक्षणस्य सिद्धानुवादप्रसङ्ग इति । ननु स्वाध्यायपाठक्रमेण नार्थप्रतिपत्तिः किन्तु वैपरीत्येन प्रसिद्धानुवादेनाप्रसिद्धं प्रतिपाद्यत इतिन्यायात् । तथाच कारणस्य प्रसिद्धत्वाद् यस्मादाकाशः संभूतः स आत्मा सत्यं ज्ञान ‖ मनन्तं ब्रह्मेति ¶ वाक्यप्रवृत्तिस्तथा यस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते स सर्वज्ञः सर्वविदिति तथा यस्मात्प्राणादि जायते स दिव्यो ह्यमूर्तः पुरुष इत्यादि तथा यो भूतयोनिः ** तदद्रेश्यमग्राह्यमित्यादि यस्मात्तेजोबन्नानि जायन्ते तत्सदद्वितीयमणिमा तत्त्वमसीत्यादिकारणमात्रानुवादेन तद्विशेषः प्रतिपाद्यत इति सत्यम् अधिकारिज्ञानकर्तव्यता ब्रह्मात्मप्रतिपादनानां क्रममभिप्रेत्येदमुक्तं तदाह तथैवोदाहरणमिति । ननु जगत्कारणे नानात्वस्या ऽपि प्रतिपत्तेः कथं तदनुवादेन ब्रह्म प्रतिपादनीयमिति चोदयति कथमिति । परिहरति पूर्वोक्तेनेत्यादिना । ८१ ११

---

* नेन्द्रियेतीति ३ पु॰ † त्वप्रत्ययोनास्ति १, २ पु॰ । ‡ निश्चापयितुमिति १ पु॰ ।
§ अद्वितीयेति नास्ति १ पु॰ । ‖ अनन्तब्रह्मेति वाक्यवृत्तिस्तथा यस्मदेव ब्रह्मेति १ पु॰ ।
¶ वाक्यवृत्तिरिति ३ पु॰ अपि ** तदद्रश्यमिति ३ पु॰, यत्तदद्रेश्यमिति तु श्रौतः पाठः ।

अयमर्थः । जगत्कारणमात्रानुवादे ऽपि तस्य नानात्वशङ्कायां यत इत्येकत्वनिर्देशादेकत्वमपि प्रमीयते । नन्वनुवादे प्रमितिरनुपपन्ना । न । जगत्कारणे*कत्वपुरोवादाभावादनुवादसामर्थ्यादेवैकत्वं प्रमीयते अन्यथानुवादवैयर्थ्यात् । नन्वेकत्वे ब्रह्मलक्षणे च प्रमीयमाणे वाक्यभेदः स्यात् नैकत्वस्य ब्रह्मप्रतिपत्तिगुणभूततयैकवाक्यत्वात् । अथवा एकत्वमपि लक्ष्यान्तर्गतमेव भवति न लक्षणान्तर्गतम् । तथाहि जगत्कारणमात्रानुवादे-
८१ १३ नैकं ब्रह्म विधीयत इति ततः किमायातमिति तदाह अर्थात्सर्वज्ञमिति । न संज्ञासंज्ञिसंबन्धपरं वाक्यम् किंत्वर्थप्रतिपादनपरम् आर्थिकस्तु संज्ञासंज्ञिसंबन्ध इत्याह पुनस्तद्विजिज्ञासस्वेत्यादि । एकं सर्वज्ञं सर्वशक्ति सर्वतो ऽनवच्छिन्नं च जगत्कारणं तन्न ब्रह्मशब्दाभिधेयमित्यर्थः ।

ननु निरुपाधिकब्रह्मस्वरूपकथनमन्तरेण सोपाधिकानां सर्वज्ञत्वादीनां कस्यचिद् धर्मतया प्रतिपत्तिर्न युक्ता तत्र यत् सुषिरं तदाकाशं प्रकृष्टप्रकाशश्चन्द्र इत्यादिवत् स्वरूपलक्षणमेव किंचिद्वक्तव्यम् । ब्रह्मशब्दाभिधेयमेव स्वरूपलक्षणमिति चेन्न । बृहत्त्वधर्ममात्रा†भिधानात् । महान् घट इत्युक्ते महत्त्वस्य निरुपाधिर्घटो धर्मितया प्रतीयते तथेहापि वक्तव्यं‡ सच्छब्दाभिधेयं लक्षणमिति चेन्न । महासामान्यमात्राभिधानात् । सन्नित्युक्ते घट इत्यवान्तरसामान्यव्यक्तिर्महासामान्यपर्यवसानत्वेनाऽपेक्ष्यते तथेहाप्यवान्तरसामान्यव्यक्तिर्वक्तव्या । विज्ञानमेव बृहत्त्वसर्वज्ञत्वादिधर्मवतया निरुपाधि ब्रह्मस्वरूपलक्षणमिति चेत् । न । तस्य§ सुखदुःखरागद्वेषादिमहासामान्यत्वात् तस्याप्यवान्तरसामान्यव्यक्तौ पर्यवसानं
,, १७ वक्तव्यमिति तदाह तस्य च निर्णयवाक्यमानन्दाद्ध्येवेति । आनन्द एव हि ब्रह्मत्वसर्वज्ञत्वकारणत्वादिधर्मवतया निरुपाधि ब्रह्मस्वरूपं निर्णीयते । तथाहि यत्र नान्यत्पश्यतीत्यारभ्य यो वै भूमा तत्सुखमिति सुखस्यैव बृहत्त्वधर्मवत्तामाह । विज्ञानं तर्हि निरुपाधिकब्रह्मगुण इति चेत् । किं विज्ञानानन्दयोः सामानाधिकरण्यं नीलोत्पलवद्गुणगुणिभावात् किंवा द्रव्यं घट इतिवत्परा-

* एकत्वे पुरोवादेति १, ३ पु० । अनन्तत्याधिक्रमत्र १ पु० ।
† अभिधानात् यथा घटो महानिति १ पु०, अभिधानत्वात् यथा महाघट इति ३ पु० ।
‡ स शब्देति २ पु० ।
§ एतच्च मतान्तरमवष्टभ्योक्तम्, वस्तुतो ज्ञानत्वसामान्यस्यापि परोक्षापरोक्षरूपेणानेकाविधत्वात्र तेनापि ब्रह्मस्वरूपनिर्णय इत्यर्थ इति भाव० ।

परसामान्यभावादिति । न तावद्गुणगुणिभावः* साक्षी चेता केवलो निर्गु-
णश्चेति श्रुतेः एकधैवानुद्रष्टव्यं नेह नानास्तीति गुणगुणिभावभेदप्रतिषेधात्
गुणस्य गुणिनोऽन्यत्वानन्यत्वाभ्यामनिरूपणात् । अत्र सर्वसङ्करवादी न निर्गुणं
द्रव्यमस्तीति जल्पति । मा भून्निर्गुणं द्रव्यम् ब्रह्म तु न द्रव्यम् प्रमाणाभावात् ।
समवायिकारणत्वाद् द्रव्यमिति चेन्न आरम्भवादानभ्युपगमात् । उपादानकार-
णत्वाद् द्रव्यमिति चेन्न । गुणादानामपि ग्रहणकर्मत्वादिधर्मोपादानत्वात् । न नि-
र्गुणं वस्त्विति चेत् † अन्त्यगुणे‡ष्वनेकान्तः । § तस्मात् ‖ तत्त्वज्ञान• प्रदुष्टमात्रमे-
तन्न निर्गुणं ब्रह्मेति । तस्माद् द्रव्यं घटः सन् घट इतिवत्परापरसामान्यनिब-
न्धनं विज्ञानमानन्दमिति सामानाधिकरण्यम् । तस्माद्विज्ञानसामान्यालम्ब-
नमानन्दविशेषो ब्रह्मेति । तत्र ** सर्वज्ञाद्वितीयत्वादिधर्माणां प्रपञ्चोपाधि-
तया ऽनिर्वचनीयत्वान्न तैर्ब्रह्म सगुणं सद्वितीयं वा भवति । विज्ञानसामान्य-
मपि दुःखरागादिप्रपञ्चोपाधितया ऽनिर्वचनीयं सद् ब्रह्मणि विज्ञानशब्दप्रवृ-
त्तिमात्रहेतुर्भवति । विज्ञानगुणत्वाभावे न विज्ञानं ब्रह्मेति चेत् न । विज्ञान-
सामान्यालम्बनस्य विज्ञानव्यवहारगोचरत्वाद्विज्ञानप्रयुक्तार्थक्रियाकारित्वाच्च ।
सामान्यस्याभासत्वात्तदालम्बनं ब्रह्म†† ज्ञानं मिथ्याज्ञानमिति चेन्न । मुख्यसामा-
न्यान्तराभावादस्यैव च मुख्यत्वात् । तस्माद्विज्ञानस्वभाव आनन्दो ब्रह्मेत्यान- ८१
न्दस्यैव ब्रह्मतां प्रतिपादयति प्रसिद्धावद्योतकेनेत्यादिना । तस्मात्सर्वेषु वेदा-
न्तवाक्येषु पाठव्यत्यासेन जगत्कारणमात्रानुवादेन तस्य ब्रह्मत्वं प्रतिपाद्यत
इत्युपसंहरति तस्माद् ब्रह्मपर इति ।

‡‡ इति पञ्चपादिकाविवरणे पञ्चमं वर्णकम् ।

द्वितीयं जन्मादिसूत्रस्य परिसमाप्तम् ॥

* साक्षी चेताः केवल इति ३ पु. ।

† गुणानामपि गुणवत्त्वे प्रामाणिकानन्तगुणप्रसङ्गान्निर्गुणं किञ्चिदुक्तव्यम्, तत्र च वस्तुत्वहेतोरनैकान्तिकत्वमित्यर्थ इति भाव० । ‡ अनैकान्त इति २ पु. ।

§ किञ्च, गुणानां ब्रह्मणा न समवायः सम्बन्धः, नापि तादात्म्यम्, समानसत्ताकं भेदाभेदात्मनस्तस्य विरोधेना सम्भवात्, नापि सिद्धान्त्यभिमतः कल्पितो भेदसत्तामहिम्णा धर्मविशेषः, श्रुतेर्मिथ्यार्थे तात्पर्ये ऽप्रामाण्यप्रसङ्गात्, नवात्यन्ताभेदेऽपि गुणगुणिभावः, स्ववृत्तित्वाभावे तस्य पारिभाषिकत्वादिति, तस्मान्निर्गुणमेव ब्रह्मेत्युपसंहरति तस्मादिति तत्त्व० ।

‖ तत्त्वदर्शनप्रदुष्टेति ३ पु. । • प्रशब्दो नास्ति २ पु. । •• सर्वज्ञत्वाद्वितीयत्वादीति ३ पु. ।

†† ज्ञानमिति नास्ति २, ३ पु. ।

‡‡ इति श्रीमत्परमहंसपरिव्राजकानन्दानुभवपूज्यपादशिष्यस्य प्रकाशात्मभगवतः कृतौ पञ्चपादिकाविवरणे द्वितीयसूत्रं समाप्तमिति १ पु. ।

शास्त्रयोनित्वात् ।

शब्दोपादानभावाद् ध्वनिगतविषयद्योतना: शक्तयो ऽमू-
र्ब्रह्मण्येवासुरऽग्नेर्विषयविषयिणी दीपशक्तिः खलूच्चैः ।
दृष्टुश्चज्ञानशक्तिर्ननु न करणता किन्तु दीपप्रभावत्
संयुक्तद्योतनैवेत्यपरमिह पुनः साध्यते सर्ववित्त्वम् ॥

ब्रह्मणो * लक्षणद्वयाभिधानपरे ऽपि सूत्रे सर्वज्ञत्वं प्रधानादिकारणवैल-
क्षण्यस्य सिद्धये जगद्विरचनोपपत्तये च श्रुतियुक्तिभ्यां प्राधान्येन प्रदर्शितम्
तदेव हेत्वन्तरेण साधयति प्राधान्यात् अथवा सर्वजगत्कारणत्वेन सर्वज्ञत्वं
न संभवति वेदानाम † कर्तृकत्वादित्याशङ्क्य संबन्धमाह अयमपर इति ।
वेदस्य तावत् सर्वविषयसामर्थ्यं दर्शयति । तदुपादानतया ब्रह्मणो ऽपि
तद्दर्शयितुमनेकनानाविधविषयविद्यास्थानेति । ननु नास्ति वेदस्य सर्वज्ञता
अर्थज्ञानकरणतयोपयोगादिति । सत्यमऽत एव कल्पप्रत्यय ‡ प्रयोग इति । ननु
वेदस्य सर्वविषयज्ञानसामर्थ्ये ऽपि ब्रह्मणः कथं सर्वज्ञतेत्यत आह § ततश्च
तस्य कारणमिति । दृश्यत इत्यादि दृष्टान्तः । अयं प्रयोगः । वेदः स्ववि-
षयादधिकतरविज्ञानवत्प्रणीतो भवति वाक्यप्रमाणत्वात्पाणिन्यादिशास्त्रव-
दिति । ननु किमत्रानुमानेन ‖ प्रसाध्यते । यदि तावदुपाध्यायस्याध्यापनो-
च्चारणवच्छास्त्रशब्दोपलक्षितानां सर्वेषां शब्दानां ब्रह्मण्यप्युच्चारणं साध्यते ।
तदा नोपाध्यायवत् सर्वज्ञं ब्रह्म भविष्यति । अथ सकलवाक्यार्थं प्रमाणान्त-
रेणोपलभ्य तत्प्रतिपत्त्यर्थं परस्मै वाक्यं विरचयति । प्राप्तं तर्हि पौरुषेयत्वम्
८२ ७ तल्लक्षणत्वात्पुरुषवचसामिति चोदयति नन्वेवं सतीति ।

अत्र केचित्परिहारमाचक्षते । प्रमाणान्तरेणार्थमुपलभ्य विवक्षित्वा पर-
स्मै विरचितः शब्दः पौरुषेय इत्युच्यते । तत्रेदमनेन कर्तव्यमिति वक्तुरभिप्राय-
भेदो रागः पुरुषवचसामर्थः । द्विविधश्च ¶ रागो नित्यो ऽनित्यश्च । तत्रानीश्वरा-
णामभिलषितसाधनज्ञानस्यानित्यतया तज्जन्यरागस्या ** प्यनित्यत्वात् तद्वि-
षयाणां पुरुषवचसां प्रमाणान्तरसापेक्षतया †† पौरुषेयत्वमङ्गीयते । ईश्वरस्य तु

---

* लक्षणतयेति २, ३ पु० ।  † अकर्तृत्वादिति २, ३ पु० ।
‡ प्रयोगोऽपीतीति १ पु० ।  § ततश्चेतीति ३ पु० ।  ‖ अत्रशब्दो नास्ति १ पु० ।
¶ रागो नित्यश्चानित्यश्चेति १, ३ पु० ।  ** अपिशब्दो नास्ति २, ३ पु० ।
†† पौरुषेयत्वं संगीयते–इति १, २ पु० ।

पुनर्निखिलेष्टसाधनविषयज्ञानानां नित्यतया तन्मूलरागस्यापि नित्यत्वादीश्वरप्रणीतानामपि वैदिकवचसां * नित्यरागविषयतया पौरुषेयता न जेगीयत इति। नैतत्सारम्। ईश्वरे सकलाभिलषितसाधनज्ञाननित्यत्वे प्रमाणाभावात् अनुमानानां चाऽतद्गोचरत्वस्य दर्शितत्वात्। शब्द इति चेत्। न। † इतरेतराश्रयापातात् नित्यज्ञानमूलनित्यरागजन्यत्वे शब्दस्यानपेक्षं प्रामाण्यम् अनपेक्षे च शब्दे नित्यज्ञान‡सिद्धिरिति। § रागश्च नित्यो नित्याभिलषितसाधनज्ञानमूल इति च व्याहन्यते। कुतश्चेदं लब्धम् नित्यानित्याभिप्रायभेदेन पुरुषवचसामपि सतां ‖ सापेक्षत्वानपेक्षत्वविभागो विद्यत इति। न च पुरुषाभिप्रायः शब्दार्थ इति च वक्ष्यते। तस्मादसमञ्जसमेतत्॥

अन्ये तु सङ्गिरन्ते। व्यासाद्यभिप्रायभेदतात्पर्यवतामपि भारतवचसामिदानीन्तनवाचकवदऽध्ययनविधितात्पर्यवतामेव वेदानां सृष्टिकाले समुच्चारणमीश्वरस्य वेदप्रणयनं नाम। ततश्च राग ¶ तात्पर्याभावाद्वेदप्रामाण्यमीश्वरस्य सर्वज्ञता चेति। अत्र वयं पृच्छामः। सृष्टिसमये किं प्रमाणान्तरेणार्थमुपलभ्य वेदवाक्यं व्यनक्ति यथा पाणिन्यादिः आहोस्विदुपाध्यायवत्पूर्वसिद्धवाक्यमुच्चारयति। तत्र पूर्वस्मिन्कल्पे पौरुषेयतापत्तिः। उत्तरस्मिन्नुपाध्यायवदेवासर्वज्ञतापत्तिः। अभिप्रायतात्पर्याभावादपौरुषेयतेति चेत्। उपलभ्यरचनायां कुतो रागतात्पर्याभावः। पूर्वमेव विधितात्पर्यादिति चेत्। तथापीतरन्न विहन्यते। न चोभयतात्पर्यमुपपद्यते। सत्यपि विधितात्पर्ये ऽवगम्यार्थं रचनैव सापेक्षत्वे निमित्तं समधिगतम्। न चोपलभ्यरचनायां विधितात्पर्य ** मुपपद्यत इति यत्किञ्चिदेतत्।

अपरे तु मन्यन्ते। निर्विकल्पकज्ञानपूर्वकाणि किल वेदवाक्यानि न सापेक्षत्वदोषमश्नुवते ब्रह्मस्वरूपज्ञानस्य निर्विकल्पकत्वात् लौकिकवचसां तु सविकल्पज्ञानपूर्व †† त्वात्सापेक्षतेति। नायमपि विभागः सिध्यति। उप-

* नित्यरागविषयवैदिकविषयतया पौरुषेयत्वचेति ३ पु०।

† इतरेतराश्रयादिति १, ३ पु०।

‡ सिद्धेरिति १ पु०।

§ रागो नित्यश्चेति व्याहन्यते लोके रागस्यानित्यत्वनियमादित्यर्थः· नित्यश्च ज्ञानकार्यश्चेत्यत्रव्याहतम्, नित्य इत्युक्ते सर्वकालसंबन्धित्वं प्रतीयते, कार्य इत्युक्ते कदाचिदसत्त्वसंबन्ध इति व्याघात इत्यर्थ इति तत्त्व०।

‖ सापेक्षत्वनिरपेक्षत्वेति १ पु०।

¶ भेदशब्दोऽत्राधिकः १ पु०।

** उपपद्यते तस्माद्यत्किंचिदेतदिति ५ पु०।

†† कप्रत्ययोऽत्राधिकः ५, ३।

लभ्यरचनाया एव * सापेक्षत्वनिमित्तत्वात्स्वरूपज्ञानस्याप्यभिलषितसाधनोपरागे सविकल्पकत्वात् । तस्मान्नैते परिहाराः । † स्यात्तर्हि वेदानां पौरुषेयता । नन्वपौरुषेयो वेदः व्यवहाराविच्छेदे सत्य ऽस्मर्यमाणकर्तृकत्वादात्मवदित्यपौरुषेयतानुमीयत इति । न । चिरवृत्तेष्वपीदानीमनुमानप्रमीयमाणकर्तृकेष्वनैकान्तिकत्वात् । वेदानां च कर्तुरनुमानागमाभ्यां प्रमीयमाणत्वात् । तथाहि । विशिष्टबहुज्ञपुरुषप्रणीतो वेदः बह्वर्थविषयवाक्यप्रमाणत्वाद्भारतवत् । ‡ इदं सर्वमसृजत ऋचो § यजूंषि सामानीत्यागमः । तस्मात्पौरुषेयो वेद ‖ इति ।

अथ पृच्छामः । कथं पौरुषेये वेदे प्रामाण्यं लभ्यते कपिलकणादाक्षपादानामिति । सर्वज्ञप्रणीततयेति चेत् । न तावदनुमेयः सर्वज्ञ इत्युक्तम् । आगमात्तत्सिद्धिः । न । इतरेतराश्रयात् सर्वज्ञे सिद्धे तत्प्रणीततया वेदप्रामाण्यम् ततश्च सर्वज्ञसिद्धिरिति । स्यादेतत् । महाजनपरिग्रहाद्वेदप्रामाण्यमिति । न । ¶ सुगताद्यागमानुसारिणामेव ** देशविशेषेष्वानन्त्यश्रवणात् । न च देहात्मभावचन्द्रप्रादेशत्वादीनां महाजन †† परिगृहीतानां प्रामाण्यं दृश्यते । न च महाजनपरिग्रहः प्रमाणपक्षपाती । तस्मान्न प्रामाण्यलाभः ।

किञ्च । पुरुषो वा केन प्रमाणेनोपलभ्य धर्माधर्मौ वेदवाक्यं विरचयेत् । न तावदिन्द्रियपञ्चकेन रूपरसगन्धस्पर्शशब्दवत्तत्समवेत ‡‡ तद्विशेषग्राहित्वात् वर्तमानग्रहणनियमाच्च धर्मस्य च साध्यत्वात् । नन्वात्मसमवायी धर्मस्तद्ग्रहणेनैव ज्ञानेन तद्गुणतया मनसैव चक्षुरादिना वा गृह्यत इति । किमिति त §§ र्हि तस्मिन्न गृह्णीमः । न च विशिष्टः पुरुषो गृह्णाति । तदिन्द्रियाणामप्येतादृशत्वात् । योगजधर्मसामर्थ्याद्विशिष्टानि तदिन्द्रियाणीति चेत् । तथापि मार्ज्जारादिदृष्टिवत्स्वविषये ऽतिशयमात्रं गृह्णीयुः नाविषयं धर्मम् । दिव्यं चक्षुर्ददाम्यहम् प्रादात्तेषां स भगवान् दिव्यं चक्षुर्ज्जनार्दन इति स्मरणादस्ति योगिनां दिव्यं चक्षुरिति चेन्न । तस्यापि विश्वरूपादिस्वविषयातिशयदर्शि-

* सापेक्षत्वेति ३ पु० ।
† स्यात्तर्हि पौरुषेयता वेदस्येति १ पु० ।
‡ इदं सर्वमिति ३ पु० ।
§ यजूंषीति ३ पु० ।
‖ इति शब्दो नास्ति ३ पु० ।
¶ सुगताद्यनुसारिणामिति १, २ पु० ।
** देशविशेषविशिष्टस्वभवणादिति ३ पु० ।
†† परिग्रहादीनामिति ३ पु० ।
‡‡ तद्विशेषग्राहित्वादिति १ पु० ।
§§ तर्हि इति नास्ति १ पु० ।

त्वात् । न चात्मसमवेततयापि धर्मो वर्त्तमानो भवति येन प्रत्यक्षः स्यात् । कल्पान्तरीयो ऽनुष्ठितो धर्मो ऽस्मिन्कल्पादौ वर्त्तत इति चेन्न । कल्पान्तरीयधर्मोपदेशायोगात् । ततो ऽपि कल्पान्तरा * नुष्ठितधर्मं प्रत्यक्षेणोपलभ्योपदिशतीति चेत् । अन्धपरम्परा स्यात् । तस्मान्न प्रत्यक्षमूलो वेदः । नापि शब्दमूलो ऽनवस्थानात् । तस्मात्प्रामाण्यहानान्न पौरुषेयो वेद इति ।

मा भूत्प्रामाण्यमिति सुगताहर्ताः । तैरिदं वक्तव्यम् । प्रत्यक्षानुमानदृष्टव्यतिरिक्तः कर्मफलसंबन्धो विद्यते नवेति । विद्यते चेत्कथमपौरुषेयागममन्तरेण तस्य सिद्धिः । सर्वज्ञ † सुगतप्रणीतागमादिति चेत् । किं कपिलादयः सर्वज्ञा न भवन्ति । सर्वे ‡ तीर्थकराः सर्वज्ञा इति चेत् । धर्माधर्मयोर्विवादः कथं स्यात् । न चैकः सर्वज्ञो नेतर इति प्रमाणमस्ति । न च सर्वे सर्वज्ञप्रणीता धर्मा एवेति युक्तम् । अन्योन्यधर्मनिराकरणात् । न चापौरुषेया एव सुगताद्यागमा इति युक्तम् अनुस्मर्यमाण-§ कर्तृकत्वात् । अपौरुषेयत्वे ‖ वा न विवदामः उदितानुदितहोमवद्व्यवस्थोपपत्तेः ।

आह लोकायतः । मा भूत्प्रत्यक्षदृष्टातिरिक्तः कर्मफलसंबन्धः पौरुषेयता तु वेदस्यानुमानसिद्धा न निवार्यत इति । स वक्तव्यः । किं लौकिकवचांसि प्रमाणानि न वेति । न चेत् । न मया ते वादो युक्तः शब्दैरेव परस्परविरुद्धार्थप्रतिपादनरूपत्वाद्वादस्य । अथ लौकिकवचांसि प्रमाणानि । वेदवचोभिस्तर्हि किमपराद्धम् । ¶ ननु पौरुषेयत्वं वेदस्यानुमानात् तस्य च मूलप्रमाणाभावादप्रामाण्यमुक्तम् । न । स्वाभाविकत्वाच्छब्दानामर्थावबोधसामर्थ्यस्य पुरुषप्रत्ययानुसारित्वाभावात् । अन्यथा सागरं विवक्षन्मेरुशब्दं ब्रूयात् । स्वभावसिद्धशब्दसामर्थ्यानुसारेण हि लौकिकाः शब्दं प्रयुञ्जते । सत्यम् । कदाचित्सर्वाभिधानसङ्केतसामर्थ्यादिदानीं व्यवस्थयाभिधानमिति चेत् । ** तन्न । विवादगोचरापन्नः †† पूर्वतनशब्दार्थसंबन्धव्यवहारस्तथाविधपूर्वपूर्वव्यवहारपरम्परानिबन्धनो ऽभिधानाभिधेयव्यवहारत्वादिदानीन्तनतद्व्यवहारवदित्यनादितानु-

---

* अनुष्ठितं धर्ममिति १ पु० ।
† सुगतादिप्रणीतेति ३ पु० ।
‡ तीर्थङ्करा इति १ पु०, तीर्थकारादिति २ पु० ।
§ कर्तृत्वादिति २ पु० ।
‖ वास्थाने चशब्दः १ पु० ।
¶ ननु पौरुषेयत्वानुमानात्तस्य चेति २ पु० ।
** तच्छब्दो नास्ति १ पु० ।
†† पूर्वतनेत्येव त्रिष्वपि पाठः ।

मानात् । साङ्केतिकशब्देष्वनैकान्तिक इति चेन्न । अभिधानाऽभिधेयविषयत्वादनुमानस्य । जातिमात्राभिधायिनो वा सर्वदेशेष्वभिधानतया * संप्रतिपन्ना वा यस्मिन्नुत्पद्यमाने क्वचिद्गृहीतसंबन्धा एवोपरज्यन्ते शब्दाः † तानि चाभिधानानि नैवं साङ्केतिकाः शब्दा इति । मा भूत्तर्ह्यभिधानसङ्केतः वेदवाक्यरचना तु पुरुषनिबन्धनैवेत्यत आह न स्याद् ब्रह्मवदऽनादित्वादिति । विवादगोचरापन्नं सृष्टिकालीनं वेदाध्ययनं पूर्वपूर्वतथाविधवेदाध्ययनानुस्मृतिनिबन्धनं भवितुमर्हति वेदाध्ययनत्वादिदानीन्तनवेदाध्ययनवदिति विशेषतोदृष्टानुमानेन वाक्यत्वाद्भारतवदिति सामान्यतोदर्शनाद्बलीयसा वेदस्यानादित्वसिद्धेः कुतः पौरुषेयता । ननु सर्वेष्वपि ग्रन्थेष्विदमनादित्वानुमानमनुविशति । न । तैरेव ग्रन्थैस्तत्तत्कर्तॄणां प्रतिपादनात्तदागमविरोधात् । इहापि श्रुत्यैव वेदस्य कर्ता प्रतिपाद्यत इति चेत् । न तावत्स तया वाचे ‡ दं § सर्वमसृजत ऋचो ‖ यजूंषि सामानीति श्रुतिः प्रजापतिविषया ¶ सती तस्य प्रमाणान्तरेणार्थमुपलभ्य शब्दरचनां ब्रवीति । यो ब्रह्माणं विदधाति पूर्वं यो ** वेदांश्च प्रहिणोति तस्मा इति श्रुतौ प्रागेव वेदसद्भावावगमात् । अस्य महतो भूतस्येति श्रुतिरीश्वरविषयापि सती प्रकरणसामर्थ्याद्वेदोपादानत्वमेव ब्रवीति ।

किं चेदं पौरुषेयत्वं साध्यते । यदि तावत्पुरुषनिर्वर्त्यतामात्रम् । संप्रतिपन्नमेव तत् । क्रमविशिष्टानामेव वर्णानां वेदशब्दाभिधेयत्वात्क्रमस्य तूच्चारणोपलभ्यो †† रन्यतरस्य ‡‡ प्रतिवर्णनिर्वर्त्यतया तद्विशिष्टवर्णानामपि प्रत्युच्चारणं जन्यत्वात्पूर्वपूर्वक्रमा§§नुस्मरणेन तत्सदृशोत्तरोत्तरक्रमनिवर्तनात्क्रमसादृश्यपरम्परायां ‖‖ स्वानिदंप्रथमतया तद्विशिष्टवर्णनित्यत्वाभिधानात् । अथ वेदः ¶¶ स्वार्थप्रवृत्तप्रमाणान्तरजन्यत्वात्पौरुषेय इति । तत्र प्रत्यनुमानमुच्यते । वेदः स्वार्थप्रवृत्तप्रमाणान्तरजन्यो भवति असर्वज्ञवचनत्वाभावे सति धर्मो *** धर्म-

* वाशब्दोऽत्राधिकः १ पु० ।
† तान्येवाभिधानानीति १ पु० ।
‡ वृद्ध॰सर्वमिति ३ पु० ।
§ विश्वमसृजतेति १ पु० ।
‖ यजुंऽषीति ३ पु० ।
¶ सतीति तस्येति १ पु० ।
** यो वै वेदांश्चेति १ पु० ।
†† अन्यतरगतस्येति २, ३ पु० ।
‡‡ प्रतिवर्णं निवर्त्यतयेति २ पु० ।
§§ अनुसरणेनेति २ पु० ।
‖‖ वस्या [illegible]नुशब्दः १ पु० । ¶¶ स्वार्थं प्रवृत्तेति १ पु० । *** अधर्मेति नास्ति १ पु० ।

ब्रह्मप्रमाणत्वात्परपरिकल्पितेश्वरबुद्धिवदिति । अथाध्ययनस्येदंप्रथमता वेदस्य पौरुषेयतेति न । अध्ययनस्यानादित्वानुमानस्य दर्शितत्वात् । तस्मान्नास्ति दस्य पौरुषेयत्वमिति ।

*नन्वाप्तेन प्रमाणान्तरेणार्थमुपलभ्य परप्रतिपत्तये तत्र प्रयुज्यमान: शब्द: प्रमाणं भवति तदभावादनाप्तवाक्यवद ऽप्रमाणं वेद: प्रसज्यते । नन्व-नाप्तेन भ्रान्त्योत्प्रेक्षया वा ऽर्थाभास † मुपगम्य परप्रवृत्तये तत्र प्रयुज्यमान: शब्द: प्रामाण्यात्परिहीयते तदभावादाप्तवाक्यवद्वेद: प्रमाणं किं न स्यात् । नन्वाप्त-वाक्यमनाप्तप्रणीतत्वाभावात्प्रमाणं किं वाप्तप्रणीतत्वा ‡ दिति विवेक्तव्यम् । नोभयथापीति ब्रूम: । कथम् । शब्दानां ताव § त्संसृष्टार्थावबोधनसामर्थ्यं स्वारसिकमेव मध्यमवृद्धप्रयोगप्रत्ययाभ्यामाप्तानाप्तप्रत्ययव्यतिरेकेणावगतम् । तत्रानाप्तस्य भ्रान्त्युत्प्रेक्षाज्ञाने तन्मूलविरचित ‖ शब्दकारणदोषतया शब्दे ऽपि दोषं प्रसञ्जयत: । ततश्च दुष्टकारणजन्यविज्ञानमयथार्थमप्रमाणमिति । स्वत:सिद्धशब्दसामर्थ्यप्रयुक्तप्रामाण्यस्य प्रतिबन्धकतया ऽनाप्तज्ञानमवतिष्ठते आप्तप्रमाणं च प्रतिबन्धभ्रान्त्युत्प्रेक्षादिदोषनिरासितया संपद्यते । ततश्चा-प्तज्ञानं न शब्दप्रामाण्यहेतु: । वेदे तु पुरुषसंबन्धाभावान्न प्रतिबन्धतन्निरासा-पेक्षेति नाप्तप्रणीतत्वमत्रोपयुज्यते । नन्वाप्तप्रयोगानपेक्षत्वे ऽग्निपर्वततत्सम्ब-न्धशब्देषु स्मर्यमाणेषु तेभ्य एवाग्निमान्पर्वत इति प्रमितिरुत्पद्येत । सत्यम् । पर्वतस्याग्निमत्तामात्रं प्रमीयत एव पुरोवर्तिनि तु प्रमाणान्तरवि-रोधान्न प्रमीयत इति । अथवा । द्विविध: प्रयोग: प्रामाण्यहेतुरर्थोपलब्धि-निबन्धन: पौरुषेये पूर्वप्रयोगानुस्मृति ¶ निमित्तो वेदे । ** तदुभयाभावान्मुग्धा-दिवाक्येष्वप्रामाण्यमिति । अथवा । तात्पर्याभावात्केवलेभ्य: शब्देभ्यो नार्थ-प्रमिति: । वेदे पुनरध्ययनविधितात्पर्यादाप्तप्रयोगाभावे ऽपि प्रमितिरुत्पद्यते । अध्ययनविधिवाक्यस्यापि स्वेनैव तात्पर्यसिद्धे: । अतो ऽनादिर्वेद इति । अना-दित्वे ऽपि पुराणवाक्यवद †† न्ययासन्निवेशप्रणयनमाशङ्क्याह कूटस्थनित्य- ८२ त्वादिति ।

* नन्वनेनेति शोधितं १ पु० । † अथगम्येति १ पु० , ‡ इति वक्तव्यमिति ३ पु० ।
§ संसृष्टार्थाप्रबोधेति २ पु० । ‖ शब्दस्य कारणेति १ पु० ।
¶ निमित्ते वेदे-इति शोधितम् १ पु० ** तदुभयाभावादुन्मत्तादीति ३ पु० ।
†† अन्ययेति द्विः १ पु० ।

८२ ८ *अनादेर्वेदस्य कथं ब्रह्मकारणतेति शङ्कते कथं पुनरिति। अत्र शास्त्रशब्दोपलक्षितसर्वशब्दानां वर्णानामेकपदार्थबुद्ध्यवच्छेदकवर्णनियामकक्रमविशिष्टपदानां वाक्यार्थबुद्ध्यवच्छेदक† वाक्यनियामकक्रमविशिष्टवाक्यानां महावाक्यार्थबुद्ध्यवच्छेदकवाक्यनियामकक्रमविशिष्टप्रकरणानां परिपूर्णपुरुषार्थसाधनबुद्ध्यवच्छेदकानेकप्रकरणनियामकक्रमविशिष्टशास्त्राणां च प्रवाहरूपेण ब्रह्मोपादानतया कार्यत्वमस्तीत्याह तत्परतन्त्रत्वादित्यादिना।

ननु रज्जुसर्पवदिति वेदस्य मिथ्यात्वं कथं निदर्श्यते। ननु कोऽयं वेदो नाम। न तावद्वर्णमात्रम्। क्रमविशेषवन्तो वर्णा इति चेत्। नास्ति देशकालनिबन्धनो वर्णक्रमः। नित्यतया सर्वगतत्वात्। नापि ‡वस्तुनिबन्धनक्रमो विरोधात्। न ह्येकदेव राजा जरेति जकारस्य रेफात्पूर्वापरीभावो युक्तः। उच्चारणसमवेत एव क्रमो वर्णेषूपरज्यत इति चेन्न। अप्रत्यक्षत्वादुच्चारणतत्क्रमयोः। प्रत्यक्षस्तु क्रमविशिष्टवर्णात्मा वेदः। अथोपलब्धिक्रमवन्तो वर्णा वेदशब्दभाज इति। न। अन्यधर्मस्य क्रमस्यान्यधर्मत्वानुपपत्तेः। अथोपलब्धिधर्म एव क्रमो वर्णेषु समारोप्यत इति §चेत्। तर्ह्यख्यातिवादिनः क्रममात्रस्य वर्णमात्रस्य वेदशब्दानर्हत्वाद्विशिष्टप्रत्ययाभावादऽविवेकमात्रमेव वेद इत्यर्थावबोधो न स्यात्। अन्यथाख्यातौ पुनर्विशिष्टप्रत्ययमात्रत्वाद्विशिष्टार्थाभावाद्विज्ञानातिरिक्तो वेदो न स्यात्। न चोपलब्धिक्रमोपलक्षिता वर्णा वेदः न ‖विशिष्टा इति युक्तम्। क्रमविशिष्टवर्णप्रत्ययस्य प्रत्यक्षत्वात्। अनिर्वचनीये तु पुनर्विशिष्टार्थतत्प्रत्यययोर्भावाद्विज्ञानव्यतिरेकेणार्थस्यानिर्वचनीयत्वेऽप्यर्थक्रियासमर्थतया तुच्छव्यावृत्तसत्ताभ्युपगमादस्त्येवार्थावबोधसमर्थो वेद इति निरवद्यम्।

ननु¶ पाणिन्यादिदृष्टान्तेन यदि सर्वशब्दोपादानतैव ब्रह्मणो वेदस्य पौरुषेयत्वपरिहाराय गीयते तदा कथं तावता सर्वज्ञत्वमिति चोदयति

* समासः १ पु०। † पदनियामकेति १, ३ पु०। ‡ वस्तुनिबन्धनः क्रमः विरोधादिति १ पु०।
§ चेच्छब्दो नास्ति २, ३ पु०। ‖ विशिष्टार्थ इति १ पु०।

¶ वेदस्य पौरुषेयत्वपरिहाराय ब्रह्मणः सर्वशब्दोपादानता यदि गीयते, तदा पाणिन्यादिदृष्टान्तेन यत्सर्वज्ञत्वमुक्तम्, तत्तावता कथं स्यादिति योजना। तावता उपादानत्वमात्रेणेत्यर्थः। अर्थमुपलभ्य शब्दविरचयितरि पाणिन्यादौ शब्दविषयार्थविषयज्ञानमुपलब्धम्, ब्रह्मण्यज्ञानावृतत्वाच्च सर्वज्ञत्वासिद्धिरित्यर्थ इति तत्त्व०।

नन्वेवं * सति कथं सर्वज्ञतेति । परिहरति तस्यैव ज्ञानशक्ति † विवर्तात्म- ८२ ११
कत्वान्नामप्रपञ्चस्येति । अस्ति तावद्वर्णानां क्रमसंख्यादिभेदभाजां मुख्य-
लक्षणादिद्वारेण सर्वार्थप्रकाशन ‡ सामर्थ्यमव्यपदेश्यस्य वस्तुनोऽभावात् । तच्च
कार्यगतमर्थप्रकाशनसामर्थ्यमुपादानकारणधर्म एव § भवति । प्रदीपगत-
प्रकाशन || सामर्थ्यस्य वह्निधर्मत्वदर्शनात्कार्योपादानयोः शक्तिद्वयकल्पना-
ऽयोगात् । एवं सर्वार्थप्रकाशनसमर्थत्वात् सर्वज्ञं ब्रह्म । ननु समर्थस्यापि नित्य-
वज्ज्ञानसंयोगो न भवति । नैष दोषः । यथा प्रकाशद्रव्यस्य प्रदीपस्य
स्वसन्निहिताशेषवस्तुप्रकाशिता एवं प्रकाशस्वरूपस्य ब्रह्मणः सर्वोपादानतया
सर्वसंसर्गिणः स्वसन्निहिताशेषवस्तुप्रकाशिता नित्यवद्भवतीति युक्तं साम-
र्थ्यानुसारेण सर्वज्ञत्वम् । ¶ कथं करणसामर्थ्यानि कर्तृसामर्थ्यानि भवन्तीति
चे**न्न । ब्रह्मणो विषयावगमं प्रति शब्दस्य करणताऽभावात् । ननु स्वयंप्रकाश-
तया सर्वसंसर्गित्वादेव सर्वज्ञता सिध्यति । न । वाय्वाकाशरसगन्धादिव्यापिनो
ऽपि सवितृकिरणस्य तत्प्रकाशनाऽयोग्यत्वदर्शनात् । तस्मात्सर्वार्थप्रकाशनस-
मर्थसर्वशब्दोपादानतया सर्वज्ञं ब्रह्म । तदेतदाह नासतः प्रादुर्भावादिति ॥

॥ †† षष्ठं वर्णकं ‡‡ समाप्तम् ॥

§§ अथवेत्यादिद्वितीयवर्णकविवरणं स्पष्टार्थम् । तस्माज्जन्मादिनिमि-

* सतीति· परीति ३ पु· । † विवर्त्तत्वादिति १ पु· ।
‡ सामर्थ्यव्यपदेश्यस्येति १ पु· । § संभवतीति १ पु· ।
|| सामर्थ्यव्यपदेश्यस्य वस्तुना ऽभावात्तत्र कार्यस्य वह्निधर्मत्वदर्शनादिति १ पु· ।
¶ शब्दस्य ज्ञानं प्रति करणत्वादात्मनश्च कर्तृत्वात्कथं करणकर्तृसामर्थ्यैक्यमित्यर्थ इति तत्त्व० ।

** किं शब्दस्य ब्रह्म प्रति करणत्वमुत जीवं प्रति· नाद्य इत्याह न ब्रह्मण इति· नित्यबोधरूपत्वेन ब्रह्मणः कारणनिरपेक्षत्वादित्यर्थः· नापि द्वितीयः, शब्दब्रह्मणोरभेदाद् ब्रह्मगतप्रकाशशक्तिः शब्देऽप्यन्वेति· तथाच, जीवस्याऽऽगन्तुकज्ञानत्वात्प्रकाशनशक्तिमाञ्शब्दस्तं प्रति करणतां भजत इति नावद्यमस्तीति द्रष्टव्यमिति तत्त्व० ।

†† इति वर्णकं समाप्तमिति १ पु· । ‡‡ समाप्तमिति नास्ति ३ पु· ।

§§ "अथवेत्यादिवर्णकान्तरस्यायमर्थः-तन्त्वौपनिषदं पुरुषं पृच्छामीत्यादि वाक्यं ब्रह्मणो वेदैकगम्यत्वं समर्थयति उत नेति विशयः, कार्यत्वलिङ्गस्य कारणविशेषे पर्यवसानाऽपर्यवसानाभ्यां संदिह्यते· तत्र, कार्यत्वलिङ्गस्य कारणविशेषे पर्यवसानाच्च ब्रह्मणो वेदैकगम्यत्वमिति प्राप्तम्· तथा हि, विमतं कल्पितकारणशक्तिकर्तृपुरस्सरं कार्यत्वात् घटवत्· स च कर्त्तैकः, कल्पनालाघवादिति प्राप्ते प्रतिविधीयते कार्यमात्रस्य कर्तृमात्रगमकत्वाच्च लाघवात्तदेकत्वानिश्चयः, विचित्रप्रासादादेरनेककर्तृकत्वस्य शरीरिकर्तृकत्वस्य च दृष्टत्वात् तथा च कार्यलिङ्गस्य सर्वज्ञे सर्वशक्तिमति एकस्मिन्नपर्यवसानात्कारणविशेषस्य वेदैकगम्यत्वमिती"ति तत्त्व० ।

तोपादानकारणं सर्वज्ञं ब्रह्मेति सिद्धम्। तत्र बिम्बस्थानीयं ब्रह्म मायाशक्तिमत्कारणं जीवाश्च प्रत्येक* मविद्यानुबद्धा इति केचित्। मायाविद्याप्रतिबिम्बितं ब्रह्म जगत्कारणम्। विशुद्धं ब्रह्मामृतत्वालम्बनम् जीवाश्चा* विद्याबद्धा इत्यन्ये। जीवा एव स्वाविद्यया प्रत्येकं प्रपञ्चाकारेण† ब्रह्माविर्भावन्ति। सादृश्याच्च प्रपञ्चैकतावभासो‡ नेत्रैकगतद्वितीयचन्द्रवत्स्वरूपापेक्षया च ब्रह्म सर्वजगत्कारणमित्यपरे। ब्रह्मैकमेव स्वाविद्यया जगदाकारेण विवर्त्तते स्वप्नादिवदिति मतान्तरम्। तस्माद् ब्रह्मैव स्वमायया ऽविद्यया विवर्त्तत इति॥

॥ इति पञ्चपादिकाविवरणे§ सप्तमं वर्णकम्॥

॥ परिसमाप्तञ्च शास्त्रयोनित्वसूत्रं तृतीयम्॥

---

॥ तत्तु समन्वयात्॥

ज्ञानानन्दैकरूपं निखिलजगदुपादानमीशं प्रभूणां
सर्वज्ञं ब्रह्म नित्यं विशदमतितरां निर्गुणं निष्क्रियं च।
एतत्कार्यावसृष्टिं निखिलभववतीं सम्यगुद्धूय|| विद्वा-
त्व्यऽप्रामाण्यं श्रुतीनां श्रुतिभिरिदमजं ज्ञेयमित्युच्यते ऽस्मिन्॥

जगतो जन्मादिकारणं ज्ञानानन्दं ब्रह्मेति च लक्षितम्। तत्र वेदान्ताः प्रमाणमिति ज्ञातम्। तच्चेदं निरूपणीयम्। किं भूतेऽप्यर्थे शब्दः प्रमाणं न वेति। नेति तावदाह कथं पुनर्ब्रह्मण इति। नन्वाक्षेपः किंनिबन्धनः सूत्रप्रामाण्यादित्याह यावतान्नायस्येति।

ननु वेदान्तानामानर्थक्यमुच्यते किं वा क्रियापरत्वमिति। न तावत्क्रियापरत्वम् आदिमध्यावसानेषु तात्पर्य्येण ब्रह्मैक्यपर्यवसानादिति तत्राह यद्यपि प्रदर्शितानीति। तथापि तत्र न सम्भवति प्रामाण्यमित्यर्थः। ननु यत्र शब्दस्य शक्तितात्पर्ये विद्येते तत्र शब्दः प्रमाणम् न विषयविशेषापेक्षं शब्दस्य प्रामाण्यम् विषयस्य शाब्दप्रमितिहेतुत्वाभावादिति तत्राह¶ तत्र



* अविद्यानुबन्धा इति १ पु०।
† ब्रह्माविर्भावयन्तीति १ पु० शोधितम्, ब्रह्माविभाम्यन्तीति २ पु०, ब्रह्म विभाम्यन्तीति ३ पु०।  ‡ नत्रैकरयगतेति १ पु०।  § इति वर्णकसमाप्तिरिति १ पु०।
|| विद्वान प्रामाण्यमिति ३ पु०।  ¶ तत्रेतीति १ पु०।

परिनिष्ठिते वस्तुनीति । अभूदस्ति भविष्यतीत्य*वगम्ये वस्तुन्यसाध्यस्व-
भावे वा वस्तुनीत्यर्थः । † ननु परिनिष्ठितो ऽपि रसो न चक्षुषा गृह्यते नापि
जिह्वया गन्धः तद्वत्परिनिष्ठिते ब्रह्मणि प्रमाणान्तरानधिगम्यतया शब्दैकग-
म्यत्वं किं न स्यात् । न । चक्षुरादीनामितरेतरविषयव्यभिचारवदाऽऽगम-
व्यतिरिक्तप्रमाणानां परिनिष्ठिते वस्तुनि व्यभिचारादर्शनाद् भूतं चेत्प्रमाणा-
न्तरगम्यमेवेति निश्चीयते । ननु तुच्छव्यावृत्ते ऽपि वस्तुनि प्रमाणान्तरगम्य-
ताया व्यभिचाराभावात् कार्यमपि ‡ प्रमाणान्तरगम्यं किं न स्यात् । न । साध्य-
स्वभावत्वात्प्रत्यक्षानधिगम्यतया सम्बन्धाग्रहणात् अनुमानादीनामनवगम्य-
त्वात् § तुच्छव्यावृत्तं प्रमाणान्तरयोग्यमिति च ग्रहणाद्वरं भूतं वस्तु प्रमाणा-
न्तरयोग्यमिति ग्रहणं प्रयोजकस्य निरुपाधिकत्वलाभात् ।

ननु रूपादिहीनत्वाद् ब्रह्मापि प्रमाणान्तरानधिगम्यमेव तथापि परि-
निष्ठितवस्तुत्वात्प्रमाणान्तरयोग्यत्वाशङ्का न व्यावर्तते । अस्ति च प्रमाणा-
न्तरं ब्रह्मस्वरूपविज्ञानम् अतस्तत्संवादाद ऽप्रमाणं वेदान्ताः । ननु पुरुष-
वचांसि प्रमाणान्तरसापेक्षत्वात्तत्संवादविसंवादाभ्यां प्रामाण्यमप्रामाण्यं वा
ऽश्नुवते वेदवचसान्तु पुरुषसम्बन्धाभावात्प्रमाणान्तरानधिगम्यविषयतया
चक्षुरादिवद्ऽनपेक्षमेव प्रामाण्यमिति चोदयति नन्वपौरुषेयत्वादिति । परिह- ८३ १२
रति सत्यं तथापीति । || अयमर्थः । अनपेक्षप्रमाणयोरपि चक्षुःस्पर्शनयोरर्थे वि-
संवादादन्यतरस्याप्रामाण्यवद् ब्रह्मैकत्वश्रुतेरहं मनुष्य इति प्रत्यक्षस्य च पर-
स्परव्याघाताच्छब्दस्याप्रामाण्यमिति । किं चाप्तः खलु लोके प्रमाणान्तरेणा-
र्थमवगम्य परस्मै शब्दं प्रयुञ्जानः श्रोतुः साक्षाद्वा परम्परया वा प्रयोजनप-
र्यन्तमर्थं विवक्षित्वा प्रयुङ्क्ते प्रयोजनानभिसंधाने तात्पर्यादर्शनात् । तच्च प्रयो-
जनं साध्यस्वभावमिति परिनिष्ठितं वस्तु स्वयं न प्रयोजनं नापि क्रियामन-

---

* अवगम्यते वस्तुनीति २, ३ पु॰ ।

† रसादीनां प्रतिनियतेन्द्रियग्राह्यत्वादिन्द्रियान्तरागम्यत्वे ऽपीन्द्रियान्तराविषयत्वं यथा, तद्वद्ब्रह्मणः प्रमाणान्तराविषयत्वे ऽपि शाब्दत्वमविरुद्धमित्यर्थ इति तत्त्व॰ ।

‡ प्रमाणान्तराधिगम्यमिति १ पु॰ ।

§ तुच्छव्यावृत्तत्वस्य प्रतियोग्यधीनसिद्धित्वात्तस्य प्रयोजकत्वे गौरवम्, भूतत्वस्य प्रयोजकत्वे लाघवम् ततो भूतत्वमेव प्रयोजकमित्यर्थ इति तत्त्व॰ ।

|| समतापग्राहिणा स्पार्शनप्रत्यक्षेण विसंवादे चित्रनिम्नोन्नतग्राहिज्ञानं यथा बाध्यते, तथा ब्रह्मैकत्वश्रुतिरपि प्रतीचो ब्रह्मतां बोधयन्ती जात्यजन्मादिधर्मवतो देहस्य प्रतीचैक्यं बोधयतोपजीव्यजातीयकेन प्रत्यक्षेण बाध्यत इत्यर्थ इति तत्त्व॰

पेत्त्य प्रयोजनसाधनमिति न तच्च तात्पर्यहीनः शब्दः प्रामाण्यमश्नुत इत्याह
८३ १३ किंच पुरुषार्थशून्यत्वादित्यादिना । ततो न क्वचिदित्युपसंहरति । किञ्च ।
विधायकपदव्यतिरिक्तानां पदानां सम्भूय प्रमाणान्तरानधिगतवस्तुप्रतिपादनं
न सम्भवति प्रमाणान्तरानधिगतविषये सम्बन्धाग्रहणात् यथासम्बन्धग्रहण-
मर्थप्रतिपादनात् । कार्यस्य तु प्रमाणान्तरानवसेयतया तत्संसृष्टपदार्थानाम-
तद्गोचरत्वाद्युक्ता शब्देभ्यः पूर्वार्थप्रमितिरिति दर्शयति किञ्च प्रत्यक्षाद्यवि-
षय इत्यादिना । यस्मात्सूत्रकारवचनाद्भूतवस्तुप्रतिपादनायोगात्प्रयोजनशू-
न्यत्वादनधिगतार्थताभावाच्च न ब्रह्मणि वेदान्ताः प्रमाणम् तस्मादनर्थका
वेदान्ता इत्युपसंहरति तस्मादिति ।

यत्पुनर्भाष्यकारेणेत्यादेरयमर्थः । न तावद्वेदान्ताः कस्यचित्क-
र्मविशेषस्य प्रकरणे समधिगताः । येन सोऽरोदीदित्यादिवद् विधिस-
मन्वयः स्यात् । ननु सर्वकर्मविधायिवेदैकदेशत्वात्सर्वकर्मप्रकरणं स्यात् ।
न । सर्वेण वेदवाक्येनैकस्य वस्तुनः प्रतिपादनाभावादेकवाक्यतायोगा-
द्धर्मसामान्याभ्याऽप्रतिपाद्यत्वात् । अस्तु तर्हि पर्णमयीवाक्यवत्कर्तृद्वारेण
सर्वक्रतुशेषभूतो ऽर्थवाद इति । नैतद्युक्तम् । स्तुतिप्रतिपादनयोरुपकारा-
भावाद्विपरीत्याच्च । न हि कर्मणां कर्ता नित्यशुद्ध*बुद्धमुक्तस्वभावो निर्गुणो
निष्क्रियो ऽनश्नन्नन्यो अभिचाकशीति † स्तवप्रतिपादनं वा कर्मसु प्रवृ-
त्तावुपकरोति विपरीतं च स्यात् । तस्मान्न कर्मसु वेदान्तानां समन्वयः किं
तु स्वप्रकरणगतसगुणोपासनासु संबन्ध इति भाष्यार्थमनूद्याक्षिपति तदयु-
क्तमिति । ‡ तदापि विशिष्टब्रह्मस्वरूपा § सिद्धिरित्यर्थः । न खलूपासनाशेष-
तया ब्रह्मस्वरूपसिद्धिर्भाष्ये ऽभिप्रेता । किंतूपास्ये गुणप्रक्षेपद्वारेण वेदान्तानां
,, २४ समन्वयो विवक्षित इति परिहरति सत्यमनुमानेति । ननु वेदान्तवा-
क्यानां सगुणोपासनप्रकरणादपि व्युत्थितानां स्वरूपमात्रपर्यवसितानां नोपास-
नासंबन्धो ‖ नापि स्वात्मन्युपासना कल्पयितुं शक्यते ऽश्रुतत्वादिति तत्राह
८४ २ एवं चाध्ययन¶ विधीति । सूत्रं व्याचष्टे तद् ब्रह्म सर्वज्ञत्वादीत्यादिना ।

* बुद्धेति नास्ति १, २ पु॰ । † स्तवः प्रतिपादनमिति २ पु॰ ।
‡ तथापीति १ पु॰ । § असिद्धेरित्यर्थ इति १ पु॰ ।
‖ द्रव्यदेवतासंबन्धस्य यागाविनाभूतत्वाद्यागस्य च नियोगाविनाभावाद्विधिपदं तत्र कल्प्यत इति युक्तम्॰ न च तथात्र किंचित्कल्पकं श्रुतमस्तीत्यर्थ इति तत्त्व॰ । ¶ विधिरितीति १ पु॰ ।

तच्च तात्पर्य्येणेति । अयमर्थः । तात्पर्य्यं नाम तदर्थप्रमितिशेषता शब्दधर्मः । कथम् । विवक्षा तात्पर्यमिति चेत् अर्थप्रमितिं विवक्षित्वा तादर्थ्येन प्रयुज्यमानत्वं शब्दधर्म एव । * तत्रापि तात्पर्य्यं न विवक्षामात्रम् । तच्च तात्पर्य्यं यस्मिन्नर्थे वाक्यस्योपक्रमोपसंहारैकरूप्यम् यस्य चार्थस्य पुनःपुनरभ्यासो यस्मिन्नर्थे फलविशेषसङ्कीर्त्तनमपूर्वार्थप्रमेयता च यत्र चार्थवादोपादानमुपपत्तिभिरुपपादनं चेत्यादीनि लिङ्गानि भवन्ति तस्य वाक्यस्य तस्मिन्नर्थे तात्पर्यमिति गम्यते । न च प्रमेयस्य साध्यतैव तात्पर्यलिङ्गम् पुत्रस्ते जात इत्यादिषु तात्पर्य्यदर्शनात् साध्यस्य च प्रमेयत्वे तात्पर्यसिद्धिस्तात्पर्य्ये सिद्धे साध्यस्य प्रमेयतेतीतरेतराश्रयात् । साध्ये ऽर्थे प्रमिते † प्रतिबन्धनिरासितया पश्चात्तात्पर्य्यमवगम्यत इति चेत् । तथापि साध्यता न तात्पर्यलिङ्गम् ‡ जर्त्तिलयवाग्वा § वा जुहुयादित्यादिष्वऽदर्शनात् । तस्मादुक्तानि तात्पर्यलिङ्गानि वेदान्तानां ब्रह्मणि दृश्यन्ते । तथाहि । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ‖ मैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसीत्युपक्रमोपसंहारयोरैकरूप्येण प्रत्यगात्माद्वितीयरूपं ब्रह्मावगम्यते । तथैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसीति नवकृत्वोऽभ्यस्यते प्रमाणान्तरेण चानधिगतमद्वितीय ¶ ब्रह्मात्मत्वं प्रतिपाद्यते । आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्य इति च निरतिशयपुरुषार्थावाप्तिर्ब्रह्म ** विज्ञानफलमवगम्यते । अनेन जीवेना †† त्मनानुप्रविश्य येनाश्रुतं श्रुतमित्यादि ‡‡ ब्रह्मण्यर्थवादश्चोपादीयते । मृल्लोहतप्तपरशुग्रहणादिदृष्टान्तैः स्वपितिनामनिर्वचनेन च सृष्टिस्थितिसंहारैश्च ब्रह्मात्म §§ कत्वं

---

* तत्र, लोक इति यावत्· लोकेऽपि तात्पर्यं न विवक्षामात्रम्, किन्तु तदर्थप्रमितिशेषत्वम्· इतरथा ऽपौरुषेयवचसि तात्पर्यासंभवादप्रामाण्यं दुर्वारं स्यादित्यर्थ इति तत्त्व० ।

† विषं भुङ्क्ष्वेत्यादेः स्वार्थे तात्पर्यं शून्याद्विषभोजनप्रमित्यनुत्पत्तिदर्शनात्सर्वत्रापि प्रमित्यनुत्पत्तिशङ्कायां तन्निरासार्थं तात्पर्याधिगमो युक्त इति तत्त्व० ।

‡ जर्त्तिलयवाग्वेति, अरण्यतिलनिर्मितयवाग्वेत्यर्थः· अजक्षीरेण जुहोतीत्युपक्रमविरोधाज्जर्त्तिलयवाग्वा जुहुयादित्यादेर्न स्वार्थे तात्पर्यं किन्त्वर्थवादत्वमित्यर्थ इति तत्त्व० ।

§ वाशब्दो नास्ति १ पु· ।

‖ ऐतदात्म्यमिति १ पु· ।

¶ ब्रह्मात्मतत्त्वमिति २ पु· ।

** विशब्दो नास्ति ३ पु· ।

†† आत्मनेति नास्ति ३ पु· ।

‡‡ ब्रह्मणो ऽर्थवादश्चेति ३ पु· ।

§§ ब्रह्मात्मैकत्वमिति १ पु·, कप्रत्ययो नास्ति २ पु· ।

प्रतिपाद्यत इति । तथा तैत्तिरीयके सत्यं ज्ञानमनन्तं ब्रह्म स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्युपक्रमोपसंहारयोः प्रत्यगद्वितीयं ब्रह्मावगम्यते । तथा * सच्च त्यच्चाभवद्यदिदं किंच तदा † त्मानं स्वयमकुरुत यतो वाचो निवर्त्तन्त इति च प्रत्यग ‡ द्वितीयं ब्रह्माभ्यस्यते प्रमाणान्तरेणानधिगतं च § प्रतिपाद्यते ‖ स सर्वान्कामान्समश्नुत इत्यादि च फलं ब्रह्मविज्ञानेऽवगम्यते । सृष्टिश्रुतयश्चाद्वितीयब्रह्मप्रतिपत्त्यर्थवादभूता दृश्यन्ते । तथा कोशपञ्चकोपन्यासेन प्राणनादिव्यापारलिङ्गैश्च ब्रह्मात्मैकत्वं प्रतिपाद्यत इति । एवं सर्वेषु वेदान्तेषु ब्रह्मात्मैकत्वप्रमितौ तात्पर्यलिङ्गानि द्रष्टव्यानि । एवं तात्पर्येण समन्वयात् ब्रह्मैव वेदान्तप्रमेयमिति ।

८४ ५ सम्यगन्वय इत्यादिना सूत्रभागं व्याचष्टे । पदानामन्वय इति संबन्धः । तत्र क्रियाकारकसंसर्गविषविषयतया पदानामन्वयंव्यावर्तयति परस्परानवच्छिन्नार्थानामिति । तत्रो द्विदादिशब्दस्य यजतिसामानाधिकरण्येनोद्भिद्यागमात्रवर्तिनोरुद्भिद्यागशब्दयोरनवच्छिन्नार्थत्वेऽपि नियोगाकाङ्क्षा विद्यते तथेहापि स्यादिति नेत्याह अनन्याकाङ्क्षाणामिति ।

एवं शब्दानां क्रियावाक्येभ्यो वैलक्षण्यमुक्त्वाऽर्थवैलक्षण्यं दर्शयति तत्र क्रियाकारकसंसर्गेभ्यो वैलक्षण्यमाह अव्यतिरिक्तेति । ननु नीलोत्पलवद्भेदाभेदविषयतयाप्यभिधेयाव्यतिरेक इति नेत्याह एकरस इति । तत्रोद्भिद्यागशब्दयोर्यागविशेषैकरसार्थवर्तिनोरप्यर्थस्य नियोगाकाङ्क्षावदिहाप्यन्याकाङ्क्षेति

,, नेत्याह प्रातिपदिकार्थ इति । तत्रापि लिङ्गसंख्ययोरवश्याभ्युपगमनीयतेति नेत्याह मात्रान्वय इति । ¶ जगत्कारणसामान्यानुवादेन तत्र ज्ञानानन्दशब्दावानन्दविशेषं गमयतः । एकसत्यानन्तशब्दा भेदमिथ्याद्वैताभावाभिधानद्वारेण तत्र लक्षणया वर्तन्ते । सर्वज्ञः सर्वशक्तिरित्यादिशब्दाश्चानिर्वचनी-

---

* पृथिव्यादिभूतत्रयं सत्, वाय्वादिभूतद्वयं त्यत्. भावप्रत्ययवेद्यं सत्, नास्तिप्रत्ययवेद्यं त्यदिति वा. तत्, ब्रह्म आत्मानं स्वरूपमायया जगदाकारेण परिणमयामासेति तत्त्व० ।

† आत्मान‸-इति ३ पु. । ‡ अद्वयमिति १ पु. ।

§ तच्छब्दो ऽत्राधिकः १ पु. । ‖ स इति नास्ति १ पु. ।

¶ तत्र वेदे ज्ञानानन्दशब्दौ जगत्कारणसामान्यानुवादेनानन्दविशेषं गमयत इत्यन्वयः. कारणत्वस्य लोकप्रसिद्धत्वाच्च श्रुतिप्रतिपाद्यत्वम्, ज्ञानत्वमानन्दनिष्ठं ज्ञानिनिष्ठत्वात्सत्तावदित्यनुमानाज् ज्ञानव्यक्तेरानन्दव्यक्त्यभेदप्रतिपत्तेरानन्दस्य च ब्रह्मस्वभावत्वाच्च समन्वयविरोध इत्यर्थ इति तत्त्व० ।

यप्रपञ्चोपाधितया तत्र वर्त्तन्ते । अयमात्मा तत्त्वमसीत्यादिशब्दाश्च * मुख्यलक्षणाभ्यां ब्रह्मण्येव वर्त्तन्त इति । सर्वे जगत्कारणविषयाः शब्दा † मुख्यलक्षणोपाधिभिरेकरसमेव ब्रह्म प्रतिपादयन्ति । न चानिर्वचनीयभेदाभावयोः शब्दप्रवृत्तनिमित्तयोः परमार्थसत्यैकरसभेदनिमित्ततेति । अनेकेषां पदानां लक्षणादिद्वारेणैकरसवृत्तितायामुदाहरणमाह तत्र द्विविधा वाक्य‡प्रवृत्तिरेका ब्रह्मात्मनोरेकत्वविषया अपरा सत्यज्ञानादिलक्षणब्रह्मविषया । तत्र प्रथमं ब्रह्मात्मैकत्वे दृष्टान्तमाह सोऽयमित्यादिवाक्यस्थपदानामिवेति । ८४ तत्र सो ऽयं देवदत्त इति पदत्रयस्यैकस्मिन्देवदत्ते पर्यवसानं दृश्यते । तथाहि । प्रत्यभिज्ञायामधिगतमेकत्वं परस्मै प्रतिपादयति सो ऽयं देवदत्त इति । तत्र न तद्देशकालयोरेतद्देशकालयोश्च परस्परैक्यं § प्रत्यभिजानाति भेदप्रत्ययात् । अत एव विशिष्टयोरप्यैक्यं न प्रत्यभिज्ञायते किन्तु सो ऽयमिति विशिष्ट ‖ द्वयोपलक्षितः प्रत्यभिज्ञागोचरः । प्रत्यभिज्ञातं चार्थं परस्मै सो ऽयमिति विशिष्टाभिधायिभ्यां पदाभ्यां स्वार्थैकदेशपरित्यागेनैकदेशलक्षणया देवदत्तस्वरूपैक्यमेव प्रतिपादयति । ननु सो ऽयमिति पदार्थयोर्यदैक्यम् तदेव वाक्येनापि प्रतिपाद्यते चेदनुवादप्रसङ्गः । न च देवदत्तस्यैक्यद्वयमस्ति येन वाक्य ¶ प्रमेयमपरमैक्यं स्यात् । प्रत्यभिज्ञायां तर्हि कथम् । न ह्यभिज्ञयोरवगतदेवदत्ते**क्यव्यतिरिक्तं प्रत्यभिज्ञागम्यमपरैक्यमस्ति । एकस्य कालद्वयसंबन्धः प्रत्यभिज्ञागोचर इति चेत् । कालद्वयसंबन्धिपदार्थो ऽभिज्ञयोरेव सिद्धः परिशेषात्तदैक्यं प्रत्यभिज्ञाविषयः । तत्र चानुवादो दर्शितः ।

स्यादेतत् । क्षणिकत्वपरिहाराय†† तत्प्रत्यभिज्ञाप्रामाण्यं तावद्वक्तव्यम् । तत्र कालद्वयपरामर्शेन तत्संबन्धिपदार्थैक्ये प्रत्यभिज्ञाविषये ऽपि पदार्थभेदप्रतिभासविरोधितैव ‡‡ प्रमाणफलं नाज्ञातार्थाधिगतिः । अतः कालद्वयपराम-

---

* जहदजहल्लक्षणयेत्यर्थः· गङ्गाशब्दस्य तीरे जहल्लक्षणया वृत्तेरात्मादिशब्दानां च जहदजहल्लक्षणयेति वैषम्यमित्यर्थ इति तत्त्व० ।

† अयमर्थः—मुख्यवृत्त्या लक्षणावृत्त्या जहदजहल्लक्षणया उपाधिना चेति त्रिभागो द्रष्टव्यः· ज्ञानानन्दशब्दो व्यक्त्यंशापरित्यागेन मुख्यवृत्त्या वर्त्तते, एकादिशब्दास्तु जहल्लक्षणया तत्त्वमसीत्यादयो जह [दजह] ल्लक्षणया, सर्वज्ञादयस्तूपाधित इत्यर्थ इति तत्त्व० ।

‡ प्रेति नास्ति १ पु·　§ न प्रत्यभिजानातीति पूर्वस्यो नञत्रास्ति १, ३ पु· ।

‖ पदेति अत्राधिकम् १ पु· ।　¶ प्रमेयं परमिति २, ३ पु· ।

** ऐक्यातिरिक्तमिति १ पु· । †† तदिति नास्ति १ पु· । ‡‡ प्रामाण्यफलमिति १ पु· ।

र्थेन तत्संबन्धिपदार्थैक्यमेवावलम्बमाना पदार्थभेदप्रतिभासविरोधितया प्रामाण्यमश्नुते प्रत्यभिज्ञा । एवं तर्हि सो ऽयमिति वाक्यस्याप्येवमेव प्रामाण्यं भविष्यति । तथा तत्त्वमसिवाक्यस्यापि त्वंपदेनैकदेशपरित्यागेन लक्ष्यमाणप्रत्यक्स्वरूपस्य पारोक्ष्यपरित्यागेन तत्पदाभिधेयब्रह्मस्वरूपैक्ये वाक्यजन्यज्ञानगोचरे ऽपि जीवब्रह्मपदार्थप्रतीतिसमये प्रतिपन्नैक्यविषयतयानुवादप्राप्तावपि भेदप्रतिभासविरोधितया प्रामाण्यमुपपद्यत इति । ननु पदार्थयोः प्रत्येकमसाधारणमैक्यं पदार्थप्रत्ययगोचरः पदार्थयोरितरेतरैक्यं * वाक्यगम्यमित्य † स्त्येव प्रमेयभेदः । नैतत्सारम् भिन्नद्रव्ययोरैक्यप्रतिपादने तथा स्यात् । यदेकमेव द्रव्यं भिन्नोपाधिपरिकल्पितभेदप्रतिभासव्युदासेन प्रतिपाद्यते । तदा निवर्त्यविशेषादेव प्रामाण्यं न प्रमेयविशेषात् । तदुक्तम् सिद्धं तु निवर्तकत्वादिति । इह तु कार्यकारणद्रव्यव्यतिरिक्तत्वे सति द्रव्याभिधायिपदयोः सामानाधिकरण्यम् सो ऽयमितिवदेकस्य द्रव्यस्योपाधिपरिकल्पितभेदव्युदासेनैकद्रव्यपर्यवसायीत्यवगम्यते । ननु तत्त्वंपदाभ्यां लक्ष्यमाणपदार्थयोरपि भेदो विद्यते न वा । विद्यते चेत् ऐक्यप्रमितिर्न स्यात् । न चेद्भेदो वाक्यार्थ एव पदार्थः स्यात् । सत्यम् । वाक्यार्थ एव पदार्थः स च लक्षणया प्रतिपाद्यते ‡ मुख्याभिधेयैक्यायोगात् । तस्मात्तत्त्वंपदाभ्यामेकमेव ब्रह्मोपाधिपरामर्शेन प्रतिपाद्यत इति सिद्धम् ।

अत्र केचिदाहुः । लक्ष्यमाणयोरपि जीवब्रह्मणोर्भेदाभेदविषयं सामानाधिकरण्यम् अन्यथापदार्थवाक्यार्थयोः साङ्कर्यात् । अस्ति जीवब्रह्मणोर्भेदो ऽपि य आत्मनि तिष्ठन्नित्यादिलिङ्गात् । नैतद्युक्तम् । भेदाभेदविषयेण वाक्यजन्यज्ञानेन तदभ्यासजन्यापरोक्षज्ञानेन वा स भेदो निवर्त्यते वा न वेति । निवर्त्यते चेत् । कथं विज्ञानस्य स्वविषयनिरासिता । तृतीयज्ञानेनाभेदमात्रविषयेण भेदो निवर्त्यत इति चेन्न । यथाप्रमाणमभ्यासजन्यस्यापि ज्ञानस्य भेदाभेदविषयत्वात् । अन्यथा प्रमाणे ऽन्यथाभ्यासजन्यज्ञाने च भेदाभेदप्रमाणवैकल्यात् । ज्ञाननिवर्त्यत्वेन भेदस्यापि विद्यावन्मिथ्यात्वमपि स्यात् । ज्ञानेनाज्ञानं निवर्त्यते भेदस्तु कर्मभिर्विनश्यतीति चेन्न । ब्रह्म वेद ब्रह्मैव भवतीति ज्ञानप्रयुक्त-

* वाक्यैकगम्यमित्यस्त्येवेति ३ पु० । † अस्त्वेवेति २ पु० ।

‡ त्वंपदस्य वाच्यार्थपरित्यागेन चिल्लक्षकत्वम् तत्पदसामानाधिकरण्ये सति घटते, तथा, तत्पदस्यापि वाच्यांशपरित्यागेन चिल्लक्षकत्वं त्वंपदसामानाधिकरण्य इति न पदद्वयवैयर्थ्यमित्यर्थ इति तत्त्व० ।

त्वादेवकाराभिधेयभेदनिरासस्य। येनैव चाकारेण जीवस्य भेदः तेनैव चेद्-भेदो ऽपि भेदनिवृत्तावभेदो ऽपि निवर्त्तेत। आकारान्तरेण चेदभेदः। तदा निरवयवद्रव्यस्यैकदेशो न कर्मणा निवर्त्तयितुं शक्यत इति भिन्नाभिन्न एव मुक्तावपि जीवः स्यात्। न च भेदाभेदौ शास्त्रेण प्रतिपादनीयौ लोकसिद्धसामान्यतोदर्शनेनैव सिद्धेः। यदि च भेदाकारविशिष्टो जीवः तन्नाशेन नश्येत्। अथ भेदविनिर्मुक्तो जीवः ब्रह्मस्वरूपमेव जीव इत्येकद्रव्यनिष्ठं सामानाधिकरण्यं स्यात्। अथ विशिष्टो जीवो विशेषणनाशे ऽपि स्वरूपावस्थानान्मुच्यत इति। तर्हि यो मुक्तिमनुभवति स एव पूर्वमपि जीवः संसारीत्येकमेव वस्तु सामानाधिकरण्यालम्बनामत्युक्तं स्यात्। तस्मादभिधेयपरामर्शेनैकस्मिन्वस्तुनि लक्षणया वृत्तिः सामानाधिकरण्यमिति। यो ऽपि लक्ष्यमाणजीवब्रह्मणोरऽतिरेकनिमित्तं पदार्थाऽपौनरुक्त्यं कल्पयति तस्यातिरेको भेदवन्निराकर्त्तव्यः एकधैवानुद्रष्टव्यं नेह नानेति श्रुतेः। तस्मादेकस्य द्रव्यस्योपाधिजनितभेदावभासपरामर्शेनैकद्रव्यपर्यवसायि सामानाधिकरण्यमित्येकरसं ब्रह्मेति सिद्धम्।

इदानीं सत्यज्ञानादिवाक्यस्योदाहरणमाह प्रकृष्टप्रकाशशब्दयोरिवेति। ८४ तयोरेकार्थनिष्ठतामेव दर्शयति। तथा च व्यक्तिविशेष इति। अयमर्थः। प्रकाशशब्दः सामान्याभिधानमुखेन लक्षणया व्यक्तिविशेषे वर्त्तते प्रकृष्टशब्दश्च लक्षणया प्रकर्षगुणाभिधानमुखेन प्रकाशविशेषे वर्त्तते। तत्र गुणसामान्ययोश्चन्द्रपदाभिधेयत्वाभावाज्जहल्लक्षणया तदुभयं व्युदस्य तत्समवायिप्रकाशविशेष एव चन्द्रपदाभिधेयतया समर्प्यत इति प्रकृष्टप्रकाशचन्द्रशब्दानामेकार्थवृत्तिता सिद्धा। ननु गुणगुण्यन्वयः क्रियाकारकान्वयो वा किं न * स्यादिति तत्राह एवं च सति नीलोत्पलवदिति। एकमेवाद्वितीयमेकधैवानुद्रष्टव्यं नेह नानास्ति किञ्चन उदरमन्तरं कुरुते अथ तस्य भयं भवतीत्यादिप्रतिषेधादित्यर्थः। तथाविधान्युदाहरतीत्यारभ्य यत्पुनरित्यतः प्राक्तनो ग्रन्थः स्पष्टार्थः।

यत्पुनः सिद्धे वस्तुनीत्युक्तार्थमनुवदति। परिहरति † तद्रूपाद्यसंभवादिति। अयमाशयः। किं प्रमाणान्तरयोग्यत्वे सति तदनुत्पत्तौ  ,, २१

* स्यादित्यत आहेति १ पु०।  † तद्रूपाद्यभावादिति मूलानुकूलः पाठः।

विषयस्याभावे निश्चिते तत्र शब्दस्य मिथ्यात्वमाशङ्क्यते किं वा प्रमाणान्तरसंभिन्नार्थविषयत्वात्पौरुषेयवचोवत्सापेक्षं प्रामाण्यमिति किं वा प्रमाणान्तरयोग्यार्थविषयत्वात्तत्सिद्धार्थानुवादाशङ्केति। तत्र न तावत्प्रथमः कल्पः। प्रमाणेन हि प्रमीयमाणस्यार्थस्य प्रमाणान्तरानुत्पादो मिथ्यात्वं नावहति। सर्वप्रमाणानामनधिगतार्थगन्तृत्वात्। अन्यथा चक्षुषा गृह्यमाणस्य रूपस्य द्रव्यस्य वा स्पर्शनाग्रहणान्मिथ्यात्वशङ्का स्यात्। कथंचित्सापेक्षप्रमाणस्य पुरुषवचसः प्रमाणान्तराभावे मिथ्यात्वाशङ्का स्यात् न * त्वपौरुषेयस्य वेदवचसः अनपेक्षत्वात्।

नापि द्वितीयः कल्पः प्रमाणान्तरसंभिन्नार्थताऽभावात्। भूतार्थविषयत्वेन नदीतीरफलसत्तावाक्यवत् प्रमाणान्तरसंभिन्नार्थतेति चेत् न। पौरुषेय † वचनप्रयुक्तत्वात् सम्भेदस्य। भूतार्थप्रयुक्तत्वे प्रत्यक्षादीनामपि संभेदः स्यात्। ननु भूतार्थस्मृतौ संभेदो दृश्यत इति चेत्। तर्हि स्वार्थप्रवृत्तज्ञानान्तरजन्यता संभेदहेतुः। कार्यभूतार्थनिष्ठयोर्लौकिकवचसोस्तथादर्शनात्। पुरुषो हि प्रमाणान्तरेणार्थमुपलभ्य तन्निमित्तं परस्मै शब्दं विरचयति नतु वेदवचसः प्रमाणान्तरजन्यता इत्यनपेक्षता। किंच। तुच्छ ‡ व्यावृत्तमात्रं प्रमाणान्तरयोग्यमिति विधिवाक्यानामपि संभिन्नार्थतया सापेक्षता स्यात्। लौकिकविधीनां प्रमाणान्तरयोग्यतादर्शनात्। अयोग्यत्वे वा तत्र संबन्धाग्रहणाद्वेद्यर्थप्रतिपत्तिर्न स्यात्। ननु कार्यस्य साध्यस्वभावत्वान्न प्रमाणान्तरगम्यतेति। ब्रह्मापि तर्हि रूपादिहीनत्वान्न प्रमाणान्तरेण गम्यते। स्वरूपज्ञानमेव प्रमाणान्तरमस्ति अतस्तत्संभिन्नतया सापेक्षतेति चेन्न। शब्दजन्यज्ञानविषयस्य चैतन्य § तया प्रमाणफलरूपत्वाच्चैत्यन्यज्ञानसंभिन्ने वा ब्रह्मणि शब्दस्यानपेक्षप्रामाण्यसिद्धिः। पुरुषान्तरतत्संवेदनविषयं पुरुषान्तरानुमानं स्वयंप्रकाशविषयमपि ‖ संभिन्नार्थतया न सापेक्षमिति। तस्मादनपेक्षमपौरुषेयं वचः।

नापि तृतीयः कल्पः। स्पर्शज्ञानयोग्यद्रव्यविषयस्य चक्षुषोऽनुवादकत्वादर्शनात्। शब्दविषयोऽयं नियम इति चेत्। विधिवाक्यस्यापि स्यात् तस्यापि लौकिकस्य मानान्तरयोग्यत्वात्। शब्दावगतस्य वा प्रमाणान्तरमनुवादः

---

* तुशब्दो नास्ति १ पु०। † वचनस्वप्रयुक्तेति १ पु०। ‡ व्यावृत्तिमात्रमिति २ पु०।
§ ज्ञानेति अधिकं ३ पु०। ‖ संभिन्नार्थविषयतयेति ३ पु०।

किं न स्यात् । तस्माद् भूतार्थनिष्ठमपि वैदिकं वचो ऽनपेक्षं प्रमाणमिति । तत्र चोदयति नन्विन्द्रियागोचरत्वादिति । अत्र पृच्छामः । किं प्रमाणान्तरगृ- ८४ २ः हीते ऽर्थे संबन्धग्रहणमात्रमुच्यते किं वा प्रमाणान्तरमपि शब्दार्थे इति । पूर्वस्त्वङ्गीकृत इत्याह यद्यपि शब्दमात्रस्येति । नापि द्वितीयः कल्प इत्याह *व्युत्पन्ना तु कथमिति । ननु प्रमाणान्तरगृहीते ऽर्थे प्रयोगप्रत्ययदर्शनात्तत्संभिन्नार्थज्ञाने शब्दसामर्थ्यं गृह्यत इति नेत्याह †श्रोतृव्यवहारो हि मूलमिति ।

अयमर्थः । ‡शब्दादर्थं प्रतिपद्यमानः §श्रोता किं स्वकीयप्रमाणसंभिन्नं प्रतिपद्यते किं वा व्युत्पित्सुः प्रमाणसंभिन्नमाहोस्विद्वक्तुः प्रमाणसंभिन्नमिति । न तावत्पूर्वौ पक्षौ शब्दादर्थप्रतिपत्तेः प्रागुभयोरपि तस्मिन्नर्थे प्रमाणानुत्पादात् । प्रमाणान्तरेणोपलभ्य तत्र शब्दप्रयोगाद्वक्तुः प्रमाणसंभिन्ने ऽर्थे श्रोतुः शाब्दप्रमितिरिति व्युत्पन्नापि तत्रैव शब्दसामर्थ्यं श्रोतुः प्रवृत्त्या प्रतिपद्यत इति चेत् तत्राह स च श्रोतु॥ज्ञानान्तरानिमित्ततापरिशुद्ध इति । अयमर्थः । व्युत्पन्ना तु प्रत्यक्षादिव्यवहारे प्रवर्तितव्यार्थमात्रज्ञानात्प्रवर्तमानमात्मानं पश्यति न प्रमाणान्तरसंभिन्नार्थज्ञानात् । ततश्च स्वेनैव दृष्टान्तेन श्रोतुः प्रवृत्तिलिङ्गादर्थमात्रज्ञानमनुमिमीते न वक्तुः प्रमाणस्य विषयविशेषणतया ऽवगम्यत्वेन प्रवृत्तिहेतुतां कल्पयति दृष्टान्ताभावात् । अतः प्रमाणान्तरस्य विषयविशेषणत्वेनानवगम्यमानतया प्रवृत्तिं प्रत्यऽनिमित्ततया परिशुद्धः श्रोतुर्व्यवहारः¶केवलार्थज्ञानजन्य इत्यर्थः । **ततः शब्दस्यार्थमात्रज्ञाने सामर्थ्यप्रतिपत्तेर्न प्रमाणान्तरसंभिन्नः शब्दार्थ इत्याह अतो न प्रतिपत्तुर्ज्ञानान्तरसिद्धावबोधकत्वमिति । ननु मा भूच्छ्रोतुः प्रमाणान्तरसंभिन्नो ऽर्थः प्रतिपन्नस्तथापि व्युत्पन्ना संभिन्ने ऽर्थे शब्दसामर्थ्यं प्रतिपद्यत इति नेत्याह तेनानवगम्यैव तद्वि- ८५ षयमिति । प्रवृत्तिहेतुज्ञानविषयतया स्वात्मानुमानेनानवगतस्य मानान्तरस्य

* व्युत्पत्त्येति २, ३ पु० ।

† श्रोतुर्व्यवहार इतीति ३ पु० ।

‡ शब्दार्थमिति ३ पु० ।

§ श्रोता स्वकीयप्रमाणसंभिन्नमर्थं प्रतिपद्यते किं वा व्युत्पत्सुः प्रमाणेति १ पु० ।

|| ज्ञानेति अयमर्थ इति ३ पु० ।

¶ इत्यर्थ इत्यत्र इतिपदं द्रष्टव्यम्· नदीतीरफलसत्ताविषयं यद्वक्तृज्ञानं तद्गोचरेण श्रोत्रसमवायिना ज्ञानेन प्रवृत्तिर्न जन्यत इति टीकार्थः इति तत्त्व० ।

** तत इति, व्यवहारेणेत्यर्थः· ज्ञानान्तरासिद्धो ऽयमर्थ इत्येवंविधमवबोधं शब्दः प्रतिपत्तुर्जनयतीति सामर्थ्यावगमकाले व्युत्पित्सुना नावगतमित्यर्थ इति तत्त्व० ।

न शब्दसामर्थ्यविषयता प्रतिपत्तुं शक्यत इत्यर्थः । नन्वर्थमात्रे संबन्धग्रहणे

८५ २ ऽपि व्युत्पत्त्युत्तरकालं संभिन्नो ऽर्थो बोध्यत इति नेत्याह यथावगमं चेति ।

ननु कार्यविषयाद्वाक्यादसंभिन्ने ऽर्थे युक्तः संबन्धग्रहः कार्यपदव्यतिरिक्तस्य तु शब्दमात्रस्य संभिन्ने ऽर्थे संबन्धग्रह इति न तेषामपि कार्यवाक्ये ऽर्थमात्र संबन्धग्रहणात् । अत्र केचिदाहुः । अर्थासंस्पर्शी शब्द इति ।* तथाहि । अङ्गुल्यग्रे हस्तियूथशतमास्त इत्यादौ न कश्चिदर्थः प्रमीयते । यत्र च प्रमीयते तत्रापि मानान्तरनिबन्धना प्रमितिर्न शब्दनिबन्धनेति ।

अत्र केचित्परिहारमाचक्षते । पुरुषवचसां तु नार्थसंसर्गः प्रमेयः किन्त्वेवमयं वेदेति वक्तृज्ञानमेव प्रमीयते प्रमीयमाणवक्तृज्ञानसामर्थ्याच्चार्थो निश्चीयते । सर्वत्र चाङ्गुल्यग्रादिवाक्येषु भ्रान्ति† मुत्प्रेक्षां प्रमाणं वा वक्तृज्ञानं शब्दः प्रमेयं न व्यभिचरति । तस्मा‡ दर्थसंस्पर्शी शब्द इति । तदयुक्तम् । वक्तृज्ञानस्यानुमानगम्यत्वाच्छब्दप्रमेयत्वाभावादित्याह यदा पुनर्व्युत्पन्नः सन्निति । अयमर्थः । गृहीतसंबन्धो ऽपि सन् प्रमाणान्तरेणार्थमुपलभ्य विवक्षित्वा परस्मै शब्दं प्रयुञ्जानमात्मानं पश्यति§ तेन दृष्टान्तेन|| पूर्वमपि मध्यमवृद्धेभ्यः प्रयोक्तारः प्रयुञ्जानाः प्रमाणान्तरेणोपलभ्य विवक्षित्वा प्रयुञ्जत इत्यनुमिमीते । नन्वेवमपि शब्दसामर्थ्यविषयतयैव प्रमाणान्तरमनुमिमीत¶ इति नेत्याह केवलमिति । शब्दप्रयोगनिमित्ततामेव विवक्षामानान्तरयोः स्वात्मनि पश्यन्नन्यत्रापि तथैवानुमिमीत इत्यर्थः । प्रकरणार्थमनूद्योपसंहरति तस्मान्न

,, ८ शब्दस्येत्यारभ्यापिचेत्यतः प्राक्तनेन ग्रन्थेन ।

किंच । यदि लौकिकवचांसि वक्तृज्ञानमेव गमयन्ति तदा संसृष्टार्थप्रतिपादनसामर्थ्याप्रतिपत्तेर्वेदे शब्दादर्थाधिगमो न स्यात् । किञ्च । न तावद्वक्तृज्ञानमात्रं शब्दार्थः । अर्थे व्यवहारानुदयप्रसङ्गात् । नाप्यर्थव्यापृतं ज्ञानम् । अर्थस्यैव शब्दप्रमेयत्वप्रसङ्गात् ज्ञानस्यानुमेयतयान्यथासिद्धेः । ज्ञानाभिधायिशब्दाभावाच्च** न तस्य वाक्यार्थता पदार्थस्यैव वाक्यार्थत्वात् । ननु पदेभ्यः पदार्थाः†† प्रतीयन्ते संसर्गश्चोत्प्रेक्षयावगम्यते तेन च व्यापृतं वक्तृज्ञानं शब्दार्थ इति ।

* तथापि हीति २ पु॰ ।
† उत्प्रेक्षाप्रमाणं चेति १ पु॰ ।
‡ अर्थासंस्पर्शीति १ पु॰ ।
§ तद्दृष्टान्तेनेति १ पु॰ ।
|| पूर्वमेव मध्यमेति १ पु॰ ।
¶ इतिशब्दो नास्ति १ पु॰ ।
** अत्र नेति पञ्चाधिकं १ पु॰ ।
†† प्रमीयन्त इति ३ पु॰ ।

